# मुद्राराक्षसम् ।

( नाटकम् )

महाकवि-श्रीविशाखदत्त-विरचितम् ।

पण्डितकुलपतिना, बि, ए, उपाधिधारिणा,

श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्येण

विरचितया

तदात्मजाभ्यां

पण्डित-श्रीआशुबोध विद्याभूषण-पण्डित-श्रीनित्यबोध-

विद्यारत्नाभ्यां प्रतिसंस्कृतया टीकया समलङ्कृतं

ताभ्यामेव प्रकाशितम्



षष्ठसंस्करणम्

कलिकातामहानगर्य्याम्

वाचस्पत्ययन्त्रे

मुद्रितम् ।

इं १८३५ ।

चितम् ।

मूल्यं द्वादशानकाधिकमुद्रामात्रम् ।

# मुद्राराक्षसम्।

(नाटकम्)

महाकवि-श्रीविशाखदत्त-विरचितम्।



पण्डितकुलपतिना, बि, ए, उपाधिधारिणा,
श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्येण
विरचितया
तदात्मजाभ्यां
पण्डित-श्रीआशुबोध विद्याभूषण-पण्डित-श्रीनित्यबोध-
विद्यारत्नाभ्यां प्रतिसंस्कृतया टीकया समलङ्कृतं
ताभ्यामेव प्रकाशितञ्च।

सप्तमसंस्करणम्।

कलिकातामहानगर्य्याम्
वाचस्पत्ययन्त्रे
मुद्रितम्।

ई १८७५।

 मूल्यं द्वादशानकाधिकमुद्रामात्रम्।

प्रकाशक—पण्डित-श्रीआशुबोध-विद्याभूषण
तथा
पण्डित-श्रीनित्यबोध-विद्यारत्न।

प्राप्तिस्थान—२न०, रमानाथ मजुमदार ष्ट्रीट्, आम्हार्ष्ट-ष्ट्रीट् पोष्ट-अफिस। कलिकाता।

प्रिण्टर—वि, वि, मुखर्जी।
२ न०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता।

# कविप्रसिद्धिः ।

मुद्राराक्षसं नाम नाटकं विशाखदत्तेन प्रणीतमित्यन्त्यायां पुष्पिकायां प्रस्तावनायाञ्च लिखितम् । कोहल-शाण्डिल्य-धूर्त्तिलप्रभृतिभिर्महाप्राज्ञैः सङ्कलितस्य भरतनाट्यशास्त्रमिति असत्याभिधानप्रख्यातस्य भरतर्षिसंवादात्मकस्य नाट्यशास्त्रस्यातिप्राचीनस्यार्वाचीनेषु नाटकेषु प्रस्तावनायां कविनामकीर्त्तनस्यावश्यकर्त्तव्यत्वात् मुद्राराक्षसप्रस्तावनायाञ्च विशाखदत्तस्य नामकीर्त्तनात् स एवास्य कविरिति न विद्यतेऽत्र सन्देहसम्भावनालेशोऽपि । अस्यां प्रस्तावनायां पुनः कवेः पितामहस्य सामन्तवटेश्वरदत्तस्य पितुर्महाराजभास्करदत्तस्य च नामकीर्त्तनात् अयमेव विशाखदत्तो नाटकस्यास्य कविरिति प्रसिद्धेर्याथार्थ्यं दृढीकरोति ।

अयन्तु कविः स्वजन्मना कं देशं कञ्च कालमलञ्चकारेति न शक्यतेऽवधारयितुं, किन्तु गौड्या रीतेः प्राबल्यादस्मिन् नाटके गौड़देशीयोऽयमिति प्रतिभाति । वटेश्वरशब्देन च वटेश्वरनगरे वटेश्वरस्य शिवस्य वा भक्तजनवृन्दमध्ये अस्य जन्म सम्भाव्यते ।

अस्य कालनिर्णये तु अस्ति महान् विसंवादः ; पाश्चात्याः पण्डिताः खृष्टस्य जन्मनः नवमे शतकेऽस्य प्रादुर्भाव इति कथयन्ति । सुगृहीतनाम्ना काशीनाथत्र्यम्बकेण तैलाङ्गेन चित्तपावनवंशावतंसेन नाऽसौ कविः खृष्टजन्मनः अष्टमशतकादर्वाचीनो भवितुमर्हतीति प्रबलया युक्त्या बहुतरग्रन्थोद्धारेण च निरणायि । अधुना तु शार्मण्यदेशीयेनाध्यापकप्रवरेण हिल्लोब्राण्डेन समस्तभारतवर्षपरिभ्रमणानन्तरं नानास्थानस्थितबहुतरहस्तलिखितपुस्तकसमालोचनेनास्य नाटकस्य सम्यक्

पाठोद्धारः कृतः। पाठोद्धारे च विपश्चितामधुना नास्ति कश्चित् सन्देहः। सुसम्पादितस्य प्रेसुनगरे मुद्रितस्य मुद्राराक्षसस्य भरतवाक्ये "स श्रीमद्बन्धुभृत्यश्चिरमवतु महीं पार्थिवश्चन्द्रगुप्तः" इति पाठदर्शनात् तीक्ष्णबुद्धिना इतिहासरसिकेन श्रीकाशीप्रसादजयस्वालेन नाटकमिदं चन्द्रगुप्तराजसमये रचितमभिनीतञ्चासीदिति स्थिरीकृतम्।

त्रयश्च राजानः चन्द्रगुप्त इति नाम्ना विख्याता आसन्। एकस्तु मौर्य्यः, अस्मात् समयात् द्वाविंशशतवर्षेभ्यः पूर्वं प्रादुरासीत्; स चास्य नाटकस्य नायकः इति न सम्भाव्यतेऽस्य सभायामस्याभिनयः। हूणादीनां बहुतरपरवर्त्तिनां म्लेच्छानां नामोल्लेखादस्मिन् नाटके नेदं तादृशे प्राचीने काले रचितमिति विदुषां परामर्शः।

द्वितीयस्तु चन्द्रगुप्तः गुप्तवंशीयः खृष्टजन्मनः अधस्तात् चतुर्थे शतके पाटलिपुत्रे राज्यमकरोत्, तस्य तद्राज्यं नातिविस्तृतं, न चास्य सभायां पण्डितानां समागमवार्त्ताऽपि श्रूयते। तस्य तु पौत्रः पञ्चमशतकीयचन्द्रगुप्तः आर्य्यावर्त्तव्यापिनो राज्यस्याधीश्वरः आसीदिति बहुतरेषु शिलालेखेषु दृश्यते। स च विक्रमादित्य इत्याख्यां लेभे। तस्यैव सभायां नाटकमिदं तस्यैव सभासदा विशाखदत्तेन रचितमभिनीतञ्च। हूणादयो म्लेच्छास्तत्पूर्वमेव पञ्चनदप्रान्ते उत्पातमकार्षुरित्यपि इतिहासप्रख्यातम्। तेन च भरतवाक्ये "म्लेच्छैरुद्वेज्यमाना भुजयुगमधुना पीवरं राजमूर्त्तेः" इत्यपि सङ्गच्छते इति सर्वमनवद्यम्।

महामहोपाध्याय-

श्रीहरप्रसादशास्त्रिणाम्।

# मुद्राराक्षसनाटकस्य पूर्वपीठिका।

अस्ति मगधेषु कुसुमपुरं नाम नगरम्। तत्र आसीत् महाप्रतापो राजा नन्दो नाम, तस्य च राज्ञः महिषी रत्नावली नाम; तयोरासन् नव सूनवः। कदाचित् नन्दसमृद्धि-लोलुपानां युद्धार्थिनां राज्ञां मन्त्रिणो व्यजिज्ञपन्—"भूपालाः! परमसमृद्धिमान् विचक्षणामात्यो नन्दो निग्रहीतुं न शक्यः, अतोऽस्य अमात्यबलमविचार्य्य देवैः न एतदारम्भणीयं कार्य्यम्" इति। ततस्ते नृपतयोऽब्रुवन्—"भवद्भिः धीमद्भिः एकमत्या अरत्निमितं समं सूक्ष्मं नितान्तरम्यं देवदारु-खण्डमेकं रहसि सुवर्णपट्टिकायां संस्थाप्य मुद्रामुद्रितं विधाय 'किमस्य मूलम्? का वाऽस्य शिखा?' इति विचार्य्य आर्य्येण अस्माकं लेखनीयम्' इति लेख्यं कतिपयतुरगवसनमणि-मुक्तासमेतं महाराजाय नन्दाय प्रेषणीयम्" इति; ते च तस्य तथैवान्वतिष्ठन्।

कदाचित् राजा नन्दः प्रमदवनं प्राविशत्। तत्र प्रविश्य चामरग्राहिण्या सुमङ्गलाऽऽख्यया कयाऽपि किङ्कर्य्या सह चल-दलतरोरधस्तात् अतिष्ठत्। तत्र च तत्फलकणिकां वद-नेन आदाय द्रुततरं गच्छन्तीं पिपीलिकापङ्क्तिमालोक्य सविस्मयः स्मितमकरोत्। सुमङ्गलाऽपि राज्ञः स्मितमवलोक्य स्मितमकरोत्। ततो राज्ञा "कथं त्वया स्मितं कृतम्?" इति अभिहिता सा "न किञ्चित् कारणं मम स्मितस्य, परं महा-राजस्य स्मितदर्शनेन मम स्मितं जातम्" इति अवदत्। ततश्च राजा "मत्स्मितहेतुमविज्ञाय त्वया न स्मितं कृतम्

इति मया ज्ञायते, तत् मत्स्मितहेतुः अवश्यं त्वया वक्तव्यः, नो चेत् वधिष्यामि त्वाम्" इति तां तर्जयामास।

उक्तञ्च—"वृथा स्मितं वृथाऽऽलापं न कुर्य्यात् बुद्धिमान् नरः।
कुर्वन् वै लघुतामेति शक्रतुल्योऽपि भूतले॥"

इत्थं तर्जिता सा गत्यन्तरम् अपश्यन्ती ब्राह्मणम् एकम् अपश्यत्, अवन्दत च तं पादयोः प्रणिपत्य। स च अग्रजन्मा तां नितरां कातरां मृताम् इव उपलक्ष्यमाणाम् अवलोक्य कारणम् अपृच्छत्। सा राज्ञा उक्तं सर्वं न्यवेदयत्। स तु तां "सर्वम् एतदहम् अभिधास्ये, मा भैषीः" इति समाश्वास्य अभाषत—"वत्से! किं किं तत्र अभूत्, सर्वं निवेदय" इति। सा अवोचत्—"ब्रह्मन्! अश्वत्थतरु-तले अश्वत्थबीजमादाय द्रुतं गच्छत् पिपीलिकापङ्क्तिमात्रम् आसीत्, तत्र कियन्तं कालं व्याप्य राजा अपश्यत्, स्थितः" इति।

अथ ब्राह्मणेनोक्तं—"विदितं राजस्मितस्य कारणं, शृणु—'अश्वत्थबीजम् अतिक्षुद्रं क्षुद्राभिः पिपीलिकाभिः वदनेन अपह्रियते, परमेतदेव बीजं कदाचित् गजादिभिः अपि करकलनायोग्यमहत्तरतरुरूपतया परिणंस्यति, तत् विचित्रा विधातुः सृष्टिः' इति स्मितमकरोत् राजा"। सा तु एवम् अभिहिता द्विजेन राजान्तिकमुपेत्य कृताञ्जलिः अभाषत—"देव! चलदलबीजवदनां पिपीलिकालिम् अवलोक्य 'एत-देव बीजं कालवशात् महत्तरतरुरूपं भविष्यति' इति विस्मितः विधातुः अतितरां सृष्टिनैपुण्यमिति स्मितम् अकरोत् महाराजः" इति। ततश्च अतिप्रीतो नृपतिः तस्यै सुमङ्गलायै महार्हरत्नहारं प्रसादम् अकरोत्।

अथ एकदा सभाऽऽसीनं नृपं वेत्रपाणिः दौवारिकः समेत्य प्रणम्य च कृताञ्जलिः सकलसामन्तसम्मत्या समागतदूतदत्तः

सुवर्णपेटिकासमेतानेकतुरगादिवस्तुजातं सानन्दमादाय प्रदर्श्य च राज्ञाऽनुमतः पेटिकामुद्घाट्य तन्निहितदारुखण्डलिखितञ्च सर्वम् अभिधाय परावर्त्तत। ततश्च राजा वक्रनासादिभिः अमात्यैः सह 'किमस्य मूलम्? का वाऽस्य शिखा?' इति विचारयन्नपि न किञ्चित् अवधारितवान्। ततश्च तदज्ञान-जनिताम् उत्सुकताम् आश्रित्य एव धृततत्काष्ठः स्वान्तःपुरमेव प्राविशत्। तत्र च "सुमङ्गलाया एव अस्ति अस्य निगूढार्थबोध-सामर्थ्यम्" इति अवधार्य्य ताम् अवादीत्—"सुमङ्गले! ब्रूहि तावत् किमस्य काष्ठस्य मूलम्? का वाऽस्य शिखा?" इति। सा तु शिरसा प्रणम्य बद्धाञ्जलिः, "देव! क्व प्रमदानाम् एतादृशं बुद्धिपाटवम्? यच्च मया स्मितनिमित्तम् अभिहितं तन्न स्वधिया, परं केनचित् महात्मना मन्मरणोद्यमदर्शनसञ्जातकरुणेन अभि-हितं, मया देवपादमूले निवेदितम्" इति अभाषत।

अथ राजा तदा एव तं महापुरुषम् अन्विष्य मन्त्राऽऽगार-मानीय यथार्हम् अर्चयित्वा अब्रवीत्—"ब्रह्मन्! कं देशम् अलङ्करोति भवान्? किमाख्यश्च?" द्विजः प्राह—"राजन्! भवन्नगरनिवासिनो मणिकारश्रेष्ठिनः चन्दनदासस्य सविधे कृतवसतिः अस्मि सुबुद्धिशर्मा नाम" इति। राजा अब्रवीत्—"द्विजवर! किमस्य काष्ठस्य मूलं, का वाऽस्य शिखेति भवता विचार्य्य अभिधीयताम्"। ब्राह्मणेन उक्तं—"नृपते! किमत्र विचारणीयम्!! सुकर एतस्य अवबोधः; अस्मिन् जले प्रक्षिप्ते योऽस्यांशो जले निमज्जति, स एव अस्य मूलं, यतः काष्ठस्य मूले एव गुरुताऽस्ति, गुरुत्वञ्च निमज्जनकारणम्" इति। ततश्च राजा तदीयबुद्धिसौष्ठवमवगत्य अतिप्रीतः तस्मै प्रधानामात्य-पदवीं दत्त्वा स्वामात्यकृत्ये न्ययोजयत्। अथ कालेन सुबुद्धि-शर्मणः निर्भीकयोद्धृत्वेन 'राक्षसः' इत्यपराऽऽख्या सञ्जाता।

अत्रान्तरे शकटारो नाम कश्चित् सुबुद्धिशर्माणं प्रधानामात्यपदवीम् आरूढं निशम्य सञ्जातेर्ष्यः पर्वतेश्वरदेशसंस्थापितकटकाधिपत्यमपास्य छाया इव राजानं सेवितुम् उपचक्रमे। दैवाच्च राजा ममार। तस्मिन् एव समये विन्ध्यारण्यसन्निधिवासी कश्चित् सुविद्यो नाम जटिलः, नेपालदेशात् नीलकण्ठनामोपाध्यायप्रसादात् आसादितपरशरीरप्राणप्रवेशविद्यः, सुशील-बहुश्रुताभिधाभ्यां सतीर्थाभ्यां सह गुरुदक्षिणायै कल्पितलक्षसुवर्णार्जनाय राजानं नन्दमेव तद्दानसमर्थं मन्यमानः कुसुमपुरम् उपागमत्। अश्रौषीच्च आगत्य एव जाह्नवीतीरे कृताऽऽसनपरिग्रहो राजमरणम्। सोऽचिन्तयत्—"कथमिदानीं गुरुदक्षिणाम् आहरामि? अस्याश्च बहुत्वात् बहुधनिसविधे याचितव्यं, तथात्वेऽपि सम्यक् सिद्धिर्भवति न वा? याचनन्तु जीवन्मरणमेव। उक्तञ्च—

'धनाढ्यसविधे दीनं देहि देहीति यो वदेत्।
क्षपयन्नात्मनः कालं जीवन्नेव न जीवति॥
वरं वृक्षत्वग्भिर्वसनरचनं शैलशयनं
वरं जीर्णारण्ये गलितफलमूलाशनरुचिः।
वरं मृत्युर्लोके, न तु धनमदान्धस्य सविधे
स्खलद्वर्णं लज्जानतमिह मुखं याचनविधौ॥'

अतो याचनमनुचितम्। तत् इदानीं निजविद्याबलेन राजशरीरमनुप्रविश्य सुशीलं याचकं विधाय स्वकार्य्यं साधयामि" इति निश्चित्य सङ्गिनौ अब्रवीत्—"भ्रातः सुशील! त्वमद्य सन्ध्यासमये राजशरीरप्रविष्टस्य मम सकाशं गत्वा गुरुदक्षिणार्थं लक्षसुवर्णानि याचस्व। भ्रातः बहुश्रुत! त्वं मच्छरीरमिदं यत्नतो रक्ष" इत्याख्याय स्वसिद्धविद्याप्रभावेण प्राणान् आकृष्य राजशरीरम् अन्वविशत्। राजा च सद्यः सुप्तोत्थित इव व्यबुध्यत।

ततश्च मन्त्रिणा राक्षसेन सकलनगरमहोत्सवाय प्रासाद-सिंहासने राजानमुपवेश्य महत् मङ्गलमकारि। तस्मिंश्च काले सुशीलम् आगतं दृष्ट्वा राजा तं बहु सम्मान्य गुरुदक्षिणार्थं तेन प्रार्थितः तस्मै लक्षसुवर्णानि प्रादात्। एतदालोक्य मन्त्रिणा राक्षसेन चिन्तितं "राज्ञो गतजीवितस्य सहसा पुनर्जीवनं; जीवितमात्रेण च बहुसुवर्णदानं किमपि अद्भुतमिव प्रतिभाति, मन्ये, केनापि परशरीरप्रवेशविद्याविचक्षणेन स्वेष्टलाभाय आपातत इदम् अनुष्ठितं, परतश्च अनेन पुनः स्वशरीरपरिग्रहोऽवश्यं करिष्यते, तदा च वयं राजरहिता भवामः; अतो राज-शरीरप्रविष्टस्य शरीरं कुत्रापि स्थितं विनाशनीयं, येन अनेन पुनस्तत् न प्रतिपद्यते" इति विचिन्त्य तत्कालमेव तुरङ्गमारूढः इतस्ततोऽन्वेषणाय भागीरथीपरिसरेण गच्छन् "कदा सुविद्यः स्वशरीरमाश्रयेत्" इति चिन्ताव्याकुलं सुशीलं बहुश्रुतञ्च दृष्ट्वा, "अये! स एवायं जनः, यः सुवर्णलक्षाणि परिगृहीतवान्!! दृश्यते च सुवर्णलक्षप्राप्तौ अपि व्यग्र इव; अतोऽत्र एव किमपि आलोकनीयम्" इति विविच्य अश्वात् अवततार, ददर्श च जटिलशरीरमेकम्। "कथमेतत् शरीरम् अत्र पतितं तिष्ठति?" इति पृच्छया यदा सम्यगुत्तरं न अधिगतं, तदा एतच्छरीराधिष्ठाता एव राजशरीरम् अनुप्रविष्ट इति निश्चित्य तच्छरीरं काष्ठादिभिः अदाहि मन्त्रिणा राक्षसेन, तौ च जटिलसहचरौ "कदाचिदेताभ्यां कुटिलाशयाभ्यां कोऽपि उपायः करिष्यते" इत्याशङ्क्य शिलानिबद्धहृदयौ गङ्गाऽम्भसि निक्षिप्तौ।

अथ राजशरीरप्रविष्टो जटिलः स्वविद्याप्रभावेण "शरीरं मेऽनेन मन्त्रिणा राक्षसेन भस्मसात् कृतम्" इति विदित्वा शरीर-वत्सलतया मनःक्षोभम् अगात्। ततश्च कियता कालेन मन्त्रिणा राक्षसेन चिन्तितं—

"मयि प्रवृत्ते किमपि प्रवक्तुं
चित्तं समासज्जति कौतुकेषु।
मयि स्थिते संसदि वक्रनासं
सम्बोध्य सम्भाषणमातनोति॥

इति विरक्त इव लक्ष्यते राजा; प्रायेणायं स्वशरीरविनाशजनितरोष इति मन्ये, अतोऽत्र इदानीम् अस्मदवस्थितिः न उचिता। यतः,—

अन्तकः कुपितो यस्मिन् तदन्तं कुरुते हि सः।
राजा तु कुपितः सर्व-कुलस्यान्तं तनोत्यलम्॥"

इति विचिन्त्य सायं नगरप्रान्तस्थितदेवायतनमहोत्सवदर्शनव्याजेन सकुटुम्बः कुसुमपुरम् अजहात्। ततश्च भागीरथीम् उत्तीर्य्य "सन्निहितदेशाधिपतिः पर्वतेश्वर एव गुणज्ञो माम् अनुग्रहीष्यति" इत्यवधार्य्य तमभ्यगात्।

अथ नीतिरीतिविज्ञानविज्ञाता शकटार एव अमात्यवर्य्यः राजप्रियताम् अगात्। एकदा राजानं मृगयारतिमालक्ष्य शकटारोऽपि तमनुसरन् मृगयाविहारेण भृशमरञ्जयत्। मृगानुसरणक्रमेण राजानमतिनिविड़ारण्यप्रविष्टमश्वमारूढ़मेकः शकटार एव अनुवव्राज तुरङ्गमाधिरूढ़ः; अपराणि सैन्यानि तमनुसर्त्तुं न अशक्नुवन्। ततश्च अमात्यः शकटारो राजानं भृशं क्लान्तं क्षुत्पिपासातुरञ्चालोक्य अश्वादवतीर्णः स्वोत्तरीयवसनाऽऽस्तृते कान्तारैकदेशे समुपवेश्य तस्य पिपासाऽपनयनार्थं पानीयमानेतुमगात्। प्रापच्च इतस्ततोऽन्विष्य जलाशयमेकम्। ततस्तत्र अवगाह्य बिसिनीदलनिर्मितपुटेन पानीयमुद्धृत्य पिबन् यावत् समन्तादवलोकयति स्म, तावत् कामपि एकां कतिपयवर्णावलीविराजमानां शिलां जलमध्ये अपश्यत्। तत्र लिखितमासीत् एतत्—

"अत्युच्छ्रिते मन्त्रिणि पार्थिवे च
विष्टभ्य पादावुपतिष्ठते श्रीः।
सा स्त्रीस्वभावादसहा भरस्य
तयोर्द्वयोरेकतरं जहाति॥

तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम्।
अर्द्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते॥"

ततश्च असौ व्यचिन्तयत्—"केन किमर्थमिदं व्यलेखि? अथवा मदर्थमेव अत्रालेखि विधात्रा,यतोऽहमेव एतादृशोऽस्मि। यदि कदाचित् दुर्दैववशान्मे शिलामिमां राजा स्वयं पश्येत्, तन्नूनं मम प्राणसंशय एव भवेत्; तन्न युक्तमिमां शिलामीदृशीमेव परित्यक्तुम् अन्यत्र वा नेतुं राजनि अत्र स्थिते। तदत्रैव एनां विपरीतां कृत्वा स्थापयामि, कदाचिदसौ राजा अतिपिपासाऽऽकुलतया अत्रैव आगमिष्यति" इति तथाऽकरोत्। ततः पद्मिनीदलपुटेन जलं गृहीत्वा राजान्तिकमाजगाम। राजा तु तज्जलं पीत्वाऽपि पिपासाशान्तिमलभमानः तामेव वापीमवातरत्। तत्र च शीतलसोपानप्रान्तशिलातले निहितचरणः निर्मलं पयः समन्तादवलोकयन् एकतस्तु कलुषितं नीरमालक्ष्य "कथमिदमेवं-रूपम्?" इति तर्कितमतिस्तदन्तर्जले करं प्रसारयामास, पस्पर्श च शिलामेकां सकर्दमाम्; उत्थाप्य तां जलेन क्षालयन् यावत् अवलोकयति स्म, तावत् तत्र लिखितं तदेव श्लोकद्वयमालोक्य अवाचयत्।

अत्रान्तरे मन्त्रिणा "कथमद्यापि राजा चिरयति? मन्ये,सा शिला अनेन अधिगता" इति तर्कयता तदन्वेषणव्याजेन तत्रैव आगतम्। आगत्य च स मन्त्री तत्र तं राजानम् आकृष्टशिलालिखितश्लोकदत्तदृष्टिं तदर्थाऽऽलोचनव्यग्रमानसम् अवलोक्य "मम एवायमनर्थ आपतितः" इति समचिन्तयत्—

"स्वयं गते जगन्नाशं गतमेव न संशयः।
स्वयं जीवति तत्सर्वं जीवतीत्येव निश्चयः॥
धर्मार्थकाममोक्षाणां कारणं स्वस्य जीवनम्।
तस्य सत्त्वे त्वधर्मोऽपि परिहर्तुं लघुर्भवेत्॥
अश्वमेधसहस्राणि वाजपेयशतानि च।
आत्मत्राणतुलां यान्ति नैव विज्ञानकोटयः॥"

एवं विचिन्त्य तामेव महाशिलां राजशिरसि पातयामास। दृष्ट्वा च राजानं गतजीवितं तं वाजिनं कस्मिंश्चित् कान्तारे विमुच्य तस्मात् अतिदूरमभिगच्छन् राजान्वेषणमिव कुर्वन् विचचार। ततश्च सैनिकेषु समागतेषु तान् राजवृत्तान्तं पप्रच्छ। तैश्च "राजा न प्राप्तः" इति निगदितो दुःखित इव तैः सह समन्तात् काननानि परिभ्रमन् दुःखाभिभूत इव नगरं प्रत्यागमत्।

आगत्य च तत्र राजानमदृष्ट्वा सर्वासु दिक्षु तदन्वेषणाय लोकान् प्रास्थापयत्। पुनश्च स्वयं सैनिकैः परिवृतो राजान्वेषणार्थं काननानि पर्यटन् तमेवाश्वं लेभे, न तु राजानम्। ततः सर्वे प्रत्यावृत्य सुदुःखिताः नगरमेव शोकाम्बुधौ न्यमज्जयन्। शकटारस्तु "हा राजन्! क्वासि? देहि मे प्रतिवचनम्" इति नितरां शोकाऽऽकुल इव उच्चैश्चक्रन्द। सर्वैश्च तदनुजीविभिः प्रतिबोधितोऽपि प्राणत्यागाय नाम मतिमकरोत्।

अथ रोदिति सावरोधे कुसुमपुरजने वक्रनासादयो मन्त्रिणो मिलित्वा तं शकटारं प्रबोध्य नव नन्दकुमारान् सान्त्वयित्वा मृतस्य राज्ञः और्ध्वदेहिकमकारयन्। शुभे च दिने ज्येष्ठं राजसुतं राज्ये अभ्यषेचयन्। अपरे च राजनन्दनाः तं ज्येष्ठं पितरमिव उपचेरुः। एकदा असौ नवो नृपतिः सवयोभिः उपवने विहरन् कस्यचित् तरोस्तले उप-

विष्टः पितृनिधनजनितचिन्तया व्याकुलितः शकटारे अनुपस्थिते वक्रनासादीन् मन्त्रिणोऽपृच्छत्—"आर्य्याः! पिता अस्माकं क्व गतः? किं वा तस्य वृत्तम्? भवन्तः सविशेषं मम निवेदयन्तु" इति। ततस्तैः उक्तं—"राजन्! एकदा देवस्य पिता अमात्यशकटारेण सह मृगयार्थं महावनम् अगात्। तत्र इतस्ततः परिभ्रमन्तौ तौ पार्श्वचरसैनिकवृन्दपरिभ्रष्टौ बहुदूरम् ईयतुः। ततः किञ्चित् कालानन्तरम् अमात्यः शकटारो 'न क्वापि राजा प्राप्तः' इति समागत्य नगरे प्रख्याप्य पुनः अन्वेषणार्थं गतस्तत्तुरङ्गममेव आनीतवान्; एतावन्तमेव वयं वृत्तान्तं जानीमः" इति।

राजा एतदाकर्ण्य नानावितर्काऽऽकुलतया क्षणं तूष्णीमासीत्। ततश्च उत्थाय रहसि विचारचतुरान् विश्रम्भभाजनचारजनान् आहूय "क्व गतः तातः? किञ्च अस्य सञ्जातम्? एतत् रहस्यमन्विष्यन्तु भवन्तः, अन्वेषणे सम्पन्ने भवतः सम्यक् परितोषयिष्यामि" इति समाज्ञाप्य स्वयमन्तःपुरमगात्। ते तु किञ्चिदितस्ततो मार्गमाणाः अलब्धराजवृत्तान्ताः समागत्य प्रोचुः,—"देव! कश्चिदपि न अस्माभिर्ज्ञातो राजवृत्तान्तः" इति। ततश्च राजा कुपितस्तान् "भवद्भिर्येन केनापि उपायेन एतन्निगूढवृत्तमानेतव्यं, नो चेत् युष्माकं प्राणदण्डं विधास्यामि" इति भयमदर्शयत्।

अथ तेऽतिभीताः स्थलेषु जलेषु च विविधोपायेन अन्वेषणमकुर्वन्। तेषु कश्चित् स्थविरः नगरोपान्तवर्त्तिनः सरसस्तीरे समासीनं कमपि तापसवेशं पथिकमद्राक्षीत्। तापसश्च तमुद्विग्नरूपं दृष्ट्वा वृत्तान्तमपृच्छत्। वृद्धेनोक्तं—"वयं राजाज्ञया मृगयागतस्य तत्पितुः अन्वेषणार्थं नानाविधान् उपायान् अकार्ष्म, परम् अकृतार्था एव। अकृतार्थांश्च अस्मान् समागतान् पार्थिवः प्राणदण्डेन योजयिष्यति" इति।

तदाकर्ण्य स तापसस्तं स्थविरमब्रवीत्—"तात! समाश्वसिहि, गच्छ, सत्वरं राजानं निवेदय—'अस्ति कश्चित्तापस एतद्वृत्तान्तप्रणिधाननिपुणः' इति"। तदाकर्ण्य तेन वृद्धेन हर्षोत्फुल्लचित्तेन सत्वरं राजसदनमभ्येत्य राजाऽभिदधे—"देव! अद्य दिवसावसानसमये मया कश्चित् तापसो दृष्टः। स तु मामलब्धराजवृत्तान्तं विषादपूर्णमालोक्य कृपया श्रुतसर्ववृत्तान्तः'नय मां राजसन्निधिम्, अहमेतद्वृत्तान्तवर्णने शक्तः' इत्याचष्ट। तच्छ्रुत्वा अहं सत्वरमेव देवपादमूलमागतः, परं देवः प्रमाणम्" इति। ततश्च राज्ञा "शीघ्रमानय तं तापसम्" इत्युक्ते तेन अविलम्बितमेव आनीतः स तापसः राजसमीपमगच्छत्। तमागतमभिप्रणम्य समुचिताऽऽसने समुपवेश्य "भगवन्! तातवृत्तान्तविज्ञानानितान्तचिन्ताऽऽकुलतया अनया प्रभूतया राज्यश्रिया अपि निमिषमात्रमपि न विश्रान्तिसुखं प्राप्नोमि, 'कं शरणं यामि इदानीम्?' इति चिन्तयन्नेव चिन्तामणिमिव भवन्तं समासादितवानस्मि" इत्यवसितवचने एव नरपतौ स तापसः "स्वसमीहितं सिद्धमेव अवेहि, परश्वः सर्वमावेदयिष्यामि" इत्यभिधाय सरस्तटमगात् राजा च अन्तःपुरम्।

अथ तापसः "केनाप्युपायेन अयमर्थः शीघ्रं निर्णेय एव" इति चिन्तयन् वीरसाधनं सस्मार। बद्धपरिकरश्च प्रातरुत्थाय तं स्थविरं तदुपयोगिद्रव्यासादने न्ययोजयत्। स्वयञ्च श्मशाने शूलाऽऽरोपितं पुरुषमेकं सङ्गृह्य सायं गङ्गाजलेन संस्नाप्य चितामिकामासिच्य तत्र कृतार्चनं विहितसिन्दूरतिलकं रक्तचन्दनचर्चितं रक्तकरवीरदामनिबद्धप्रत्यङ्गं सताम्बूलवदनम् उत्ताने संस्थाप्य चरणयोर्हस्तयोः शिखायाञ्च तत्तन्मन्त्रैः पञ्चभिः कीलकैः कीलयित्वा, मत्स्यमांसाद्यनेकबलिपूजोपकरणानि आसाद्य, विस्रंसितचिकुरभारो वामकरकलितनरकपालमालः

क्षतसिन्दूरतिलकः रक्तचन्दनकृतानुलेपनो रक्तपुष्पमाला-विराजितकण्ठनालः करतलकलितललितकरवालः ताम्बूलवदनः साञ्जननयनो दिग्वासाः तच्छवहृदयबद्धवीरासनो दिग्बन्धात्म-रक्षादिकं विधाय विगतभीः दिक्षु विदिक्षु च क्षेत्रपालादिभ्यो बलीन् विकीर्य्य तिरस्करिणीं नमस्कृत्य महाकालीं ध्यात्वा निशीथे मन्त्रमजपत्। ततश्च अनेकसिद्धिविध्वंसिघोरनाना-रूपभूतप्रेतपिशाचादीन् तत्तद्बलिभिः तत्तद्विद्याप्रभावैश्च निरा-कुर्वन् मन्त्रवर्णावलीपाठपरः सहसा यामिनी-चरमयामे प्रचण्डमार्त्तण्डमण्डलमिव प्रबलबहलकालानलमिव तेजो-राशिम् अपश्यत्। ततश्च देवीपादपद्मनिबद्धचेतस्तया अविचलित-मतिः क्षणेन भ्रमद्भ्रमरमन्दारदामनिबद्धकुटिलकुन्तलां बहुलरत्नराजिविराजितानेकरविसम्भारभासुरकुण्डलां गृहीत-दिव्यताम्बूलरागप्रतिफलनद्विगुणितरक्तिमारञ्जित-गण्डमण्डलां बालाऽऽतपविडम्बिसिन्दूरभारललिततिलकां सस्मितवदनचन्द्रां देवीं भद्रकालीं ददर्श। दृष्ट्वा दण्डवत् प्रणम्य च तेन संस्तुता सा "वत्स! परितुष्टाऽस्मि, वरं वृणीष्व" इति तमवादीत्। ततस्तेन "मातः! भूपतेर्नन्दस्य किं वृत्तम् आचक्ष्व" इति वरं प्रार्थिता महादेवी समभाषत—"भद्र! अस्ति अत्र नगरोपान्तवर्त्ती पातालकन्दरो नाम महीधरः; तस्य दरीपरिसरे वटविटपिसविध-वर्त्तिन्या वाप्या जलान्तर्निहितशिलातलोल्लिखितश्लोकद्वयाभि-प्रायदत्तचित्तो महीपतिः अमात्येन शकटारेण महाशिला-निपातनेन व्यापादितः। तत्रैव अद्यापि तदीयसर्वाङ्गीणाभर-णानि अस्थीनि च सन्ति" इत्यभिधाय सद्यः तिरोदधे।

अथ स तपस्वी तेन वृत्तेन सह सद्य एव राजसदनमया-सीत्, अब्रवीच्च तं राजानं—"देव! विदितं सर्वं देव्याः कृपया, परं न शक्नोमि निवेदयितुं, यतः स्वायत्तसिद्धयः परायत्तसिद्धयः

उभयायत्तसिद्धयश्च राजानो भवन्ति ; तेषु भवान् परायत्त-सिद्धिः एवासि । अयञ्च वृत्तान्तः सर्वोऽपि तं परमेवानुधावति” इति। ततश्च राज्ञा “स्वायत्तसिद्धिरेव अस्मि इति निःसन्देहमव-गच्छ” इत्यभिहितः स तापसः सर्वं देव्युक्तं न्यवेदयत् । तदाकर्ण्य राजा अतिचमत्कृतः स्वाभरणानि रत्नानि च बहूनि तस्मै पुर-स्कृत्य तं तापसं वृद्धसहितं शिलामाभरणादिकञ्च आनेतुं प्राहि-णोत् । तौ च परेद्युर्देव्युक्तवर्त्मना गत्वा तत् सर्वमादाय राज्ञे समर्प्य स्वावासमगच्छताम् । ततो नृपतिः “तान्येव राजाभरणानि” इति कञ्चुकिवदनात् विज्ञाय शिलातलोल्लिखितश्लोकद्वयार्थमवधार्य्य पितुश्चोभयायत्तसिद्धित्वमवगम्य अमात्यशकटारेणैव इदमनु-ष्ठितमिति जानन् शिलाम् आच्छाद्य वक्रनासादीन् आहूय सर्वं तद्वृत्तान्तमाख्याय शकटारं हन्तुमादिशत् । ततोऽमात्यशकटा-रम् आहूय तस्मै सर्वं तत्कृतमाख्याय कालकायनामानं भृत्यम् आहूय आज्ञापयत्—“कालकाय ! अतिगह्वरम् एकं भूगर्त्तं विधाय सपुत्रकलत्रमेनं दुरात्मानं तस्मिन् निक्षिप्य अष्टाङ्गुल-मितेन तद्द्वारेण पञ्चपञ्चकमितान् पुराणचणकान् तन्मितञ्च जलं प्रत्यहं दातव्यं, यथा च तत्र न कोऽपि गच्छेत् तथा विधातव्यञ्च” इति । कालकायश्च तथैव तत् सर्वमन्वतिष्ठत् ।

अथ राजा वक्रनासादिभिरेव राजकार्य्याणि अपश्यत् । शकटारस्तु तथाविधबन्धनागारनिक्षिप्तः नितरां दुःखितः सङ्कट-वर्म-विकटवर्म-सुमति-मित्रगुप्त-प्रकटार-विकटाराख्यान् षट् पुत्रान् अभाषत—“पुत्राः ! समुत्पन्ने ईदृशे व्यसने स्फुरति कश्चि-दुपायो येन प्रतिविधानं कर्त्तुं शक्यते ?” ततस्तेषु “कतिपय-निमेषश्वासवतामस्माकं न स्फुरति कोऽपि उपायलेशः, किञ्च, तथाविधक्षतातिपातकानां युक्तैव एतादृशी गतिः” इति वदत्सु विकटारः समुत्पन्नमतिः सक्रोधम् अब्रवीत्—“भ्रातरः ! आत्म-

स्वार्थपरायणेन तातेन तादृशमकार्य्यमपि कृतं, परं तत्तनयो राज्य-प्रदानपरिपोषणादिना वर्द्धितः इति कथं पातकिनो वयम् ? किञ्च, कृतघ्नेन अमुना निरपराधा वयमपि नीयामहेऽन्तकसदनं, तदत्र स्वस्वबुद्धिविभवेन प्रतिविधानं भावनीयमेव" इति । ततः शकटारो विकटारमेव प्रतिविधानक्षमं विज्ञाय तान् चणकान् तत् जलञ्च तज्जीवनाय एव प्रकल्प्य स्वयं सपुत्त्रकलत्रः क्रमेण प्राणान् जहौ । विकटारस्तु राजापकारचिन्तनावगणितशोकः कथञ्चित् तावन्मात्रवृत्तिः कालमत्यवाहयत् ।

एकदा राजा "का गतिरिदानीं शकटारस्य ?" इति काल-कायमपृच्छत् । तेन च कालकायेन, "देव ! तावन्मात्राः चणकाः तत् जलञ्च मया तेन रन्ध्रेण दीयते इति एतावन्मात्रं ज्ञायते ; नान्यत्" इति निवेदितम् । ततो नृपतिना भूगृहद्वारमुद्घाट्य "कोऽत्र जीवति इति अवधार्य्यताम्" इति समादिष्टः कालकायः सर्वाणि मृतकाष्ठीनि इतस्ततो दृष्ट्वा अस्थिचर्मावशेषं विकटा-रञ्च "देव ! सर्व एव मृताः, परमेकोऽस्थिचर्मशेषो हृतनिमेषः निश्वासोपलब्धजीवनो वार्त्तास्तिष्ठति" इति न्यवेदयत् । तदाकर्ण्य राजा सञ्जातकृपः तं बालकमानाय्य बन्धनात्, जीवनमात्रमन्नं तदर्थम् आज्ञापयत् । स च तेनैव अन्नेन स्वगृहे स्थितः कालं निनाय ।

अत्रान्तरे मन्त्रिराक्षसो व्यचिन्तयत्—

"किं देशान्तरलब्धवैभवचयैः सर्वाधिकैः सर्वदा
यत्रात्यन्तिकबान्धवमित्रसुहृदां दृष्टिर्न सञ्जायते ? ।
किं वाऽनेन महत्तरेण महसा तत्राधिकारेण वा
यत्र द्वेषिजनस्य काऽपि निष्कृतिः कर्त्तुं न वा शक्यते ? ॥

भिक्षाऽटनादिक्लेशविशेषकृशतरदेहदाहजनितबद्धवैरः सकल-सम्पत्तिभोगयोग्यराजशरीरसंवाससंस्थापनारूपोपकारानभिज्ञो

राजा तन्मतवर्त्ती शकटारश्च निधनमगात्। तत्तनयश्च उदग्रधन्वा नन्दः सर्वामपि महीं स्ववशां कर्त्तुकामः सदृशरूपममात्यं मृगयते। तदस्मात् निष्क्रम्य सकलसुहृद्वरशिरोमणिचन्दनदास-शकटदासाद्यधिष्ठितं कुसुमपुरमेव समाश्रयणीयम्" इति विविच्य पर्वतेश्वरमनुमान्य कुसुमपुरमगात्। ततश्च नन्देन अमात्यराक्षसमागतं विज्ञाय "पैतृकोऽयममात्यवर्य्यः" इति तं प्रधानामात्यपदवीमध्यारोहयत्। स च यथोचितं सर्वं राजकार्य्यमकरोत्। विकटारस्तु तादृशं महाप्रभावशालिनं मन्त्रिराक्षसमेव भृशमुपचचार। तदुपचारेण अतिप्रीतो राक्षसस्तस्मै पारितोषिकं किञ्चित् दातुमैच्छत्। स च "अमात्य! नाहं पारितोषिकार्थी, राजसंसारे सर्वमेव त्वदधीनं, तदहमेकमधिकारं लब्धुमिच्छामि" इति व्यज्ञापयत्। अमात्यराक्षसश्च तस्मै "एकमधिकारं दास्ये" इति प्रतिशुश्राव।

एकदा राज्ञः पितृश्राद्धदिनमागतं दृष्ट्वा मन्त्रिराक्षसस्तं श्राद्धभोक्तृब्राह्मणनिमन्त्रणार्थं न्ययोजयत्। विकटारस्तु "तथा" इति मन्त्रिण आदेशं शिरसा आदाय "समयोऽयमस्मत्प्रतिहिंसायाः" इत्यवधार्य्य तुरगाधिरूढः समन्तात् तादृशं विप्रमन्विष्यन् प्रान्तरदेशे दीर्घदन्तुनिहततेजसम् अशीतिवर्षदेशीयं करालकुटिलविरलदशनं भ्रूकुटिकेशनिषेवितपिङ्गलनयनं प्रवृद्धश्मश्रुविकटवदनं पिङ्गलोर्द्धकेशं कुत्सितवेशमतिकुत्सितरूपं कुशोन्मूलनाय तन्मूलेषु माक्षिकप्रक्षेपणव्यग्रकरं कमपि तापसम् अद्राक्षीत्। दृष्ट्वा च तं "प्रायेण अयं महत्तरोद्योगभागिव लक्ष्यते" इत्यवधार्य्य तुरङ्गादवरुह्य प्रणम्य कृताञ्जलिः अभाषत—"भगवन्तः! के यूयम्? किमभिधानं श्रीमताम्? कथञ्च एतस्मिन् कान्तारदेशे तीव्रसन्तापवति मध्याह्नसमये किमिदमनुष्ठीयते? यदि न रहस्यं श्रोतुमिच्छामि"। तदाकर्ण्य स तापसः,—"किमनेन

कार्य्यप्रतिबन्धिना आलापेन ?" इति वदन्नपि पुनःपुनस्तेनोपरुध्यमानः करेण कुशोन्मूलनं कुर्वन् एव अब्रवीत्—"ब्राह्मणोऽहं विष्णुगुप्तो नाम शिवगुप्ततनयः ; एकदा मे तातः स्नातुं भागीरथीतीरं गच्छन् कुशाङ्कुरविद्धचरणस्तज्जनितक्षतवेदनयैव परलोकमगात्। अत "इमे कुशा मच्छत्रव एव" इति एतान् उन्मूलयितुम् एतन्मूलेषु माक्षिकं प्रक्षिपामि, येन तदाकृष्टाभिः पिपीलिकाभिः एतन्मूलपर्य्यन्तध्वंसः कर्त्तव्यः, इत्थं क्रमेण अखिलां महीं निष्कुशां करिष्यामि इति सङ्कल्पवशात् एतदनुष्ठीयते" इति। विकटारः तदाकर्ण्य "यदि अनेन सह कथमपि राज्ञो विरोधः स्यात्, तदाऽनेन राजा समूलम् उन्मूलनीय एव, सम्भाव्यते च एतादृशेन कुरूपेण दृष्टेन एव राज्ञः कोपः। कुपितश्चैनं यथोचितमवमंस्यते, तर्हि मम इष्टसिद्धिः अवश्यम्भाविनी" इति निश्चित्य तम् अवोचत्—"ब्रह्मन्! भविता किल श्वः कुसुमपुराधिराजस्य नन्दस्य पैतृकं कृत्यं, तत् भवन्तमहं निमन्त्रयामि तत्र भोक्तुम्"। अथ तापसः तादृशनिमन्त्रणप्रत्याख्यानम् अनुचितं मन्वानः "किमिदमस्मत्कार्य्यविघ्नम् उत्पादयसि !!" इति विरक्त इव, "भवतु, श्राद्धसमये एव अहं गमिष्यामि, न पूर्वं, न वा गमनात् परं क्षणमपि विलम्बं सहिष्ये" इति आख्याय विरराम। विकटारस्तु "तथा" इति तं प्रणम्य प्रजविततुरगः कुसुमपुरम् अगात्, न्यवेदयच्च मन्त्रिणे राक्षसाय "ब्राह्मणो निमन्त्रितः" इति।

ततश्च निर्द्धारिते दिवसे मध्याह्नसमये सुसज्जितश्राद्धवेलायां समागतं विष्णुगुप्तं योग्याऽऽसने समुपवेश्य विकटारः परावर्त्तत। राजा तु अन्तःपुरात् कृतनित्यक्रियः समागत्य श्राद्धमण्डपे सहसा तथाविधं विकटाकारं ब्राह्मणं श्राद्धभोक्तुः आसने समुपविष्टम् आलोक्य सञ्जातरोषः,—"नास्ति किं क्षितितले कश्चित्

ब्राह्मणः, येन ईदृशोऽत्र आनीतः !! अपसार्य्यताम् एष विरूपः, नाहम् एनं श्राद्धभोक्तारं कर्त्तुम् इच्छामि" इति उच्चैः अभाषत। तदाकर्ण्य विष्णुगुप्तः प्रलयकाल इव क्रोधप्रज्वलितः सहसा आसनात् उत्थाय भूमौ पादम् आहत्य "धिङ्मूर्ख राजापसद ! न जानासि माम् ? अनुभव इदानीमविनयस्य फलम् !! शृण्वन्तु सर्वे—

मध्येऽस्मिन् निलये हि सर्वविदुषां मूर्द्धाऽभिषिक्तस्य मे
यत्रासीदवमानना तदधुना स्तोमं कुशानामिव।
यावन्नन्दकुलं कलङ्कमलिनं नोन्मूलये मूलतः
तावत् श्रीशिवगुप्तलालिततनुर्बध्नामि नाहं शिखाम् ॥"

इत्यभिधाय "अस्ति कश्चिदत्र य एतत्प्राज्यराज्यकामः ? समायातु मया सह" इति वदन् राजसदनात् उपावर्त्तत। तस्मिंश्च समये चन्द्रगुप्तो नाम अस्य राज्ञः पितुर्दासीपुत्त्रः मनसि व्यचिन्तयत्—"सति नन्दान्वये न कथमपि मम राज्य-लाभसम्भवः कदाचित्, यदि दैवादस्य महातेजसो ब्राह्मणस्य प्रसादात् आसाद्यते राज्यं, तन्महत् प्रयोजनं सेत्स्यति; असिद्धार्थश्चेत् अन्यत्रापि स्थित्वा कथमपि कालं क्षपयिष्यामि; तदनेन सह एव गमनम् उचितं मे" इति विचार्य्य तं ब्राह्मण-मन्वगात्। भद्रभट-पुरुषदत्त-डिङ्गुरात-बलगुप्त-राजसेन-भागु-रायण-रोहिताक्ष-विजयवर्माणश्च तदनुचराः तमन्वगच्छन्। विष्णुगुप्तः तैः अनुगम्यमानो गङ्गामुत्तीर्य्य व्यचिन्तयत्—

"उचितमनुचितं वा कुर्वता कार्य्यजातं
परिणतिरवधार्य्या यत्नतः पण्डितेन।
अतिरभसकृतानां कर्मणामासमाप्तेः
भवति हृदयदाही शल्यतुल्यो विपाकः ॥

कथमेतत् कार्य्यं सेत्स्यति ? अथवा अलमनया चिन्तया,

यतः,—हस्ती स्थूलतरः स चाङ्कुशवशः किं हस्तितुल्योऽङ्कुशः ?
दीपे प्रज्वलिते विनश्यति तमः किं दीपमात्रं तमः ?।
वज्रेणाभिहताः पतन्ति गिरयः किं वज्रतुल्यो गिरिः ?
बुद्धिर्यस्य गरीयसी स बलवान् स्थूलेषु कः प्रत्ययः ? ॥
कोऽहं कौ देशकालौ समविषमगुणाः केऽरयः के स्वपक्षाः ?
कुत्रेमे कार्य्ययोगाः रिपुसमसुहृदां कीदृशः शक्तिसारः ?।
सम्पत्तौ कोऽथ बन्धुः प्रतिहतवचनस्योत्तरं किन्नु मे स्यात् ?
इत्येवं कार्य्यसिद्धाववहितमनसो नावसाद्या भवन्ति ॥

किञ्च, सहायबलेनैव सुबुद्धिरपि रामो दशाननं जित्वा तदनुजाय सेवासन्तुष्टो लङ्काराज्यमदात् इति सहायान्वेषणं प्रागेव कर्त्तव्यम्। तदिदानीं मन्त्रिणा राक्षसेन परित्यक्तं पर्व्वतेश्वरमेव मत्प्रणीतनीतिशास्त्रप्रदर्शनेन स्वायत्तं करोमि; स च राज्यार्द्धलाभप्रोत्साहितो मया अवश्यमेव साहाय्यं करिष्यति" इति विचार्य्य पर्व्वतेश्वरसकाशम् अगच्छत्।

अस्मिन् एव क्षणे विष्णुशर्म्मानामकं निजसुहृदं जीवसिद्धि-नामकं क्षपणकवेशं विधाय ज्योतिर्विद्याबलेन अमात्यराक्षसेन सह कृतमैत्रीकं कुसुमपुरम् एव समीहितसिद्धये प्राहिणोत्; न्ययोजयच्च सिद्धार्थकं नाम पुरुषं शकटदासेन कृताकृत्रिममैत्रं तदन्तिक एव स्थातुम्। स्वयञ्च पर्व्वतेश्वरं "राज्यार्द्धं दास्यामि" इति प्रलोभ्य तदीयबलसमुदायपरिवृतः कुसुमपुरम् उपरोद्धुम् उद-चलत्। तस्मिंश्च अवसरे भागुरायणो विष्णुगुप्तेन मन्त्रितो मलय-केतुना पर्व्वतेश्वरपुत्त्रेण मैत्रीमकरोत्। भद्रभटादयश्च मलयकेतोः कुमारसेवकेन शिखरसेनेन सह कृतमैत्रीका आसन्।

ततश्च चाणक्यमतिपरिगृहीत-शक-यवन-किरात-काम्बोज-पारसीकप्रभृतिप्रबलतरसैन्यसमन्वित-पर्व्वतेश्वरसैन्यपरिवृतचन्द्र-गुप्तेन सहसोपरुद्धं कुसुमपुरमवलोक्य राजा "समयोऽयमस्माकर-

कलितकरवालस्य" इति विचिन्त्य पितृव्यपुत्त्रं सर्वार्थसिद्धिं मन्त्रिणं राक्षसञ्च दुर्गरक्षणाय नियुज्य भ्रातृगणैः सैनिकैश्च परिवृतः शत्रुसैन्यं विवेश। महति च तस्मिन् सम्पराये प्रवर्त्तमाने राजा सानुजः क्रमेण शस्त्रनिहतः क्षितितलशायी अभवत्। चन्द्रगुप्तस्य जयध्वनिसम्प्रहृष्टः कुसुमपुरम् अतितरां रुरोध। ततश्च सर्वार्थसिद्धिः तादृशोपरोधेन पौरजनदुःखातिरेकं सोढुमशक्नुवन् स्वकुलक्षयञ्च चिन्तयन् निर्विसृष्टहृदयः केनापि मार्गेण निशीथे तपोवनाय पलायाञ्चक्रे। मन्त्री राक्षसस्तु चन्द्रगुप्तद्वेषात् स्वामिवंशनाशाच्च नितरां व्यथितः सुहृदि चन्दनदासे पुत्रकलत्रादिकं न्यासीकृत्य सुरङ्गया कथञ्चित् नगरात् निःसृत्य सर्वराज्यप्रदानप्रतिज्ञया पर्वतेश्वरेण सन्धाय चन्द्रगुप्तविनाशार्थं विषकन्यकां निर्माय जीवसिद्धिक्षपणकहस्तेन चन्द्रगुप्तसकाशं प्राहिणोत्। ततः चाणक्यः क्षपणकात् विषकन्याम् आदाय "अनया कन्यया विलासी पर्वतेश्वर एव प्रथमं तोषणीयः" इति चन्द्रगुप्तमाभाष्य तां तस्मै प्रादात्। तत्सम्भोगेन च गतप्राणं पर्वतेश्वरं दृष्ट्वा "प्रतिश्रुतार्द्धराज्यदानभीत्या चाणक्येन ते पिता घातितः, त्वामपि समये को वेद किं करिष्यति ?" इति रहसि त्रासयित्वा भागुरायणेन अपवाहितो मलयकेतुः पर्वतेश्वरपुत्त्रः। ततश्च बहुभिः उपायैः चन्द्रगुप्ताय राज्यं दत्त्वा तत्स्थिरीकरणाय मन्त्रिणं राक्षसमुपसंग्रहीतुं तथा घटनां कर्त्तुमुपक्रान्तवांश्चाणक्य इति।

# अन्यविधा च आख्यायिका।

आसन् नन्दा नाम केचित् भूमिपतयः। तेषु ज्येष्ठ उग्रधन्वाख्यो नन्दो महीं शशास। वक्रनासादयः कुलामात्याः तस्यासन्। तेषु राक्षसो नाम भूसुरो विख्यातपौरुषो दण्डनीतिप्रवीणः षाड्गुण्यप्रविभागवित् शुचिः शूरवरो नृपप्रियः राज्यधुरामवहत्। अस्य राज्ञः ज्येष्ठा महिषी सुनन्दा नाम आसीत्। मुरानाम्नी वृषली तु शीललावण्यसम्पदा प्रिया अभवत्। एकदा नृपतिः तपोधनमेकं गृहमागतं सभार्य्यः समुपाचरत् भक्तिनम्रः। नृपतिः तस्य पूजितस्य अतिथेस्तापसस्य पादोदकबिन्दुभिः पत्नी उक्षाम्बभूव। तेषाञ्च पादोदकबिन्दूनां नव ज्येष्ठाया महिष्याः शिरसि अपतत्, कनिष्ठायास्तु मुरायाः शिरसि एकः। सा च मुरा तं बिन्दुं सादरं भक्तिप्रवणा अग्रहीत्। तस्याश्च तादृशीं भक्तिमवलोक्य तापसोऽतितरां प्रससाद। तत्प्रसादाच्च सा मौर्य्याख्यं गुणवत्तरं सुतमसूत। सुनन्दा तु बहुगर्भयुक्तां मांसपेशीं प्रसूतवती। अस्याञ्च स्थितान् नवसङ्ख्यकान् गर्भान् राक्षसस्तैलद्रोणीषु निक्षिप्य यत्नेन अपुषत्। ततस्ते क्रमेण परिवर्द्धमाना नव वीरा अभवन्; पित्रा च स्वेनैव नाम्ना नन्दा इति व्यपदिष्टाश्च। वृद्धो महीपतिः तेषु नवसु राज्यं समासज्य महामतिं मौर्य्यञ्च सैनापत्ये नियुज्य देवत्वमगात्। मौर्य्यस्य तु चन्द्रगुप्तप्रमुखाः शतं सुता आसन्। ते च नन्दा दुरात्मानः सेर्ष्याः तं सपुत्त्रमन्तर्भूमिगृहमवासयन्।

एकदा सिंहलेश्वरः पञ्जरबद्धं मधूच्छिष्टमयं सिंहमेकं जीवन्तमिव विधाय "यो द्रावयेदिमं क्रूरं सत्त्वं पञ्जरस्थमेव, अपि तादृशः कोऽपि सुमतिर्युष्माकमस्ति?" इति सन्दिश्य नन्देभ्यः

प्राक्षिपीत्। तेषु च किंकर्त्तव्यविमूढ़ेषु स्थितेषु मेधावी चन्द्रगुप्त एव प्रतप्तायःशलाकया तं पञ्जरस्थमेव व्यलापयत्। ततश्च सर्वे तस्य तादृशं बुद्धिकौशलं प्रेक्ष्य विस्मितास्तं जिघांसितमपि नन्दा अन्धभूमिगृहात् उत्तारयामासुः। न असहन्त तम् आजानुलम्बितबाहुं राजलक्षणयुतम् औदार्य्यशौर्य्यगाम्भीर्य्यवन्तं विनीतं चन्द्रगुप्तम्; न्ययोजयन्त च दैवपैतृके कर्मणि। स तु कथमपि कालं प्रतीक्षमाणः तेषाम् अपचिकीर्षया कश्चित् अतिकोपनं कुशोन्मूलनार्थं कृतोद्यमं विष्णुगुप्तनामानं चणकनन्दनं दण्डनीतिविशारदं विप्रं शरणमयासीत्। अभवच्च गुणातिशयात् अस्य अतिप्रियः। स तु एकदा नन्दानां पैतृके कृत्ये निमन्त्रितः कुरूपतया तैः अवमानितोऽग्रासनात् च्यावितस्य क्रोधात् पाणिना शिखाम् उन्मुच्य नन्दवंशदिधक्षया "एतान् दर्पान्धान् नन्दान् अनुन्मूल्य नाहं शिखां बध्नामि" इति तीव्राम् प्रतिज्ञाम् आरुह्य शरणागतं चन्द्रगुप्तं "तुभ्यमहं राज्यमेतत् दास्यामि" इति समाश्वास्य पुरात् निर्ययौ। चन्द्रगुप्तश्च स्वनिग्रहभयाकुलः सद्यः एव नगरात् निर्गत्य तं कौटिल्यमुपाश्रयत्। स च चन्द्रगुप्तमादाय विष्णुशर्माणं स्वमित्रं क्षपणकवेशं विधाय तेनैव उपायेन राक्षसादीन् अमात्यान् वञ्चयन् नन्दराज्यार्द्धप्रदानपणेन महाबलं म्लेच्छराजसहितं पर्वतेश्वरं समुत्थाप्य कुसुमपुरमवारुणत्। नन्दाः सर्वे राक्षसमतिपरिगृहीताः युद्धाय एव सुसंरब्धाः क्रमेण घोरे सम्प्रहारे चन्द्रगुप्तबलैः निहताः। राक्षसस्तु तथाविधस्वामिवंशविनाशजनितरोषः छद्मना चन्द्रगुप्तं हन्तुं विविधान् उपायान् अकरोत्। सर्वार्थसिद्धिर्नाम नन्दानां पितृव्यतनयस्तादृशं पौराणामुपरि वर्त्तमानमवरोधदुःखमसहमानः शर्व्वर्य्यां सुरङ्गया अपसृत्य वनमभ्यगात्।

अथ मन्त्री राक्षसः स्वपुत्रकलत्रं सुहृत्तमे चन्दनदासे न्यस्य

सुरङ्गया अपसृत्य चन्द्रगुप्तनिधनाय क्षपणकद्वारेण विषकन्यां प्राहिणोत्। चाणक्यस्तु कूटमतिः तया एव विषकन्यया अर्द्धराज्यहर्त्तारं पर्वतेश्वरं विनाश्य स्वानुचरैः भागुरायणादिभिः भाययित्वा पुरात् पर्वतेश्वरपुत्त्रं मलयकेतुं निरसारयत्। राक्षसस्तु पुनः अराजकं नन्दानुरक्तपौराढ्यं कुसुमपुरं प्रविशन्तं चन्द्रगुप्तं हन्तुं रहसि सुहृदो दारुवर्मादीन् कूटयन्त्रादियोजनाय व्यवास्थापयत्। कौटिल्यस्तु स्वबुद्ध्या सर्वं तत् रिपुकल्पितम् अवबुध्य तत्तत्कूटयन्त्रादिभिः राक्षसपक्षीयान् एव तान् पर्वतेश्वरभ्रातरञ्च वैरोधकं पर्वतेश्वरवधोत्पन्नस्य अयशसः क्षालनार्थम् अर्द्धराज्यदानप्रलोभितं घातयामास। सर्वार्थसिद्धिञ्च तपोवनस्थितं चारेण निहत्य चन्द्रगुप्तं नन्दराज्ये अभ्यषेचयत्। ततो राक्षसः किंकर्त्तव्यविमूढः शोचन् मलयकेतुं पर्वतकपुत्त्रमभ्येत्य प्रोत्साहयन् अब्रवीत्—"राजपुत्त्र! अहम् आरूढमूलं मौर्य्यं द्राक् निपात्य स्वामिनां स्वर्गवासिनामानृण्यं गमिष्यामि। सर्वे पौरा अस्मत्पक्षीया जाग्रति, तत् सर्वप्रयत्नेन तव हितार्थं यतिष्ये, सकौटिल्यं चन्द्रगुप्तं हत्वा तुभ्यं राज्यं दास्यामि एव। मौर्य्यराज्यार्द्धहारो ते पिता चाणक्येन विषकन्यया घातितः, तस्मात् सर्वथा नृशंसमेनं येन केनापि प्रकारेण हनिष्यामि। त्वयि सर्वं राज्यं समासज्य स्वामिकुलानामानृण्यं लप्स्ये।" इत्थं मलयकेतुं प्रोत्साह्य सोऽमात्यवर्य्यः विविधान् उपायान् शत्रुजयाय अकल्पयत्, परं दैवप्रातिकूल्यात् सर्वं एव तत्प्रयासो विफलो जातः। परिशेषे तु स्वयमेव शत्रुवश्योऽभवत्।

इति श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्य्यसङ्कलिता
मुद्राराक्षस-पूर्वपीठिका।

# क्रमप्रविष्टाभिनवपात्राणि।

## पुरुषाः।

१म अङ्के—सूत्रधारः ... प्रधाननटः।
चाणक्यः ... राजनीतिज्ञब्राह्मणः।
शार्ङ्गरवः ... चाणक्यशिष्यः।
चरः ... यमपटपाठि-चाणक्यप्रणिधिः।
सिद्धार्थकः ... चाणक्यप्रणिधिः।
चन्दनदासः ... राक्षसमित्रं श्रेष्ठिविशेषः।
२य अङ्के—विराधगुप्तः ... आहितुण्डिकवेशी राक्षसप्रणिधिः।
राक्षसः ... नन्दराजमन्त्री।
जाजलिः ... मलयकेतोः कञ्चुकी।
प्रियंवदकः ... राक्षसानुचरः।
शकटदासः ... राक्षसमित्रम्।
३य अङ्के—वैहीनरिः ... चन्द्रगुप्तस्य कञ्चुकी।
चन्द्रगुप्तः ... कुसुमपुरस्य राजा। (नायकः)।
४र्थ अङ्के—करभकः ... पथिकवेशी राक्षसवार्त्तावहः।
दौवारिकः ... द्वाररक्षकः।
वेत्रहस्तपुरुषः ... राजागमनसूचकपुरुषविशेषः। (नकीब)।
मलयकेतुः ... पार्वतीयराजा। (प्रतिनायकः)।
भागुरायणः ... मलयकेतोः मित्रवेशी चाणक्यप्रणिधिः।
जीवसिद्धिः ... क्षपणकवेशिज्योतिर्वित्सा चाणक्यप्रणिधिः।
५म अङ्के—भासुरकः ... मलयकेतोरनुचरः।
६ष्ठ अङ्के—सुसिद्धार्थकः ... सिद्धार्थकमित्रम्।
पुरुषः ... छद्मवेशी चाणक्यप्रणिधिः।
७म अङ्के—वज्रलोमकः ... प्रथमचण्डालवेशी सिद्धार्थकः।
वेणुवेत्रकः ... द्वितीयचण्डालवेशी सुसिद्धार्थकः।
चन्दनदासपुत्रः
चन्द्रगुप्तस्य रक्षकाः
पुरुषः ... वार्त्तावहविशेषः।

## स्त्रियः।

१म अङ्के—नटी ... सूत्रधारपत्नी।
शोणोत्तरा ... चन्द्रगुप्तप्रतीहारी।
५म अङ्के—विजया ... मलयकेतुप्रतिहारी।
७म अङ्के—कुटुम्बिनी ... चन्दनदासपत्नी।

१०८

# मुद्राराक्षसम् ।

## प्रथमोऽङ्कः ।

धन्या केयं स्थिता ते शिरसि ? शशिकला, किन्नु नामैतदस्याः ?
नामैवास्यास्तदेतत् परिचितमपि ते विस्मृतं कस्य हेतोः ? ।

टीकाकृन्मङ्गलाचरणम् ।—

संसारार्णवपारपोतसदृशं निर्वाणदानप्रभुं
श्रीगोविन्दपदारविन्दयुगलं भक्तेष्टकल्पद्रुमम् ।
नत्वा कायमनोवचोभिरधुना तस्यानुकम्पावशात्
मुद्राराक्षसनाटकं विवृणुते यत्नात् सतां प्रीतये ॥

अथ तत्रभवान् विशाखदत्तनामा महाकविः प्रारिप्सितस्य मुद्राराक्षसनामकनाटकस्य निर्विघ्नपरिसमाप्तिकामनया स्वेष्टदेवतागुणसङ्कीर्तनपूर्वकाशीर्वचनरूपं मङ्गलं शिष्यशिक्षायै नान्द्यां निबध्नाति, धन्येत्यादि ।—अत्र प्रथमतस्स्रग्धरायां उपनिबद्धेषु हरपार्वत्योरुक्तिप्रत्युक्तिवाक्येषु आदौ शिवशिरसि स्थितां सुरसरितं समालोक्य ईर्ष्यान्विता पार्वती हरं पृच्छति—ते तव, त्रिभुवनगुरोरपीत्यर्थः, शिरसि स्थिता अत एव धन्या सुभगा, इयं प्रत्यक्षतो दृश्यमाना, का ? किं-नामिका ? इति पार्वतीप्रश्नः । [ अनेन उत्सङ्गस्थितायाः धन्यत्वकथनेन आत्मनो वामाङ्कस्थितत्वं दौर्भाग्यञ्च सूचितम् ; किञ्च, "धन्या योषित् मनोभिका" इति वचनात् एवं प्रलोभनशीलायाः कथं वशोऽसीति उपालम्भोऽपि ध्वन्यते ; यद्वा—धन्याशब्दो विपरीतलक्षणया अधन्यावचनः ; पूज्यस्य ते या शिरःसमारूढा साऽधन्या, तस्याः वश्यत्वं तव नोचितमिति तिरस्कारोऽपि व्यज्यते ] सुरसरितं निह्नोतुमिच्छता भगवता पार्वतीप्रश्नस्य स्त्रीविषयकत्वेन स्वशिरसि स्थितायाः शशिकलायाः अपि स्त्रीत्वेन तत्परत्वं प्रकल्प्य उत्तरमभिधीयते, शशिकलेति ।—शशिनः चन्द्रस्य, कला अंशविशेषः, चन्द्रस्य अवयवरूपेत्यर्थः, इति हरस्य उत्तरम् । ( स्त्रीत्वनिर्वाहाय कलेति प्रयोगः ) भूषणार्थं शिरसि तस्याः धारणात् त्वया खेदो न विधेयः इति भावः । एवं भगवता उत्तरिते तद्वाक्ये शशिनः कलेति योगार्थमपहाय स्वपृष्टायाः स्त्रियाः शशिकलेति संज्ञापरत्वमध्यवस्यन्त्या पार्वत्या पुनः पृच्छ्यते, किन्नु नामेति ।—तु भोः ! अस्याः प्रत्यक्षतो दृश्यमानायाः, स्त्रिया इति शेषः, एतत् शशिकलेति, नाम संज्ञा, किं

नारीं पृच्छामि नेन्दुं, कथयतु विजया न प्रमाणं यदीन्दुः,
देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्वः ॥ १ ॥

किमु? मत्पृष्टा स्त्री किं शशिकलानामिका? इति द्वितीयप्रश्नार्थः; तथा च, भगवता यथा देवीपृष्टविषयस्य अन्यपरत्वं समर्थ्य उत्तरदाने चातुर्यं प्रकाशितं, तथा भगवत्याऽपि उत्तरवाक्यस्य यौगिकार्थपरतामपहाय प्रश्नविषयभूतायाः स्त्रियाः शशिकलाऽभिधानत्व-मुद्भाव्य चातुर्यं प्रकटितम्; "शठे शाठ्यं समाचरेत्" इत्युक्तेस्तथाऽपि शाठ्यमुररीकृत-मिति बोध्यम्। एवं भगवत्या पृष्टे "समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्" इति व्याकरणसिद्धान्तमनुसृत्य समस्तस्यापि शशिकलाशब्दस्य रूढ्या शशिकलारूपविशिष्टार्थ-बोधकतया तन्नामत्वम् अस्त्येव इत्याशयेन उत्तरमाह, नामेति।—अस्याः प्रत्यक्षतो दृश्यमानायाः, तत् मदुक्तं शशिकलेत्येव, नाम संज्ञा, वाचकशब्द इत्यर्थः, एतत् ते तव, [ "षष्ठी शेषे" ( २।३।५० पा० ) इति षष्ठी ] परिचितमपि ज्ञातमपि, कस्य हेतोः केन हेतुना, विस्मृतम्? इति द्वितीयोत्तरम्; अतः परिचितस्य विस्मरणे हेतुमन्तरेण विस्मरणासम्भवात् अविस्मरणे च ज्ञातत्वात् तव प्रश्नो न युक्तः इति समुदितार्थः। [ अत्र "सर्वनाम्नस्तृतीया च" ( २।३।२७ पा० ) इति षष्ठी ]। एवमस्फुटप्रश्ने चातुर्येण भगवता क्रमभङ्गमपाकर्तुं शशिकलाशब्दस्य स्त्रीलिङ्गत्वेऽपि तदर्थस्य चन्द्रावयवस्य चन्द्रपुंस्त्वेनैव पुंस्त्वात् न मत्प्रश्नस्य तद्विषयत्वं सम्भवति इत्याशयवती पार्वती पुनः पृच्छति, नारीमिति।—नारीं तव शिरसि स्थितां स्त्रियं, पृच्छामि नामतो ज्ञातुमिच्छामि, तद्विषयको मे प्रश्नः इत्यर्थः; इन्दुं चन्द्रं, न पृच्छामि, तस्य पुंस्त्वेन प्रश्नाविषयत्वात्; तेन तस्य परिचितत्वेऽपि न प्रश्नासङ्गतिः इति भावः। इति तृतीयः प्रश्नः। एवं पार्वत्या पृष्टे प्रच्छधातोः द्विकर्मकतया प्रश्नस्य मुख्यकर्मपरत्वं प्रकल्प्य भगवानाह, कथयत्विति।—इन्दुः इन्दुवाक्यमित्यर्थः, यदि तव प्रमाणं न, भवतीति शेषः, तस्य पुंस्त्वात् भवत्या च नार्या एव प्रश्नकरणात् इन्दोः प्रामाण्याभावः सूचितः, तदा सन्निहिता तवैव सहचरी विजया स्त्रीत्वेन भवत्यास्ते प्रमाणभूतेत्यर्थः, सैव कथयतु, किमस्मत्कथनेन? इति भावः; इति तृतीयोत्तरम्। इति एवं चरण-त्रयप्रतिपादितप्रकारेण, देव्याः सकाशात्, [ अपादानत्वविवक्षया पञ्चमी। देव्यै इति पाठान्तरम् एव साधु ] सुरसरितं गङ्गां, निह्नोतुमपलपितुं, गोपायितुमिति यावत्, इच्छोः अभिलषतः, विभोः ईशस्य, शाठ्यं चातुरी, वः युष्मान्, रङ्गस्थान् सभ्यानित्यर्थः, अव्यात् पायादित्यर्थः। [ अत्र शिरोधारणेनातिप्रकटितस्य सुरसरिद्रूपस्य वस्तुनः शशिकलायुक्तिनिह्नवच्छलेन गोपनाद्व्याजोक्तिरलङ्कारः;—"व्याजोक्तिर्गोपनं

अपि च । (ख)—

पादस्याविर्भवन्तीमवनतिमवने रक्षतः स्वैरपातैः
सङ्कोचेनैव दोष्णां मुहुरभिनयतः सर्वलोकातिगानाम् ।
दृष्टिं लक्ष्येषु नोग्रां ज्वलनकणमुचं बध्नतो दाहभीतेः
इत्याधारानुरोधात् त्रिपुरविजयिनः पातु वो दुःखनृत्यम् ॥ २ ॥

---

व्याजादुद्दिष्टस्यापि वस्तुनः" इति दर्पणोक्तलक्षणात् ; तेन नाटकीयवस्तुनः प्राख्यपरत्वं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः ] । स्रग्धरा वृत्तं—"म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्" इति लक्षणात् । एकविंशत्यक्षरपादच्छन्दःसु २०२०तमप्रस्तारान्तर्गतं वृत्तमिदम् । अस्य हि श्लोकस्य नान्दीत्वात् मङ्गलार्थम् आदौ मगणः सन्निवेशितः ; तथा च भामहः,—"श्रेयं सर्वगुरुर्दत्ते मगणो भूमिदैवतः" इति ; तथा च "धन्या" इति धकार-नकाराभ्यामारम्भः शुभं सूचयति, यथा—"दोषः सौख्यं मुदं नः" इति । एतत् सर्वम् अस्मत्कृतछन्दोलङ्कारव्याख्यायां द्रष्टव्यम् ; तथा च शुभसूचक-ध-न वर्णप्रयोगात् लिप्यादिशुद्धिरपि अत्रोपपद्यते ; तदुक्तं—"देवतावाचकाः शब्दा ये च भद्रादिवाचकाः । ते सर्वे नैव निन्द्याः स्युः लिपितो गणतोऽपि वा ॥" इति ॥ १ ॥

(ख) विवक्षितायाः षट्पदात्मकनान्द्याः अपर्यवसानं सूचयन् द्वितीयश्लोकमवतारयति,—अपि चेति ।

पादस्येति ।—पादस्य चरणस्य, [ जातावेकवचननिर्देशात् पादयोरित्यर्थः ] स्वैरपातैः यथेष्टं विक्षेपैः, आविर्भवन्तीम् उत्पद्यमानाम्, [ "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" (३।३।१३१ पा०) इति भविष्यत्सामीप्ये लट्, अप्रथमासमानाधिकरणत्वात् शतृ-प्रत्ययश्च ] अवनेः पृथिव्याः, अवनतिम् अधोगतिं, पातालप्रवेशमित्यर्थः, रक्षतः निवारयतः, भूमेः अवनतिभयेन मन्दं मन्दं पादविक्षेपं कुर्वतः इत्यर्थः, [ "चौरं रक्षति" इत्यादौ यथा चौरस्य स्वच्छन्दगमननिषेधः, तथा अत्रापि धराऽवनत्याविर्भावनिषेधो रक्षधात्वर्थः ] सर्वलोकातिगानाम् अतिदीर्घतया अतिक्रान्तचतुर्दशभुवनानां, दोष्णां भुजानां, सङ्कोचेन यथेष्टं प्रसारणाभावात् कुण्ठनेनैव, मुहुः वारंवारम्, अभिनयतः रसाभिव्यञ्जनार्थं हस्तपादादिचेष्टां कुर्वतः, दाहभीतेः लक्ष्याणां भस्मीकरणशङ्कया, लक्ष्येषु दृष्टिविषयेषु, ज्वलनकणमुचम् अग्निस्फुलिङ्गवर्षिणीम्, अत एव उग्रां दारुणाम्, प्रखरामित्यर्थः, दृष्टिं तृतीयनेत्रं, न बध्नतः न क्षिपतः, भूम्यादाधारस्य अपेक्षया लक्ष्याणि अपेक्ष्य इत्यर्थः, त्रिपुरविजयिनः हरस्य,

नान्द्यन्ते सूत्रधारः। (ख) अलमतिप्रसङ्गेन। आज्ञापितोऽस्मि परिषदा, यथा—"अद्य सामन्तवटेश्वरदत्तपौत्रस्य महाराजपदभाक्पृथुसूनोः कवेः विशाखदत्तस्य (ग) कृतिः मुद्राराक्षसं (घ)

---

आधारानुरोधात् आधारस्य पादविक्षेपादीनामाश्रयस्य पृथिव्यादेः, अनुरोधात् ध्वंसभङ्गादि-दाहा मा भूवन्नित्यभिप्रायात्, इति पूर्वोक्तरूपं, दुःखनृत्यं यथेच्छं हस्तपदादिप्रसारणाभावात् कुण्ठितनर्त्तनं, वो युष्मान्, सभासद इत्यर्थः, पातु रक्षतु। [ अत्र "त्रिपुरविजयिनः" इति शब्देन यथा पुरत्रयविजयिना बाणाग्निना त्रिपुरं दग्धं, तथा क्रोधाग्निना नन्दवंशवत् सराक्षसं मलयकेतुं दग्धुं समर्थस्यापि चाणक्यस्य राक्षसजिघृक्षानुरोधेन क्रमशात् कुटिलनीतिप्रयोग इति ध्वन्यते। अलङ्कारस्य भवन्त्यादीनाम् अवनत्याद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः। केचित्तु—त्रिपुरविजयिनोऽतिमहतो भगवतः शिवस्य पादपातस्य पृथिवीरूपाधारात् प्रतयाधिक्योक्तेरधिकालङ्कारः,— "आधाराधेययोरेकस्याधिक्येऽधिकमुच्यते" इति लक्षणात् ]। स्रग्धरा वृत्तम् ॥ २ ॥

(ख) नान्द्यन्ते सूत्रधार इति।—नन्दयति लोकानिति नान्दी, शुभाशंसनेन लोकानन्दजननात्; तदुक्तम्—"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते। देवद्विजनृपादीनां तस्मात् नान्दीति कथ्यते॥" इति। अत्र तु श्लोकद्वये "अव्यात्" "पातु वः" इत्याशीर्वचनयुक्तत्वात्, तथा भगवतः शिवस्य स्तुतिरूपत्वात् पद्यद्वयेनाष्टपादतया च अष्टपदेयं नान्दी, "श्लोकपादं पदं केचित्" इत्याद्युक्तेः। आकुमारे सुखबोधिन्यां तु अवान्तरवाक्यरूपं पदमेव प्रमाणीकृतमस्माभिरिति। तस्याः,—अष्टपादात्मिकाया आशीरूपायाः, अन्ते—अवसाने, सूत्रधारः,—तदाख्यः प्रधाननटः, "नाट्योपकरणादीनि सूत्रमित्यभिधीयते। सूत्रं धारयतीत्यर्थे सूत्रधारो निगद्यते॥" इति लक्षणात्। कथयतीति पदमत्राध्याहार्यम्। एवं सर्वत्र।

(ग) "रूपकस्य कवेराख्यां गोत्राद्यपि च कीर्त्तयेत्" इति दर्पणोक्तेः सूत्रधारेण नाटक-तत्कर्त्रादीनां नामकीर्त्तनस्य अवश्यकर्त्तव्यत्वात् तदाह, आज्ञापित इति।— परिषदा—गोष्ठ्या, तदन्तर्गतसभ्यजनेन इत्याशयः। नाटककर्त्ता कविर्विशाखदत्तः। यश्च सामन्तस्य—अधिराजोपाधिकस्य, वटेश्वरदत्तस्य पौत्रः, महाराज इति पदं भजते ["भजो ण्विः" (३।२।६२ पा०) इति ण्वौ महाराजपदभाक् ] स चासौ पृथुश्चेति तस्य—महाराजोपाधिकस्य पृथोः, पुत्रः। अनेन महाकुलप्रसूतत्वकथनेन कवेः प्रशंसा कृता। [ विशाखदत्तस्य इत्यत्र विशाखदेवस्य इति पाठान्तरम् ]।

(घ) मुद्राराक्षसं—मुद्रया परिच्छिन्नः राक्षसोऽत्रेति मध्यपदलोपी बहुव्रीहिः,

तत् यावत् इदानीं गृहं गत्वा गृहिणीम् आहूय गृहजनेन सह सङ्गीतकम् अनुतिष्ठामि। (छ) [ परिक्रम्य अवलोक्य च ]। इमे नो गृहाः, (ज) तत् यावत् प्रविशामि। [ नाट्येन (झ) प्रविश्य अवलोक्य च ]। अये! तत् किमिदम्!! अस्मद्गृहेषु महोत्सव इव दृश्यते!! स्वस्वकर्मणि अधिकतरम् अभियुक्तः (ञ) परिजनः। तथा हि—

वहति जलमियं पिनष्टि गन्धान्
इयमियमुद्ग्रथते स्रजो विचित्राः।
मुसलमिदमियञ्च पातकाले
मुहुरनुयाति कलेन हुङ्कृतेन ॥ ४ ॥

---

इति इन्, तस्य भावः तत्ता ] प्राचुर्यमित्यर्थः, वप्तुः बीजारोपकस्य कर्षकस्य, गुणम् अभिज्ञतादिकं, नैपुण्यमित्यर्थः, न अपेक्षते न आकाङ्क्षतीत्यर्थः, तथा च, क्रियाधारपात्रस्यैव प्राधान्य न कर्तुरित्युक्तमिति भावः। [ एतेन आत्मश्लाघापराङ्मुखत्वकथनेन नटस्यापि गुणवत्त्वं प्रकटितम्। यथा शालिप्रक्षेपदक्षबीजारोपकगुणव्यतिरेकेण उर्वराभूमिनिहिता कृषिः व्रीहिपुष्कलता च स्वयमुपचिता भवति, तथा परिषदि नटगुणव्यतिरेकेणापि प्रयोगनैपुण्य क्रियाधारपात्रगुणतो भवतीति बिम्बप्रतिबिम्बत्वप्रकटनात् दृष्टान्तालङ्कारः ]। अत्र द्वितीयचतुर्थयोः पादयोः चतुर्थवर्णात् परं जगणावस्थानात् पथ्यावक्त्रं वृत्तं—"युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितम्" इति लक्षणात् ॥ ३ ॥

(छ) तत यावदिति।—गृहजनेन—गृहिण्या इत्यर्थः, "न गृहं गृहमित्याहुः गृहिणी गृहमुच्यते" इति स्मृतिवचनात्। यावत् अनुतिष्ठामि—अनुष्ठास्यामि, [ "यावत्पुरानिपातयोः लट्" ( ३।३।४ पा० ) इति भविष्यति लट् ]।

(ज) गृहाः इति।—"गृहाः पुंसि च भूम्न्येव" इत्यमरोक्तेः बहुवचनम्।

(झ) नाट्येन—नटोचितभङ्गीविशेषेण, कर्त्तव्याभिनयेन इति यावत्।

(ञ) अभियुक्तः,—अभिनिविष्टः, अभिरत इति यावत्।

अभियोगप्रकारमाह, वहतीति।—इयं काचित्, जलं वहति आनयति, इयम् अपरा, गन्धान् गन्धद्रव्याणि, पिनष्टि, इयम् अन्या, विचित्राः नानावर्णादियुक्ताः, स्रजः मालिकाः, उद्ग्रथते पुष्पादिकमुद्धृत्य बध्नाति, [ प्रयोगोऽयं चिन्त्यः ] इयम् अन्या, पातकाले अवघातार्थं धान्याद्युपरि मुसलक्षेपकाले, इदं श्रूयमाणं, मुसलं मुसलपातमन्दम्

भवतु, कुटुम्बिनीम् (ट) आहूय पृच्छामि । [ नेपथ्याभिमुखम् (ठ) अवलोक्य ] ।—

गुणवत्युपायनिलये ! स्थितिहेतो ! साधिके ! त्रिवर्गस्य ।
मद्भवननीतिविद्ये ! कार्य्यात् आर्य्ये ! द्रुतमुपेहि ॥ ५ ॥

---

इत्यर्थः, कलेन मधुरास्फुटेन, हुङ्कृतेन हुमिति शब्दविशेषेण, मुहुः वारंवारम्, अनुयाति अनुकरोति । [ अत्र स्वभावोक्तिरलङ्कारः ] । पुष्पिताग्रा वृत्तम् "अयुजि न-युगरेफतो यकारो युजि तु न-जौ ज-र-गाश्च पुष्पिताग्रा" इति लक्षणात् ॥ ४ ॥

(ट) भवतु, यदिति शेषः । कुटुम्बिनीम्—गृहिणीम् । [ अत्र भूम्नि प्रशंसायां वा इनिः "भूमनिन्दाप्रशंसासु" इत्युक्तेः ] ।

(ठ) नेपथ्याभिमुखं—नेपथ्यस्य वेशरचनागृहस्य, अभिमुखं—सम्मुखम् ।

गुणवति इति ।—गुणवति ! बहुगुणशालिनि ! उपायनिलये ! उपायानां संसारसाधनीभूतव्यापाराणां, निलय ! आश्रयभूते ! इत्यर्थः ; [ निलयशब्दस्य अप्-प्रत्ययान्तत्वात् नियतपुंलिङ्गता ] । स्थितिहेतो ! स्थितेः लोकयात्रायाः, हेतो ! साधयित्रि ! त्रिवर्गस्य त्रयाणां धर्मार्थकामानां सांसारिकव्यापाराणां पुरुषार्थानां, साधिके ! सम्पादिके ! "न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते । तया हि पुरुषः सर्वान् पुरुषार्थान् समश्नुते ॥" इति स्मृतेः । मद्भवननीतिविद्ये ! मम भवनं मद्भवनं, तत्र या नीतिः इतिकर्त्तव्यता, तस्याः प्रकाशकत्वात् विद्येव [ इत्युपमाऽलङ्कारः ] तत्सम्बुद्धौ, गृहकर्मोपदेष्ट्रि इति यावत्, आर्य्ये ! मान्ये ! साधुशीले ! वा । ("वाच्यो नटीसूत्रधारावार्य्यनाम्ना परस्परम्" इति वचनात् आर्य्ये इति नट्याः सम्बोधनम् ) । कार्य्यात् प्रयोजनवशात्, [ कार्य्यात् इत्यत्र हेतौ पञ्चमी, फलमपीह हेतुरित्युक्तेः अध्ययनेन वसतीत्यादिवत् उद्देश्यरूपफलस्यापि हेतुत्वाङ्गीकारात् ; केचित् तु अत्र विशिष्टकार्य्यसद्भावात् प्रागुक्तं कार्य्ये परित्यज्य इत्यर्थं कृत्वा ल्यब्लोपे पञ्चमीम् आहुः ] द्रुतं शीघ्रम्, उपेहि समीपमागच्छ । [ द्रुतमित्यनेन विलम्बासहिष्णुत्वरूपमौत्सुक्यं द्योत्यते ] । अत्र "कृतं च कश्चित् प्राश्य भारतीं वृत्तिमाश्रितः" इति नियमात् तृतीयाङ्के वर्णयिष्यमाणशरद्वतूपादानं कृतमिति ध्वनितम् ; तथा हि, गाम्भीर्यौदार्य्यादिगुणवति ! जिगीषूणां सामाद्युपायनिलये ! तेषामेव विजयावसरप्रदायित्वेन अर्थसाधिके ! तन्मूलत्वात् लक्ष्मीः तत्साधिके च शरत् ! शीघ्रमागच्छ इति व्याजेन शरदागमः प्रार्थ्यते । आचक्षेण च राज्यवधूरूपाय नीतिविद्या अभिमुखीक्रियते इति च ध्वनितम् । अत्र हि, गुणवति ! सन्धिविग्रहादिषड्गुणविशिष्टे ? उपायनिलये !

नटी। [प्रविश्य]। अज्जउत्त ! इअम्हि, अज्जाणिओएण मं अणुगेह्णदु अज्जो। *

सूत्र। आर्य्ये ! तिष्ठतु तावत् आर्य्यानियोगः, कथय किमद्य

* आर्य्यपुत्र ! इयमस्मि, आज्ञानियोगेन मामनुगृह्णातु आर्य्यः।

सामादिचतुरुपाययुक्ते ! स्थितिहेतो ! राज्यरक्षाकारिणि ! त्रिवर्गस्य "क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्" इत्युक्तलक्षणस्य, साधिके ! सिद्धिकारिके ! आर्य्ये ! मान्ये ! ["कार्य्याकार्य्ये" इति पाठे तु—विहितकार्य्योपदेशिके इत्यर्थः], नीतिविद्ये ! राज्यशासनशास्त्रभूते ! त्वं द्रुतम् उपेहि इति व्याख्याने— अप्राकरणिकस्यार्थस्य श्लिष्टपदमहिम्ना प्रतीतेः "नानाऽर्थसंश्रयः श्लेषः वर्ण्यावर्ण्योभयास्पदः" इति लक्षणात् श्लेषालङ्कारः इति प्राचीनमतमङ्गीकृतवता ढुण्ढिराजेन समर्थितम्। न च तादृशार्थस्य ध्वनित्वेनैव प्रतीतेर्न श्लेषालङ्कारावसरः इति वाच्यं, द्वयोः पृथग्विषयत्वात्। इह गुणवत्यादिशब्दानामभिधया वृत्त्या गृह-कर्मादिदक्षत्व-सन्धिविग्रहप्रभृतिषड्गुणविशिष्टत्वादिरूपोभयार्थप्रतीतेः, तथा नटस्य आर्य्यासम्बोधने त्वं नीतिविद्येत्यादिपरिहासोक्तिसम्भवेन द्वितीयार्थस्याभिधेयत्व-सम्भवात् श्लेष एव ; ततश्च विरतायामभिधायां चन्द्रगुप्तकर्तृकात्मप्रसादादिगुणवत्-प्रदाह्वानरूपस्य, तथा राक्षससंसाधनार्थं चाणक्यकर्तृकस्वभवननीतिविद्या-ऽभिमुखीकरणरूपस्याप्रकृतार्थस्यानभिधेयतया ध्वननात् तत्र ध्वनिरिति। अन्यास्तु द्वितीयार्थस्याप्राकरणिकत्वेन अनभिधेयत्वात् नात्र श्लेष इत्याहुः।

अत्र भारती नाम वृत्तिः,—"भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः" इति लक्षणात्। अत्र हि आर्य्या नाम वृत्तम् ; तल्लक्षणं यथा—"लक्ष्मैतत् सप्त गणा गोपेता भवति नेह विषमे जः। षष्ठो जश्च नलघु वा प्रथमार्द्धे नियत-मार्य्यायाः॥ षष्ठे द्वितीयलात् परके न्ले मुखलाच्च सयतिपदनियमः। चरमेऽर्द्धे पञ्चमके तस्मादिह भवति षष्ठ लः॥" इति। अत्र षष्ठस्य जगणत्वात् (—◡—) यतिव्यवस्थाभावः। इयं हि विंशतिसङ्ख्यकगुरुवर्णसद्भावात् गौरी नाम आर्य्या, तथा सप्तदशसङ्ख्यकलघुवर्णसद्भावात् विप्रजातीया अपि बहुनायक-त्वात् (जगणबहुत्वात्) वेश्या इति छन्दोविचितिवेदिभिः अस्मत्कृतछन्दोमञ्जरी-व्याख्यायां (तत्पुस्तकस्य १६८—१७१ पृष्ठाङ्काः) निरीक्षितव्यम् ; एवमुत्तरत्रापि इति दिक्॥ ५॥

भवत्या भगवतां ब्राह्मणानाम् उपनिमन्त्रणेन एतत् कुटुम्बकम् अनुगृहीतम् ? अथवा अभिमता (ङ) भवनम् अतिथयः प्राप्ताः, यत् एष पाकविशेषारम्भः ?।

नटी। अज्ज ! अज्ज आमंतिदा मए भअवंतो ब्बम्हणा ।*

सूत्र। कथय कस्मिन् निमित्ते ?। (ढ)

नटी। उवरज्जदि किल भअवं चंदो त्ति। †

सूत्र। क एवमाह ?।

नटी। एवं क्खु णअरवासी जणो मंतेदि। ‡

सूत्र। आर्य्ये ! कृतश्रमोऽस्मि चतुःषष्ट्यङ्गे ज्योतिःशास्त्रे, तत् प्रवर्त्त्यतां भगवतो ब्राह्मणान् उद्दिश्य पाकः, चन्द्रोपरागं प्रति तु केनापि विप्रलब्धाऽसि (ण)। पश्य—

---

* आर्य्ये ! अद्य आमन्त्रिता मया भगवन्तो ब्राह्मणाः।

† उपरज्यति किल भगवान् चन्द्र इति।

‡ एवं खलु नगरवासी जनो मन्त्रयति।

---

(ङ) आज्ञानियोगः इति साकाङ्क्षवाक्यस्य निवर्त्तनरूपा वाक्यकेलिः। उपनिमन्त्रणं—भोजनार्थं निमन्त्रणम्। कुटुम्बकं—परिजनाः। [ कुटुम्बानां समूह इति समूहार्थे कन् ]। अभिमताः,—वाञ्छिताः। अभिमतशब्दस्य वाक्केलिस्तु—ये निमन्त्रिताः ते एव अभिमताः, अहं पुनः तव स्वामी अपि न अभिमतः, निमन्त्रणाभावात् एतद्व्यापारस्य अज्ञानाच्च इति।

(ढ) कस्मिन् निमित्ते—केन निमित्तेनेत्यर्थः, [ "निमित्तपर्य्यायप्रयोगे सर्वासां प्रायोदर्शनम्" इति वार्त्तिकम् ]।

(ण) चतुःषष्ट्यङ्गे—चतुःषष्टिः अङ्गानि प्रतिपाद्यप्रकारा यस्य तस्मिन्। प्रवर्त्त्यतां—पाकः समारभ्यताम्। [ अत्र तथा पाकारम्भद्योतकस्य तत् प्रवर्त्त्यतामिति मुखवत्प्रतिपादनं स्फुटं नामाङ्कम् ]। चन्द्रोपरागं—चन्द्रग्रहणम्; ( "उपरागो ग्रहो राहु-ग्रस्ते त्विन्दौ च पूष्णि च" इत्यमरोक्तेः )। विप्रलब्धा—वञ्चिता, प्रतारिता इत्यर्थः; ( "विप्रलब्धस्तु वञ्चितः" इत्यमरः )।

क्रूरग्रहः सकेतुश्चन्द्रमसम्पूर्णमण्डलमिदानीम्।
अभिभवितुमिच्छति बलात्——" [इत्यर्द्धोक्ते]।

विप्रलम्भं प्रकटयितुं सम्प्रति पद्यान्तरमपरं दर्शयन्नाह, क्रूरग्रह इति।—सकेतुः सपातः, चन्द्रतुल्यकान्तिश्च:, [पातपर्य्यायकेतुशब्देन कान्तिवृत्तवृत्तसंयोगः उच्यते इति सिद्धान्तशास्त्रे प्रसिद्धम्। वृकोदरशब्दवत् सहशब्दादेशस्य सशब्दस्य समानार्थत्वम्] क्रूरग्रहः भूच्छायारूपी ध्वान्ताधिदैवः राहुः, इदानीं सम्प्रति, असम्पूर्णमण्डलम् अपूर्णबिम्बं, चन्द्रं बलात् हठात्, ग्रसमानमित्यर्थः, ["पूर्णिमाप्रतिपत्सन्धौ ग्रस्यते राहुणा शशी" इति सिद्धान्तोक्तेः ग्रहणस्य प्रतिपत्पञ्चदश्योरन्तरालकाले एव चन्द्रमण्डलस्य पूर्णतायां सत्येव इदानीमसम्पूर्णमण्डलतया न तद्योग्यकालता, अतो बलादित्यनेनायोग्यकालत्वं द्योतितमित्यवधेयम्] अभिभवितुमाक्रमितुं, ग्रसितुम् इति यावत्, इच्छति प्रवणीभवति, (कूलं पिपतिषतीतिवत् अचेतनेऽपि भूमिच्छायारूपे तमोमये राहौ चेतनत्वोपचारः। सिद्धान्तशास्त्रे हि सूर्यकिरणा एव जलमयमण्डले चन्द्रे प्रतिबिम्बिताः सन्तः तस्य भासकतया नैशं तमो नाशयन्ति इत्युक्तम्; तथाहि वराहः,—"सलिलमये शशिनि रवेर्दीधितयो मूर्च्छिताः तमो नैशम्। क्षपयन्ति दर्पणोदरनिहिता इव मन्दिरस्यान्तः॥" इति। सिद्धान्तशिरोमणावपि—"तरणिकिरणसङ्गात् एष पीयूषपिण्डो दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति॥" इति। यत् तु रवेः समानकान्तिवृत्तस्थे चन्द्रे च सूर्य्याचन्द्रमसोर्मध्यगतभूच्छायया आच्छादनं तदेव ग्रहणम्। छाया च प्रकाशाभावरूपतया तमोरूपा, तदधिष्ठातृदेवता च राहुग्रहः, अत एव "राहुर्वै हस्ती भूत्वा चन्द्रमसं गृह्णाति" इति श्रुतौ राहोर्हस्तिरूपत्वकथनं तमसि नीलत्वारोपेण हस्तिसदृशनीलच्छायारूपी भूत्वेत्यर्थः सिद्धान्तसम्मतोऽवसेयः)। भूमिच्छाययाऽऽच्छादनमपि पूर्णबिम्बस्यैव, तच्च पर्वसन्धिकाले एव नान्यदेति सिद्धान्ते स्थितम्; इदानीन्तु पूर्णत्वाभावात् न ग्रहणसम्भव इति भावः। अनेन वाक्येन प्रकरणप्रतिपाद्यस्य चन्द्रगुप्तं प्रति राक्षसेन समलयकेतुनाऽभियोगस्य श्लेषेण सूचनात् श्लिष्टार्थमादायैव चाणक्यरूपपात्रप्रवेशो वर्णनीय इति श्लिष्टार्थस्तावदभिधीयते।—सकेतुः मलयकेतुना सह, क्रूरे क्रूरकर्मणि कूटव्यवहारादौ, ग्रहो ग्रहणमासक्तो यस्य स राक्षसः इत्यर्थः, इदानीं सम्प्रति, असम्पूर्णमण्डलमचिरराज्याभिषिक्ततया स्वस्य सम्यगाज्ञाप्रचाराभावेन असाधीनप्रकृतिमण्डलं, चन्द्रं चन्द्रगुप्तं, बलात् बलं सामर्थ्यं सैन्यादिकं वा आश्रित्य,

[नेपथ्ये]। आः! क एष मयि स्थिते चन्द्रमभिभवितु-मिच्छति बलात्? (त)

सूत्र। "————रक्षत्येनं तु बुधयोगः ॥ ६ ॥

---

[ल्यब्लोपे पञ्चमी] अभिभवितुं पराभवितुम्, इच्छति। [अत्र मुद्रानामालङ्कारः, —"सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः" इति लक्षणात्]।

(त) एवम् अन्यार्थकं सूत्रधारवाक्यं श्रुत्वा वाक्यस्यासमाप्तावेव तद्वाक्यं प्रस्तुतार्थतन्निष्ठार्थपरमाशङ्क्य नेपथ्यान्तरित एव चाणक्यस्तदभियोगमसहमानः कथयति, आः इत्यादि।—आः इति कोपसूचकम् अव्ययम्। मयि स्थिते यः चन्द्रं—चन्द्रगुप्तम्, अभिभवितुमिच्छति बलात् स एष कः? इत्यन्वयः। [क्वचित् कथयेत्यधिकः पाठः। तत्र च इत्यनेनैव तत्कथनप्रसङ्गेऽपि कालविलम्बासहिष्णुताद्योतनार्थं कथनप्रश्नः, तेन च तस्यासह्यत्वात् तत्प्रतिकारेच्छेति ध्वनिः। इदं स्पर्धयाऽन्योऽन्यवाक्याधिक्यरूपमधिबलं नाम नाट्याङ्गम्]।

सूत्रधारस्तु स्ववाक्यसमाप्तौ व्यासङ्गवशात् तद्वाक्यमनाकर्ण्यैव वाक्यं समापयन्नाह, रक्षत्येनमिति।—बुधयोगः बुधेन सह चन्द्रस्य योगः, एकराशिस्थत्वरूपः समागमापरनामा सहवासः इति यावत्, "ताराग्रहाणामन्योऽन्यं स्यातां युद्धसमागमौ। समागमः शशाङ्केन सूर्येणास्तमनं सह॥" इति सूर्यसिद्धान्तोक्तेः। एनं चन्द्रं, रक्षति उद्धारयति। [चन्द्रबुधयोरेकराशिस्थत्वोक्त्याऽपि भङ्ग्या असम्पूर्णमण्डलत्वं सूचितम्]। "सूर्याचन्द्रमसोर्यः परो विप्रकर्षः सा पौर्णमासी" इति श्रुत्या तयोरत्यन्तविप्रकर्षकाले एव पौर्णमास्याः सम्भवस्य परिदर्शिततया, परमविप्रकर्षस्य च राशिषट्कान्तरे एव सम्भवेन "बुधो दैत्यगुरुश्चैव रवेः सन्निहितः सदा" इत्याद्युक्तेः बुधस्य रविराश्यपेक्षया द्विराश्यन्तरालपर्यन्ते एव स्थितेर्नियततया बुधयोगेन चन्द्रस्यापि द्विराश्यन्तराले एव स्थितेरवगमात् न परमविप्रकर्षः, ततो न पौर्णमासी, न वा सम्पूर्णमण्डलत्वं चन्द्रस्य, अतो न ग्रहणसम्भव इति भावः। एतेन "चन्द्र सम्पूर्णमण्डलम्" इति पाठस्तु प्रामादिक एव, बुधयोगकाले चन्द्रस्य कदाचिदपि सम्पूर्णमण्डलत्वासम्भवात्। पक्षान्तरे तु—बुधस्य विदुषश्चाणक्यस्य, योगः कार्यकौशलम्, एनं पूर्वोक्तं चन्द्रगुप्तं, रक्षति त्रायते, क्रूरग्रहाभिभवादिति शेषः। [अत्र श्लेषगण्डरूपः नाट्यालङ्कारः, तदुक्तं भरतेन—"द्व्यर्थत्वात् यत्र वाक्यानां श्लिष्टार्थः प्रतीयते। अन्यभङ्ग्याऽनुपात्तोऽपि श्लेषगण्डः स उच्यते॥" इति। अनुपात्तः,—अप्राकृतः, अपि-कारात् प्राकृत इत्यर्थः] ॥ ६ ॥

नटी। अज्ज! को उण एसो धरणिगोअरो भविअ चंदं गहाभिजोआदो (थ) रक्खिदुं इच्छदि ? *

सूत्र। आर्य्ये! यत् सत्यं मयाऽपि न उपलक्षितः। भवतु, भूयोऽभियुक्तः स्वरव्यक्तिमुपलप्स्ये। (द) [क्रूरग्रह इत्यादि पुनः पठति]।

[नेपथ्ये]। आः! क एष मयि स्थिते चन्द्रगुप्तम् अभिभवितुम् इच्छति बलात् ? (ध)

सूत्र। [आकर्ण्य]। (न) आं ज्ञातम्!!—

कौटिल्यः—" [इत्यर्द्धोक्ते नटी भयं नाटयति]। (प)

* आर्य्ये! कः पुनरेष धरणिगोचरो भूत्वा चन्द्रं ग्रहाभियोगात् रक्षितुमिच्छति ?

(थ) एवं सूत्रधारवाक्यसमाप्तौ रङ्गं प्रवेक्ष्यमाणस्य चाणक्याख्यपात्रस्य प्रवेशसूचनाय नटी नाम पृच्छति, आर्य्येति।—मयि स्थिते इत्यनेन स्वस्य स्थितौ चन्द्रस्य क्रूराभिभवो न सम्भवतीत्युक्तम्; तेन च स्वस्य तद्रक्षकत्वमर्थादायातमिति नेपथ्ये तद्वाक्यप्रयोक्तुः रक्षणसामर्थ्यं द्योतयितुं धरणीत्यादि विशेषितम्। धरणिः गोचरो विषयो देशो यस्य स भूमिदेशस्थ इत्यर्थः, गगन-भूमिस्थत्वेन ( नृपपक्षे—अत्युच्चासन-निम्नभूमिकास्थत्वेन च ) रक्ष्य-रक्षकयोः भिन्नस्थानत्वात् कथं रक्षकत्वसम्भवः ? इति प्रश्नार्थः; तेन तव रक्षणस्य शब्देन स्पष्टमनुक्तावपि न क्षतिरिति द्रष्टव्यम्। ग्रहाभियोगात्—राहोराक्रमणात् इत्यर्थः।

(द) धरणिस्थस्य चन्द्रग्रहणनिवारकत्वं न सम्भवतीति यदुच्यते तत् सत्यमित्यर्थः; किन्तु स्ववाक्यसमाप्तौ व्यासङ्गवता मया कतमोऽसौ इति नोपलक्षितः, —नेपथ्यान्तर्गतत्वेन न दृष्टः, नापि स्वरविशेषादयममुक इति अनुमितः, व्यासङ्गान्तरे स्वरविशेषज्ञानाभावादित्यर्थः। अभियुक्तः,—निविष्टः, अवहित इत्यर्थः। स्वरव्यक्तिं—स्वरेण—तारमन्द्रादिकण्ठस्वरविशेषेण, व्यक्तिं—विशिष्टजनम्, उपलप्स्ये—ज्ञास्यामीत्यर्थः।

(ध) अत्र यवनिकाऽन्तर्वर्त्तिना चाणक्येन नाटकीयस्य अर्थस्य सूचनात् प्रस्तावनामध्येऽपि चूलिका नाम अर्थोपक्षेपकः,—"अन्तर्यवनिकासंस्थैः सूचनार्थस्य चूलिका" इति दर्पणलक्षणात्, तथा—"अनिर्गता प्रविष्टैश्च नेपथ्यान्तर्गतैस्तथा। प्रयोजिता मध्यपात्रैः सूचिका चूलिका भवेत्॥" इति काव्येन्दुप्रकाशलक्षणात्।

(न) आकर्ण्य—स्वरविशेषेण तद्वाक्यप्रयोक्तारं चाणक्यमुपलभ्य।

(प) नाटयति—अभिनयति, नटधर्मेण शरीरादिचेष्टया भयं व्यञ्जयति

सूत्र ।—"—— कुटिलमतिः स एष येन
क्रोधाग्नौ प्रसभमदाहि नन्दवंशः ।
चन्द्रस्य ग्रहणमिति श्रुतेः सनाम्नो
मौर्य्येन्दोर्द्विषदभियोग इत्यवैति ॥ ७ ॥

तदित आवां गच्छाव: । [निष्क्रान्तौ] ।

इति प्रस्तावना । (फ)

---

इत्यर्थः । चाणक्यगुणवर्णनाप्रसङ्गेनापि नामग्रहणमात्रेण तस्य वर्णनं तस्य चातीव दुःसहकोपनतासूचनार्थमिति द्रष्टव्यम् ।

कुटिलमतिरिति ।—कुटिलमतिरित्यस्मिन् पदैकरहिते श्लोके प्राक् सूत्रधारपठितं "कौटिल्यः" इति पदमाकृष्य पूरणीयम् । येन क्रोधाग्नौ नन्दवंशः आत्मना सह योगानन्दस्य अष्टौ पुत्रा इत्याशयः, ("नव नन्दा भविष्यन्ति चाणक्यो यान् हनिष्यति" इति विष्णुपुराणे चाणक्यस्य नवनन्दहन्तृत्वमुक्तमत्रानुसर्त्तव्यम्) प्रसभं हठात्, न तु बहुकालेनेत्यर्थः, अदाहि भस्मीकृतः, "आः क एषः" इत्यादि-वाक्यप्रयोक्ता स एष कुटिलमतिः अतिक्रूरस्वभावः, कौटिल्यः चाणक्यः, [कुटिलस्वभावत्वात् तस्य कौटिल्य इत्यन्वर्थनामतेति द्योतयितुं कुटिलमतिरिति विशेषणम्] चन्द्रस्य ग्रहणमिति श्रुतेः श्रवणात्, समानं नाम यस्य स सनामा तस्य, ["ज्योतिर्जनपदरात्रिनाभिनाम—" (६।३।८५ पा०) इति समानस्य सादेशः] सनाम्नः तुल्यनामधेयस्य, चन्द्रसदृशनाम्नः, मौर्य्येन्दोः [मुरानाम्नी नन्दस्य राज्ञः काचित् किङ्करी आसीत्, तस्याः अपत्यं पुमान् मौर्य्यः स इन्दुः चन्द्र इवेति तथोक्तस्य] चन्द्रगुप्तस्य, द्विषदभियोगः द्विषता ["द्विषोऽमित्रे" (३।२।१३१ पा०) इति शतृप्रत्ययः] शत्रुणा, मलयकेतुसहितेन राक्षसेनेत्यर्थः, अभियोगः आक्रमणमिति यावत्, इति एवम्, अवैति अवगच्छति, बुध्यते इत्यर्थः । [उपैतीति पाठे—उपागच्छति, अथवा इति ज्ञात्वा तदसहमानः क्रोधेन इह रङ्गे उपैति उपागच्छति, प्रविशतीति यावत् । अत्र क्रोधे अग्नित्वारोपो वंशे वेणुत्वारोपहेतुरिति श्लिष्टपरम्परितं रूपकं मौर्य्येन्दोरित्युपमया संसृज्यते] । प्रहर्षिणी वृत्तं—"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" इति लक्षणात् । त्रयोदशाक्षरपादच्छन्दसां १४०१ तमप्रस्तारान्तर्गतं वृत्तमिदम् ॥ ७ ॥

(फ) प्रस्तावनेति ।—प्रस्तूयते—उद्भाव्यते इतिवृत्तम् अनयेति । तथा च उक्तं—

"नटी विदूषको वाऽपि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥

[ ततः प्रविशति मुक्तां शिखां परामृशन् चाणक्यः ]। (ख)

चाणक्यः। कथय, क एष मयि स्थिते चन्द्रगुप्तमभिभवितुम् इच्छति बलात्?—

आस्वादितद्विरदशोणितशोणशोभां
सन्ध्यारुणामिव कलां शशलाञ्छनस्य।
जृम्भाविदारितमुखस्य मुखात् स्फुरन्तीं
को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम्? ॥ ८ ॥

---

विशेषाद्यः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।
आमुखं तत् तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा ॥" इति।

अत्र सूत्रधार-नटी-प्रयुज्यमानानि चन्द्रग्रहणरूपार्थवन्त्यपि पदानि नामसाम्यतार्थमत्या चन्द्रगुप्तादिरूपार्थान्तरं सङ्क्रमय्य चाणक्यरूपपात्रस्य "अभिभवितुमिच्छति बलात्" इत्यनन्तरम् "आः !! क एषः" इत्याद्युक्तितः प्रवेश इति नवीनैरङ्गीकृतेयं प्रस्तावना उद्घात्यकाख्या।—"पदानि त्वगतार्थानि तदर्थगतये नराः। योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते ॥'' इति दर्पणलक्षणात्। प्राञ्चस्तु ''रसत्वेन तु कथोद्घातः" इत्यवलम्ब्य "स्वेतिवृत्तसमं वाक्यमर्थं वा यत्र सूत्रिणः" इति लक्षणात् सूत्रधारोक्तवाक्यार्थमादाय चाणक्यरूपपात्रस्य च प्रवेशात् कथोद्घातरूपां बहु मन्यन्ते इति।

---

(ख) प्रस्तावनां प्रतिपाद्य प्रकृते नाटके सम्प्रति मुखसन्धिरारभ्यते, "ततः प्रविशति" इत्यादिना।—सन्धिस्तु एकेन प्रयोजनेनान्वितानां कथांशानाम् अवान्तरप्रयोजनसम्बन्धरूपोऽवगन्तव्यः। तत्सामान्यलक्षणं यथा दर्पणे—"अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति" इति। मुखसन्धिस्तु नानारससमन्वितप्रारब्धबीजसमुत्पत्तिस्वरूपः। तत्रैव तल्लक्षणं यथा—"यत्र बीजसमुत्पत्तिर्नानाऽर्थरससम्भवा। प्रारम्भेण समायुक्ता तन्मुखं परिकीर्तितम् ॥" इति। इह च चन्द्रगुप्तकर्तृकोत्खातनन्दराक्षससङ्ग्रहरूपप्रयोजनात्मकचाणक्यनाट्यांशस्य अनुकूलदैवकृतराक्षसमुद्राप्राप्तिरूपावान्तरार्थसम्बन्धतया प्रारब्धबीजसमुत्पत्तिसम्बन्धतया चायं मुखसन्धिरिति। मुक्तां—बन्धनरहिताम्। (चाणक्यस्य शिखामोचनस्य इतिहासः एतद्ग्रन्थस्य पीठिकायां द्रष्टव्यः)। परामृशन्—स्पृशन्, कुण्डलीं कुर्वन् वा। नन्दकुलनाशनप्रतिज्ञावसरे मुक्ता शिखा न बद्धा, मौर्यकर्तृकस्थैर्यस्य प्रतिज्ञाऽवशेषस्य अद्यापि अनिष्पन्नत्वात्।

चन्द्रगुप्ताभिभवस्याशक्यतां दर्शयति, आस्वादितेति।—को जनः, [ एकेन

अपि च।—

मन्दकुल-कालभुजगीं कोपानलबहल लोल-धूमलताम्।
अद्यापि बध्यमानां बध्यः को नेच्छति शिखां मे ?॥ ८॥

---

राक्षसस्य दुःसाध्यसाधनक्षमत्वं परमसाहसिकत्वञ्च सूचितम्] जृम्भा मुखव्यादान-रूपा, शारीरजाड्यपरिहारकरूपक्रियाविशेषः इति यावत्, तया विदारितं प्रसारितं, मुखं येन तथोक्तस्य, [एतेन चाणक्यस्य अस्मिन् विषये अतिजागरूकत्वं व्यज्यते] हरेः सिंहस्य, ("सिंहो मृगेन्द्रः पञ्चास्यो हर्य्यक्षः केशरी हरिः" इत्यमरः) मुखात् आस्वादितेन पीतेन, द्विरदशोणितेन द्वौ रदौ दन्तौ यस्य स द्विरदः हस्ती, तस्य शोणितं, द्विरदशोणितं गजरुधिरं, तेन शोभा रक्तवर्णा, शोभा यस्याः ताम्, [एतेन अचिर-समुत्पादितनन्दवंशध्वंसरोषो नाद्यापि प्रशमित इति सूचितम्] सन्ध्यारुणां सन्ध्यारागेण अरुणां लोहितवर्णां, शशलाञ्छनस्य चन्द्रस्य, कलामिव [एतेन दृष्टान्तेन अभिनव-वर्द्धिष्णुचन्द्रगुप्तलक्ष्म्याः बहुजनाभिनन्दनीयत्वम्, अस्य अभ्युत्थानावस्था, लक्ष्म्याश्च चन्द्रगुप्तोपरि नवीनानुरागवत्त्वं सूचितम्] स्फुरन्तीं दीप्यमानाम्, (एतेन समग्राक्र-मया लक्ष्म्या वैरिदुःसाध्यत्वं सूच्यते] दंष्ट्रां दन्तं, परिभूय, हर्त्तुमिति शेषः, [एतेन शौर्य्यशियो दुरुद्धरत्वं सूचितम्] हर्त्तुम् इच्छति ? सिंहाभिभवेन तद्दन्तहरणेच्छेव मदभिभवेन चन्द्रगुप्तश्रीहरणेच्छा प्राणनाशिनी असाध्या चेति भावः। [अत्र सन्ध्या-रुणामित्यनेन जाग्रतोऽपि मम पौरुषं परिभूय अवज्ञाय च मौर्य्यलक्ष्मीं हर्त्तुं यतते इत्यहो! अतिशूरो दण्डनीतिपारदृश्वा स्वामिकार्य्यधुर्य्यो राक्षसोऽवश्य सङ्ग्राह्यः इति चाणक्योत्सुक्यमात्ररूपा बीजस्य आरम्भावस्था अर्थतः सूचिता। चन्द्रगुप्तलक्ष्मीस्थैर्य्य-फलकस्य राक्षससङ्ग्रहरूपकार्य्यस्य हेतुः अनुकूलदैवतः, चाणक्यनीतिप्रयोगोऽत्र बीजं बोद्धव्यम्; तल्लक्षणं यथा दर्पणे—"अल्पमात्रं समुद्दिष्टं बहुधा यत् विसर्पति। फलस्य प्रथमो हेतुः बीजं तदभिधीयते॥" इति। अत्र सिंहाभिभवेन दन्तग्रहणेच्छेव मदभिभवेन चन्द्रगुप्त-श्रीहरणेच्छेति बिम्बप्रतिबिम्बभावबोधनात् निदर्शनाऽलङ्कारः। दुण्ढिराजस्तु अत्र रूपकातिशयोक्तिर्नामालङ्कारमुक्त्वा तल्लक्षणं दर्शितवान्; तथा हि— "रूपकातिशयोक्तिः स्यात् निगीर्य्याध्यवसानतः" इति]। वसन्ततिलकं वृत्तं— "ज्ञेयं वसन्ततिलकं तभजा जगौ गः" इति लक्षणात्। एतच्च वृत्तं चतुर्दशाक्षर-पादच्छन्दसां २९१२ तमप्रस्तारान्तर्गतम्॥ ८॥

मुक्तां शिखां स्पृशन् इत्यनेन शिखामोचनापराधजनितनन्दवंशहननरूपं कार्य्यं समापितम्, इदानीं प्रतिज्ञातार्थसिद्धेः तत्संयमनावसरः प्राप्त इति तद्भाव उदयम्

अपि च ।—

उल्लङ्घयन् मम समुज्ज्वलतः प्रतापं
कोपस्य नन्दकुलकाननधूमकेतोः ।
सद्यः परात्मपरिमाणविवेकमूढः
कः शालभेन विधिना लभतां विनाशम् ? ॥१०॥

शार्ङ्गरव ! शार्ङ्गरव ! (भ)

---

सूचितः, किन्तु पुनरपि चन्द्रगुप्ताभिभवोक्त्या कोपोपशमनं न जातमिति दर्शयन्नाह, नन्दकुलेति ।—बध्यः बधार्हः, को जनः, नन्दकुलस्य कालभुजगीं नाशकत्वात् कृष्ण-सर्पीं, कोप एव अनलः तस्य बहला गुर्वीं, लोला चञ्चला, धूमलता ताम् । ["लोला" इत्यत्र "नीला" इति पाठे—कृष्णवर्णेत्यर्थः ] मे मम, शिखाम् अद्यापि प्रतिज्ञापूरणे-ऽपीत्यर्थः, [ अद्यापीत्यनेन मच्छिखामोचनफलं नन्दवंशनिधनं प्रत्यक्षतो दृष्टाऽपि मदनभिप्रेतवस्तुकरणाय उद्यमः अविमृष्यकारितैवेति सूचितम् ] बध्यमानां संयन्तु-मारभ्यमाणां, न इच्छति ? मलयकेतुनिग्रहं विना शिखां न बध्नामि इति निष्कृष्टोऽर्थः । [ अत्र नैल्यकौटिल्यादिगुणेन शिखायां भुजगीत्वाद्यारोपाद्रूपकं, कोपे अनलत्वारोपस्य शिखायां धूमलतात्वारोपे हेतुत्वात् परम्परितं च इत्युभयोः सङ्करः ] । आर्या वृत्त-मिदम् । लक्षणमुक्तं प्राक् । अत्रापि षष्ठो गणो जः, तथा सा च एकविंशति-लघुवर्णान्तर्गतत्वात् चपला, बहुनायकत्वात् (जगणवत्त्वात्) वेश्या च इति सुधीभिर्विभाव्यम् ॥ ९ ॥

इममेव संरम्भं वीररसेन उपोद्बलयति, उल्लङ्घयन्निति ।—परात्मपरिमाणविवेक-मूढः परस्य आत्मनश्च यः परिमाणः उन्नतिः अवनतिर्वा, तस्य विवेकः विशेषज्ञानं, तस्मिन् मूढः अनभिज्ञः, परः स्वो वा कीदृक् क्षमतावान् इति ज्ञानविहीन इत्यर्थः, ( "परिमाण" इति पाठेऽपि—तथा एवार्थः ) को जनः, नन्दकुलमेव काननं तस्य धूमकेतुः अग्निः तस्य, समुज्ज्वलतः देदीप्यमानस्य, अनिवार्यवेगस्येत्यर्थः, मम कोपस्य प्रतापं तेजः, उल्लङ्घयन् अतिक्रामन् सन्, शालभेन पतङ्गोचितेन, विधिना व्यापारेण, अग्निप्रवेशरूपेण, दहनज्वालापतयालुशलभरीत्येति यावत्, सद्यः तत्क्षणात्, विनाशं लभताम् ? प्राप्नोतु ? ( अत्र सम्भावनायां लोट् । नन्दकुलेत्यादौ परम्परितरूपकं शालभेनेति निदर्शनया संसृज्यते ] । वसन्ततिलकं वृत्तम् ॥ १० ॥

(भ) आर्य्यव्यग्रतया विक्तिः ।

शिष्यः । [ प्रविश्य ] । उपाध्याय ! आज्ञापयतु ।

चाण । वत्स ! उपवेष्टुमिच्छामि । (म)

शिष्यः । उपाध्याय ! ननु इयं सन्निहितवेत्रासनैव द्वार-प्रकोष्ठशाला, तदस्याम् उपवेष्टुम् अर्हति उपाध्यायः ।

चाण । वत्स ! कार्य्याभियोग एव अस्मान् आकुलयति न पुनः उपाध्यायसहभूः शिष्यजने दुःशीलता । (य) [ नाट्येन उपविश्य आत्मगतम् ] । (र) कथं प्रकाशतां गतोऽयमर्थः पौरेषु, यथा किल नन्दकुलविनाशजनितरोषो राक्षसः पितृवधामर्षितेन सकलनन्दराज्यपरिपणनप्रोत्साहितेन (ल) पर्वतकपुत्रेण

---

(म) इदमुपालम्भगर्भवचनम्, अधुनाऽपि न त्वया आसनं सज्जितमित्यभिप्रायः ।

(य) कार्य्याभियोगः,—कार्य्ये—वैरनिर्य्यातनरूपे व्यापारे, अभियोगः,—अभिनिवेशः, मनःसमाधिरूपः एव, अस्मान् [अविशेषणत्वेन अस्मदः एकत्वेऽपि बहुवचनम् ] आकुलयति—व्याकुलीकरोति, कार्य्यान्तरव्यासक्तस्यापि तवाह्वाने मुखरयतीत्यर्थः । [ "कार्य्याभियोगः" इत्यनेन अनिर्वाहणात बिन्द्वादिरूपेण अनेकधा विस्तारिष्यः कार्य्यहेतोः चाणक्योद्योगस्य बीजस्य लेशोद्देशः कृतः ] । उपाध्यायानां सहभूः,—सहजा, उपाध्यायस्वाभाविकी, उपाध्यायत्वव्याप्येति यावत्, शिष्यजने—त्वादृशे, दुःशीलता—अकर्तव्याचारः, न पुनः आकुलयति । अयं भावः,—गुरुभिरभीष्टान्वेषणे हि शिष्यैरन्यतस्तदाहरणमेव विधेयं, शिष्यस्य अभीष्टान्वेषणे तु गुरुणा तत्स्थानोपदेश एव कर्त्तव्यो न तु तदाहरणं, भवता तु अनादायैव आसनं तत्स्थानस्य उपदेशात् उपाध्यायसदृशीशीलता, सा तु शिष्यजने भवादृशे दुःशीलताऽपि कार्य्यान्तराभिनिविष्टं मां नाकुलयतीति । यद्वा—अल्पेऽप्यपराधे शिष्यान् प्रति उपालम्भ उपाध्यायानां सहजो दोषः, त्वं तु सेवायाम् अत्यन्तमवहितोऽसि, कार्य्यव्यग्रत्वादेव त्वामुपालम्भवानस्मीत्यर्थः ।

(र) आत्मगतं—स्वगतं, सर्वजनैः अश्रवणीयं सामाजिकमात्रश्रव्यमित्यर्थः, "अश्राव्यं न सर्वस्य स्वगतं तदिहोच्यते" इति भरतवचने सर्वपदस्य सामाजिकेतरपरत्वात् [ इदं क्रियाविशेषणम् ] ।

(ल) पितुः,—पर्वतकस्य, वधेन—विषकन्यया चाणक्येन हननेन, अमर्षितेन—

मलयकेतुना सह सन्धाय तदुपगृहीतेन च महता म्लेच्छराजेन परिवृतो वृषलम् अभियोक्तुमुद्यत इति। (ब) [विचिन्त्य]। अथ वा (श) येन मया सर्वलोकप्रकाशं नन्दवंशवधं प्रतिज्ञाय निस्तीर्णा दुस्तरा प्रतिज्ञासरित्, सोऽहमिदानीं प्रकाशीभवन्त-मपि एनम् अर्थं (ष) न समर्थः किं प्रशमयितुम्? इति। कुत एतत्? यस्य मम—

श्यामीकृत्याननेन्दून् रिपुयुवतिदिशां सन्ततैः शोकधूमैः
कामं मन्त्रिद्रुमेभ्यो नयपवनहृतं मोहभस्म प्रकीर्य।
दग्ध्वा सम्भ्रान्तपौरद्विजगणरहितान् नन्दवंशप्ररोहान्
दाह्याभावान्न खेदात् ज्वलन इव वने शाम्यति क्रोधवह्निः ॥११॥

---

कृतेन। सकलेति।—सकलनन्दराज्यस्य परिपणं—चन्द्रगुप्तजये ग्लहत्वेन दानाङ्गीकारः, तेन प्रोत्साहितेन—जनितोत्साहेन।

(ब) वृषल वृषं—धर्मं, लाति—नाशयतीति वृषलः,—शूद्रः तं चन्द्रगुप्तं, शूद्रा-गर्भजातत्वादस्य वृषलत्वम्। अभियोक्तुम—आक्रमितुम।

(श) अत्र कथमेतदित्यादिना पुरमेतत् नन्दभीलबलाधिष्ठितं, प्रकृतयश्च नन्दामात्ये राक्षसेऽनुरक्ताः, अतस्तद्योगमाकर्ण्य महान्तमन्तःक्षोभं ते जनयेयुः, ततश्च महत् सङ्कटमापतेदिति चिन्ता। तत्परिहारमाह, अथवेति।—समागतमप्येनं हठेन निग्रहीतुं समर्थः इत्यर्थः।

(ष) एनमर्थं—मलयकेतुसहायेन राक्षसेन क्रियमाणं चन्द्रगुप्ताभियोगमित्यर्थः।

अत्र श्लोकद्वयेन स्वसामर्थ्यमेव उद्भावयन्नाह, श्यामीकृत्येति।—यस्य मम (इति गद्यस्थपदद्वयमस्य श्लोकस्य चादावनुषञ्जनीयम) क्रोधवह्निः कोपानलः, सन्ततैः सुविस्तृतैः, शोकधूमैः शोकाः पत्यादिवियोगजनिताः खेदाः एव, धूमाः तैः रिपुयुवति-दिशां रिपूणां युवतयः एव दिशः तासाम् आननानि मुखानि एव, इन्दवः तान् श्यामीकृत्य मलिनीकृत्य, मन्त्रिद्रुमेभ्यः मन्त्रिणः नन्दसचिवाः एव, द्रुमा वृक्षाः तेभ्यः, [अत्र "कर्मणा यमभिप्रैति स सम्प्रदानम्" (१।४।३२ पा०) इति विक्षेपक्रिययाऽभि-प्रेतानां मन्त्रिद्रुमाणां सम्प्रदानत्वं "पत्ये शेते" इतिवत्] नयः अस्मदनार्या नीतिः एव, पवनः वेगवत्त्वात् विक्षेपकत्वाच्च मारुतः, तेन हृतं चालितं, मोहः कार्याज्ञ-

अपि च ।—

शोचन्तोऽवनतैर्नराधिपभयात् धिक्शब्दगर्भैर्मुखैः
मामग्र्यासनतोऽवकृष्टमवशं ये दृष्टवन्तः पुरा ।
ते पश्यन्तु तथैव सम्प्रति जना नन्दं मया सान्वयं
सिंहेनेव गजेन्द्रमद्रिशिखरात् सिंहासनात् पातितम् ॥१२॥

---

मुढ़ता एव, भस्म तत् कामं यथेष्टं, प्रकीर्य्य विक्षिप्य, स्वमन्त्रशक्त्या तान् मोहयित्वा इत्यर्थः, सम्भ्रान्तपौरद्विजगणरहितान् सम्भ्रान्ता मान्याः, ये पौराः पुरवासिनः, ते एव द्विजगणाः पक्षिसमूहाः, तैः रहितान् तद्व्यतिरिक्तान् इत्यर्थः, वेणुवनदाहे पक्षिण उड्डीय पलायन्ते इति भावः; नन्दवंशप्ररोहान् नन्दस्य वंश एव वंशः वेणुः, तस्य प्ररोहान् अङ्कुरान्, शिशुपर्य्यन्तान् नन्दवंश्यान् इत्यर्थः, दग्ध्वा भस्मीकृत्य, दाह्यस्य नाश्यस्य अन्यवस्तुनः. अभावात् असत्त्वात्, न तु खेदात् परिश्रमात्, [सम्प्रति अपरो दाह्यो मलयकेतुः प्राप्तः, तथाप्ययं ज्वलिष्यति इति न खेदादित्यनेन ध्वनितम्] वने ज्वलन इव दावानल इव, शाम्यति विरमति। ज्वलनस्य सादृश्यविषयोक्तावपि पुनः क्रोधे वह्नित्वारोपणं साङ्गिककोपवह्नेरसह्यत्वद्योतनार्थं "—राजेन्दुरिन्दुः क्षीर-निधाविव" इत्यादिवदिति बोद्धव्यम्। [अत्र समस्तवस्तुविषयं रूपकं ज्वलन इवेत्युप-मया न खेदादिति परिसङ्ख्यया च सङ्कीर्य्यते]। स्रग्धरा वृत्तम् ॥ ११ ॥

शोचन्त इति।—ये दर्शका उदासीनाश्च जनाः, पुरा नराधिपात् योगानन्दात्, भयं तदादिष्टकर्मणि निन्दितत्वकथने राज्ञः कोपः स्यादिति यत्त्रासः तस्मात्, राज-भयादित्यर्थः, धिक्शब्दगर्भैः धिक् राजानमिति शब्दः, गर्भे अभ्यन्तरे येषां तैः अस्पष्ट-धिक्शब्दैः, उपांशूच्चारितधिक्शब्दैरिति यावत्, अवनतैः निन्दितकर्मणो दर्शनेऽपि दोषः स्यादित्याशयेन नम्रीकृतैः, मुखैः उपलक्षिताः [विशेषणे तृतीया] शोचन्तः अन्तःशोकं कुर्वन्तः सन्तः, मां चाणक्यम्, अग्र्यासनतः उत्कृष्टश्राद्धीयब्राह्मणासनात्, अवकृष्टं च्यावितम्, अवशं प्रतीकारासमर्थं यथा स्यात् तथा इत्यर्थः, मामित्यस्य विशेषणं वा, दृष्टवन्तः, ते जनाः, सम्प्रति इदानीं, सिंहेन अद्रिशिखरात् पर्वतशृङ्गात्, गजेन्द्रमिव सान्वयं सवंशं, पुत्रादिसहितं, न केवलमेकमित्यर्थः, नन्दं योगानन्दं, मया सिंहासनात् सिंहाङ्कितराजासनात्, पातितं भ्रंशितं, तथैव पूर्ववत् शोचन्त एव, पश्यन्तु। योगानन्देन यथा ममापकृतं, मयाऽपि तस्य तथैवापकृतमिति द्योतनाय तथैवेति शब्दो, दुःसहो मदीयः क्रोधः सर्वथोन्मूलकः इति भावः। [अत्र उपमाऽलङ्कारः]।

सोऽहमिदानीम् अवसितप्रतिज्ञाभरोऽपि वृषलापेक्षया शस्त्रं धारयामि । येन मया (स)—

समुत्खाता नन्दा नव हृदयरोगा इव भुवः
कृता मौर्य्ये लक्ष्मीः सरसि नलिनीव स्थिरपदा ।
द्वयोः सारं तुल्यं द्वितयमभियुक्तेन मनसा
फलं कोपप्रीत्योर्द्विषति च विभक्तं सुहृदि च ॥ १२ ॥

शार्दूलविक्रीडितं वृत्तं, "सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्" इति लक्षणात् । अस्य वृत्तस्य प्रस्तारस्तु—१४९३२७ तमः ॥ १२ ॥

(स) प्रतिज्ञा भर इव दुःखेन वाह्यत्वात्, अवसितः—समाप्तः, प्रतिज्ञाभरो यस्य सः अवसितप्रतिज्ञाभरः,—तीर्णप्रतिज्ञ इत्यर्थः, [ अवपूर्वकात् स्यतेः कर्त्तरि क्ते सित इति सिद्धम् ] । तीर्णप्रतिज्ञस्य शस्त्रधारणे कारणमाह, वृषलापेक्षयेति ।— वृषलापेक्षया—चन्द्रगुप्तानुरोधेन । शस्त्रम्—उद्योगम् । [ एतेन उपक्षेपो नाम मुखसन्धेरङ्गं प्रदर्शितम् ; तल्लक्षणं यथा दर्पणे—"काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः" इति । राक्षसवशीकरणरूपकार्य्यबीजस्य स्वोद्योगस्य बीजन्यासादुपक्षेपात् शस्त्रधारणमावश्यकमित्याह, येनेति ।—एतत् पदद्वयं पद्यस्थेषु वक्ष्यमाणेषु समुत्खाता इति, कृता इति, विभक्तमिति च क्रियापदेषु अन्वेति ] ।

समुत्खाता इति ।—येन मया हृदयरोगा इव हृदयस्य रोगाः विषयवासनारूपा अन्तःव्रणा इव, योगानन्दस्तत्पुत्राश्चाष्टौ इति नव नन्दाः, भुवः पृथिव्याः, [ इति षष्ठ्येकवचनम् ] समुत्खाताः समूलमुन्मूलिताः, यद्वा—भुवः पृथिव्याः, हृदयरोगा इव स्थिताः, अत्यन्तप्रकृतिरञ्जनात् तेषां तथात्वम् । "नव नन्दा भविष्यन्ति चाणक्यो यान् हनिष्यति" इति पुराणमत्रानुसन्धेयम् । येन च मया सरसि नलिनीव मौर्य्ये चन्द्रगुप्ते, लक्ष्मीः राजश्रीः, स्थिरपदा अचला, चिरस्थायिनीति यावत्, कृता, [ एतेन परिकरो नाम मुखसन्धेः अङ्गं प्रदर्शितम् ; तद्यथा—"समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः" इति दर्पणोक्तेः ] तथा येन च मया अभियुक्तेन अभिनिविष्टेन, निग्रहानुग्रहाभिनिवेशवतेत्यर्थः, मनसा द्वयोः कोप-प्रीत्योः क्रोधानुरागयोः, तुल्यमनुरूपं, सारं न्याय्य, ("सारो बले स्थिरांशे च न्याय्ये क्लीवं वरे त्रिषु" इत्यमरः) द्वितयं द्विविधं, निग्रहानुग्रहरूपं फलं, द्विषति शत्रौ योगानन्दे, सुहृदि शरणागततया ज्ञातिमित्रे चन्द्रगुप्ते च, विभक्तं यथायथमर्पितमित्यर्थः । [ एतत् तु परिभावना नाम मुखसन्धेरङ्गम् ; तल्लक्षणं यथा—"कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना" इति दर्पणे ।

अथ वा अपक्षीते राक्षसे किमुत्खातं नन्दवंशस्य वा स्थैर्य्यमुत्पादितं चन्द्रगुप्तलक्ष्म्याः ? [विचिन्त्य]। अहो ! राक्षसस्य नन्दवंशे निरतिशयो भक्तिगुणः ; स खलु कस्मिंश्चित् अपि जीवति नन्दान्वयावयवे वृषलस्य साचिव्यं ग्राहयितुं न शक्यते। तदभियोगं प्रति निरुद्योगः अस्माभिः अवस्थापयितुं शक्य इति अनया एव बुद्ध्या तपोवनगतोऽपि घातितस्तपस्वी नन्दवंशीयः सर्वार्थसिद्धिः ; यावत् असौ मलयकेतुम् अङ्गीकृत्य अस्मदुच्छेदाय विपुलतरं प्रयत्नम् उपदर्शयति एव। [प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा]। साधु अमात्य राक्षस ! मन्त्रिबृहस्पते ! साधु। (छ) कुतः ?—

---

हृदयरागा इव मलिनीव इति चोपमाद्वयं हितीयार्द्धगतेन यथासङ्ख्येन संसृज्यते]। शिखरिणी वृत्तं, "रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात्। वृत्तस्यास्य प्रस्तारसङ्ख्या तु ५९१३०तमा ॥ १२ ॥

(छ) अपक्षीते—अनायत्तीकृते, यद्वा—चन्द्रगुप्तस्य साचिव्यम् अग्राहिते इत्यर्थः। [किमुत्खातमित्यनेन राक्षसस्य बुद्धिमाहात्म्यात् पुनरपि नन्दवंशः समुत्थास्यते इति ध्वन्यते ; तथात्वे च चन्द्रगुप्तलक्ष्म्या न स्थिरता इति सर्वानर्थमूलं राक्षस एव नन्दामात्यः निग्राह्यः इति भावः]। अहो इति।—इयं बीजविषये आश्चर्य्यावेशः परिभावना नाम तृतीयमङ्गम्। निरतिशयः,—निः,—नास्ति, अतिशयो यस्मात् सः, अतिमहानित्यर्थः। नन्दान्वयावयवे—नन्दवंशाङ्कुरे इत्यर्थः। साचिव्यं—मन्त्रित्वम्। तदभियोगं—तस्य—नन्दान्वयावयवस्य, अभियोगं प्रति—प्रतिष्ठापनाभिमानं प्रति। निरुद्योगः,—व्यवसायहीनः। अवस्थापयितुं—वशे स्थापयितुम्। [पूर्वं गूढतया कृतस्य बीजस्य प्रकाशनात् उद्भेदो नाम मुखसन्धेः अङ्गमिदम् ; यथा दर्पणे—"बीजार्थस्य प्ररोहः स्यादुद्भेदः—" इति]। तपोवनगतः,—वैरनिर्य्यातनासामर्थ्यात् जातवैराग्यतया वानप्रस्थधर्म्माश्रित इत्यर्थः, [तेन राज्याभिलाषविरहं सूचयति]। तपस्वी—अक्षमत्वात् निरपराधः। घातितः,—तथाऽपि मत्प्रणिधिना नाशितः इत्यर्थः। [इन्तेर्णिजन्तात् कर्म्मणि क्तः]। तद्वधे हेतुं दर्शयति, यावदिति।—असौ—सर्वार्थसिद्धिः, सर्वराज्याभिलाषशून्योऽपि इत्यर्थः। मलयकेतुं—निजपुत्रमिव यावत्। अङ्गीकृत्य—अस्मद्राज्ये राजा भवतु इत्येवं कौमुत्येति यावत्। प्रयत्नं—चेष्टाम् ; ["प्रयत्नम्" इत्यत्र

ऐश्वर्य्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाऽऽशया ।
भर्त्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया
भक्त्या कार्य्यधुरां वहन्ति कृतिनस्ते दुर्लभास्त्वादृशाः ॥ १४ ॥

अत एवास्माकं त्वत्सङ्ग्रहे प्रयत्नः. (क) कथमसौ वृषलस्य साचिव्यग्रहणेन सानुग्रहः स्यादिति । कुतः ?—

---

"प्रपन्नम्" इति पाठे—युक्तार्थोदयोगम्] । उपदर्शयत्येव—अवश्यम् उपदर्शयिष्यतीत्यर्थः ; [ "यावत्पुरानिपातयोः लट्" ( ३ । ३ । ४ पा० ) इति यावच्छब्दयोगे भव्ये लट् ] । "स्थितस्याभिमुखीभावमात्रं सम्बोधनं विदुः" इति भर्तृहरिकारिकोक्तेः विप्रकृष्टस्य राक्षसस्य सम्बोधनानौचित्यात् तत्सम्बोधनसमर्थनाय कविराह, प्रत्यक्षवदिति ।—अप्रत्यक्षमपि राक्षसरूपं लक्ष्य—सम्बोध्यम्, आकाशे प्रत्यक्षवत्—प्रत्यक्षेण तुल्य, बद्धा—बुद्धिस्थत्वेन आकाशे स्थितमिति कृत्वेत्यर्थः । मन्त्री बृहस्पतिरिव सूक्ष्मार्थदर्शित्वात् [ इति उपमितसमासः ] मन्त्रिणां बृहस्पतिरिव श्रेष्ठत्वादिति वा तत्सम्बुद्धौ, साधु इत्यव्ययम्, अध्याहर्त्तव्यकरणक्रियाविशेषणं सम्बोध्यविशेषणं वा ।

साधुत्वमेवाह, ऐश्वर्य्यादिति ।—अयं प्रत्यक्षदृश्यो भूमिस्थः, लोकः सांसारिकजन इत्यर्थः. ऐश्वर्य्यात् सम्पदः, अनपेतम् अभ्रष्टम्, ऐश्वर्य्यशालिनमित्यर्थः, ईश्वरं प्रभुम्, अर्थतः अर्थलाभहेतोः, [ सार्वविभक्तिकस्तसिः ] सेवते. ये पुनः विपत्तिषु प्रभोः शत्रुपराभवदुर्भिक्षादिकालेषु, तम् ईश्वरम्, अनुगच्छन्ति अनुसरन्ति, तद्विपत्तौ आत्मानं विपन्नमिव मन्यन्ते इत्यर्थः ; अथवा तद्विपदुद्धाराय यत्नातिशयं दर्शयन्तीत्यर्थः, ते तत्प्रतिष्ठाशया तस्य प्रभोः, प्रतिष्ठा पुनरुत्थानं, तत्र या आशा तया प्रभोः पुनः अभ्युदये अस्माकम् अभीष्टलाभो भविष्यतीति प्रत्याशया इत्यर्थः, यशोलिप्सयेति वा, अनुगच्छन्तीत्यनुषज्यते ; ये तु भर्त्तुः स्वामिनः, प्रलये मरणेऽपि, पूर्वसुकृतासङ्गेन स्वामिकृतपूर्वोपकाराविस्मरणेन, निःसङ्गया निर्लोभया, स्वार्थशून्यया, भक्त्या कार्य्यस्य धूः इति ( "ऋक्पूरब्धूः—" ( ५।४।७४ पा० ) इति अ-प्रत्ययः ) कार्य्यधुरा तां कार्य्यधुरां स्वामिनियुक्तकार्य्यभारं, वहन्ति त्वादृशा भवादृशाः, ते कृतिनः कर्मिष्ठाः, दुर्लभाः विरलाः । [ अनेन गुणाख्यानेन विलोभनं नाम मुखसन्ध्यङ्गं प्रकटितम् ; यथा दर्पणे—"गुणाख्यानं विलोभनम्" इति ] । शार्दूलविक्रीडितं वृत्तम् ; "सूर्य्याश्वैः यदि मः सजौ सततगाः शार्दूलविक्रीडितम्" इति लक्षणात् । अत्र मतान्तरेण १४८१२७ तमः ॥१४॥

अप्राज्ञेन च कातरेण च गुणः स्यात् सानुरागेण कः
प्रज्ञाविक्रमशालिनोऽपि हि भवेत् किं भक्तिहीनात् फलम् ?।
प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये
ते भृत्या नृपतेः कलत्रमितरे सम्पत्सु चापत्सु च ॥ १५ ॥

तत् मयाऽपि अस्मिन् वस्तुनि न शयानेन स्थीयते, यथा-शक्ति क्रियते तद्ग्रहणं प्रति यत्नः ; (ख) कथमिति ? अत्र तावत् वृषलपर्वतकयोः अन्यतरविनाशेनापि चाणक्यस्य अपकृतं भवतीति विषकन्यया (ग) राक्षसेन अस्माकम् अत्यन्तोपकारी मित्रं

---

(क) अत एव—अलौकिकगुणशालित्वात्। [ एतेन करणं नाम मुखसन्ध्यङ्गं निरूपितम् ; यथा दर्पणे—"—करणं पुनः। प्रकृतार्थसमारम्भः" इति।

अप्राज्ञेनेति।—सानुरागेण अनुरागवता, अप्राज्ञेन बुद्धिरहितेन, कातरेण विक्रमशून्येन च, भृत्येन नृपतेः कः गुणः किं फलं, स्यात् ? न कोऽपीत्यर्थः। [ चकारद्वयं समुच्चयार्थकम् ]। प्रज्ञाविक्रमशालिनः बुद्धिविक्रमवतोऽपि, भक्तिहीनात् राज्ञि अनुरागशून्यात् भृत्यात् वा, नृपतेः किं फलम् ? न किमपि इत्यर्थः। येषां प्रज्ञाविक्रमभक्तयः समुदिताः समस्ता एव, गुणाः, सन्तीति शेषः, ते भृत्या नृपतेः सम्पत्सु विभूतिकालेषु, आपत्सु विपत्काले च, भूतये मङ्गलाय, भवन्तीति शेषः, इतरे प्रज्ञादिशून्याः भृत्याः, नृपतेः कलत्रम् ऐश्वर्यलाभकामनयैव सेवनात् वनितेव, "न वै पत्युः कामाय प्रिया भवति आत्मनस्तु कामाय" इति श्रुतेः स्त्रीणां स्वकामायैव पतिसेवनं प्रसिद्धं, तस्मादृशाश्च तेऽपि कलत्रं न तु यथार्थभृत्या इति भावः। [ अनेन भेदकथनेन भेदो नाम मुखसन्ध्यङ्गं प्रदर्शितम् ; तल्लक्षणं यथा दर्पणे—"—भेदः संहतभेदनम्" इति ]। अत्रापि वृत्तं शार्दूलविक्रीडितम् ॥ १५ ॥

(ख) अस्मिन् वस्तुनि—एतस्मिन् विषये। न शयानेन—न निरुद्योगतया शयान-तुल्येन, अनवहितेन इति यावत्, [ यद्वा—नशयानेनेति समस्तं पदं, नञर्थस्य नशब्दस्य सुप्सुपेति समासः, सावधानेन इत्यर्थः। इदं बीजसंविधानं समाधानमङ्गं, बीजस्य सम्यग्विधानात् ]। तद्ग्रहणं—तस्य—राक्षसस्य, ग्रहणं—निग्रहणं, चन्द्रगुप्तसाचिव्यार्थग्रहणं वा।

(ग) तस्य हनने राक्षसस्य अभिप्रायं दर्शयति, चाणक्यस्यापकृतमिति।—वृषल-पर्वतकयोरुभयोरपि चाणक्यमित्रत्वेन एकतरविनाशेऽपि स्वाधीनतया अन्यतरस्य

घातितः तपस्वी पर्वतेश्वर इति सञ्चारितो जगति जनापवादः लोकप्रत्ययार्थम्। अस्यैव अर्थस्याभिव्यक्तये (घ) "पिता ते चाणक्येन घातितः" इति रहसि त्रासयित्वा भागुरायणेन अपवाहितः पर्वतकपुत्रो मलयकेतुः। शक्यः खलु एष राक्षसमतिपरिगृहीतोऽपि व्युत्तिष्ठमानो बुद्ध्या निवारयितुम्। (ङ) न पुनरस्य

---

विनाशः सुकरः इति चाणक्यगृहीतपक्षोच्छेदो भविष्यतीत्याशयेनैव तद्धननमित्यर्थः। अनेन तत्कर्तृकहननयोग्यत्वं सम्भावितम्। विषकन्यया—सम्भोगक्षणादेव यया मृत्युर्भवेत् तया सज्जितया कन्यया, यद्वा—यत्सम्भोगात् सम्भोगोत्तरक्षणमेव नाशः तादृशाशुभलक्षणवत्या कन्यया, [अत्र प्रयोज्यकर्त्तरि तृतीया] तद्यथा सुश्रुतकल्पस्थाने १म अध्याये—"विषैर्निहन्युर्निपुणं नृपतिं दुष्टचेतसः। स्त्रियो वा विविधान् योगान् कदाचित् सुभगेच्छया। विषकन्योपयोगाद्वा क्षणाज्जह्यादसून् नरः॥" इति। अस्य टीकायां डल्लनः,—"हन्ति स्पृशन्ती स्वेदेन गम्यमाना च मैथुने। पक्षघ्नतादि च फलं प्रशान्तयति मैथुनम्॥" इति। ज्योतिषेऽपि—"सूर्य्यभौमार्किवारेषु तिथिर्भद्रा शताभिषम्। अश्लेषा कृत्तिका चेत् स्यात् तत्र जाता विषाङ्गना॥ अनुर्लग्ने रिपुक्षेत्र संस्थितः पापखेचरः। द्वौ समावपि योगेऽस्मिन् सञ्जाता विषकन्यका॥ लग्ने शनिश्चरो यस्याः सुतेऽर्कौ नवमे कुजः। विषाख्या साऽपि गोदाख्या विविधा विषकन्यका॥" इति।

(घ) लोकप्रत्ययार्थं—पर्वतको नाम कश्चित् राजा चाणक्यस्य मित्रमासीत्, तस्य स्वयं हननं कदाऽपि न सम्भाव्यते, तथात्वे च चन्द्रगुप्तस्य सहायहीनत्वं स्यादिति "राक्षसेनैव असौ घातितः" इत्येवं साधारणजनविश्वासार्थं, यथा लोका इममेव अर्थं सत्यं मन्येरन् अमात्य कृतघ्नान् नावगच्छेयुस्तदर्थमिति यावत्। अस्यैव—पर्वतकवधरूपस्य, अर्थस्य—वस्तुनः, अभिव्यक्तये—तेन कृतमिति प्रकाशनाय। निर्दयस्यैव कथं राक्षसेन घातितस्तातो न चाणक्येन इत्येवं मलयकेतुं प्रति अमुमेवार्थं प्रत्याययितुमित्यर्थः।

(ङ) एवमपवादेऽपि अमात्यस्य अयथार्थतया राक्षसेन पर्वतकपुत्रं मलयकेतुं प्रति यथार्थस्य तत्कर्तृकहननस्य कथनेन त्रासः समुत्पादितः इत्याह, पिता ते इत्यादि। —चाणक्येनैव, न तु मया इति रहसि त्रासयित्वा अत्यन्तमित्रस्य भवत्पितुः तेन हननात् भवतोऽपि ततो नाशः भविष्यतीति भयं कृत्वा अपसारितः इति भावः। अपवाहितः,—अपसारितः, स्थानान्तरं नीत इत्यर्थः। राक्षसमतिपरिगृहीतः,—राक्षस-

निग्रहात् पर्वतकवधोत्पन्नमयशः प्रकाशीभवत् प्रमार्ष्टुम् अलम् इति। अन्यच्च, नियुक्ताश्च मया स्वपरपक्षयोः अनुरक्तापरक्तजनजिज्ञासया बहुविधदेशभाषावेशाचारसञ्चारवेदिनो नानाव्यञ्जनाः प्रणिधयः; अन्विष्यन्ते च कुसुमपुरनिवासिनां नन्दामात्यसुहृदां निपुणतरं प्रचारगतयः। तत्तत्कारणम् उत्पाद्य कृतकृत्यताम् आपादिताः चन्द्रगुप्तसहोत्थायिनो भद्रभटप्रभृतयः प्रधानपुरुषाः। (च) शत्रुप्रयुक्तानाञ्च तीक्ष्णरस-

---

मतिः परिगृहीता येन सः [ निष्ठान्तस्य आहिताग्न्यादित्वात् परनिपातः ]। मलयकेतुरर्द्धराज्यप्रदानेन अत्रैव स्थापितश्चेत् तदा राक्षस उदासीनः क्वापि गच्छेत्, अमर्षाद्वा कञ्चित् प्रबलं प्रतिपक्षमुत्थापयेत् नास्मद्वशतामियात्। अपवाहिते तु मलयकेतौ प्रायः एनमेवाश्रित्य प्रत्यवतिष्ठेत, तथा सति अनेनैव जनापवादेन कौवलिङ्गप्रत्यायितेन राक्षसमलयकेत्वोर्विरोधं सम्पाद्य नयमार्गेण राक्षसो वशीकर्त्तुं शक्यः स्यादिति भावः। व्युत्तिष्ठमानः,—उद्गच्छन्, युद्धार्थं कृतसन्नद्धतया इति शेषः।

(च) अस्य—मलयकेतोः। निपातात्—हननात्। प्रमार्ष्टुं—निराकर्त्तुम्। [ "पर्य्याप्तिवचनेष्वलमर्थेषु" (३।४।६६ पा०) इति तुमुन् ]। मलयकेतुनिवृत्ते पर्वतकोऽपि मयैव हत इति लोकानां प्रतीतिः स्यात्, ततश्च राक्षसोपरि पातितम् अयशः परिमार्जितं स्यात्, तथात्वे च अनयोर्भेदो न सिध्येदिति भावः। अनुरक्तेति।—अनुरक्ताः,—अनुरागिणः, अपरक्ताः,—विरक्ताश्च, ये जनाः तादृशानाम उभयपक्षीयाणां जनानां, जिज्ञासया—प्रकृतिषु मध्ये के के जनाः अस्मत्पक्षे अनुरक्ताः के वा विरक्ताः इति ज्ञातुमिच्छयेत्यर्थः। नानाव्यञ्जनाः,—नाना—विविधं, व्यञ्जनं—चिह्नं येषां ते बहुविधवेशधारिणः इत्यर्थः। प्रणिधयः,—गूढपुरुषाः, चराः इति यावत्। प्रचारगतयः,—प्रचाराः,—कार्य्येषु प्रवृत्तयः, गतयः,—अवस्थाविशेषाश्च। निपुणतरं—सूक्ष्मतरम्, अतिसूक्ष्मानुसन्धानेनेत्यर्थः। अन्विष्यन्ते—अनुसन्धाय निर्णीयन्ते। तत्तत्कारणम्—कृतकृत्यतालाभकारणम्। उत्पाद्य—घटयित्वा। कृतकृत्यतां—मनोरथसिद्धिम्। आपादिताः,—प्रापिताः। चन्द्रगुप्तसहोत्थायिनः,—चन्द्रगुप्तेन सह उत्थायिनः,—उत्तिष्ठमानाः, तत्प्रतिपक्षाश्रयेण अभियोगमातन्वाना इत्यर्थः, एतेन ते प्रधानपुरुषाः अनुरक्ता एव तिष्ठन्ति, न कदाऽपि विरज्यन्ते, तेषां विशेषपदाद्यलाभे अपरक्ताः सन्तः ते चन्द्रगुप्तोच्छेदाय प्रत्युपतिष्ठेरन् इति भावः।

दायिनां प्रतिविधानं प्रति अप्रमादिनः परीक्षितभक्तयः क्षिति-पतिप्रत्यासन्नाः नियुक्ताः तत्र आप्तपुरुषाः। (क) अस्ति च अस्माकं सहाध्यायि मित्रं विष्णुशर्मा नाम ब्राह्मणः। स च औशनस्यदण्डनीतौ, चतुःषष्ट्यङ्गे ज्योतिःशास्त्रे च परं प्रावीण्य-मुपगतः; स च मया क्षपणकलिङ्गधारी नन्दवधप्रतिज्ञा-नन्तरमेव कुसुमपुरमुपनीय सर्वनन्दामात्यैः सह सख्यं ग्राहितः, विशेषतश्च तस्मिन् राक्षसः समुत्पन्नविस्रम्भः; तेन इदानीं महत् प्रयोजनमनुष्ठेयं भविष्यति। तदेवम् अस्मत्तो न किञ्चित् परिहास्यते। वृषल एव केवलं प्रधानप्रकृतिः अस्मासु आरोपितराज्यतन्त्रभारः सततमुदास्ते। अथवा यत् स्वयमभि-योगदुःखैः असाधारणैः अपाकृतं, (ख) तदेव राज्यं सुखयति। कुतः?—

---

(क) तीक्ष्णरसदायिनां—विषदायिनाम्। प्रतिविधानं—निवारणम्। अप्रमादिनः,—सावधानाः। ["शमित्यष्टाभ्यो घिनुण्" (३।२।१४१ पा०) इति घिनुण्]। क्षितिपतिप्रत्यासन्नाः,—राजपार्श्वचराः। आप्तपुरुषाः,—विश्वस्तजनाः। [अत्र "यथाशक्ति क्रियते" इत्यारभ्य "भविष्यति" इत्यन्तं बीजानुगुणप्रस्तुतकार्यारम्भः करणम्; अत्रैव कार्ये "अत्र तावत् वृषल" इत्यारभ्य "प्रतारणम्" इत्यन्तः सन्दर्भः बीजानुकूलसमुद्घाटनप्रयोजनविचारो युक्तिः। "अनुप्रयुक्तानाम्" इत्यादि "तत्राप्तपुरुषाः" इत्यन्तं बीजसुखदुःखहेतुः विधानं, सुखदुःखहेतोर्विचारस्य च विधानात्। तीक्ष्णरसदायिनो दुःखहेतवः, तत्प्रतिविधानं प्रति अप्रमादिनः सुखहेतवः]।

(ख) औशनस्यदण्डनीतौ—उशनसा—शुक्रेण कृता औशनसी, या दण्डनीतिः,—नीतिशास्त्रं तस्याम्। प्रावीण्यं—नैपुण्यम्। क्षपणकलिङ्गधारी—बौद्धसन्न्यासिचिह्न-धारी। समुत्पन्नविस्रम्भः,—सञ्जातविश्वासः। ["अस्मत्तः" इति तु "वृत्तः; शब्दः अर्थतो वर्णतो वा" इत्यादिवत् तृतीयायाः तसिः, न तु अपादानार्थविहितायाः पञ्चम्याः, "अपादाने चाहीयरुहोः" (५।४।४५ पा०) इति तन्निषेधात्। केचित् तु "हीय" ग्रहणात् "ग्रामात् हीयते" इत्युदाहरणदर्शनाच्च हीयरूपप्रयोगे हा-धातोरेव ग्रहण-

स्वयमाहृत्य भुञ्जाना बलिनोऽपि स्वभावतः ।
गजेन्द्राश्च नरेन्द्राश्च प्रायः सीदन्ति दुःखिताः ॥ १६ ॥

निष्क्रमिं, न "हा" इत्यस्य ; तत्र, तथा च काशिका—"हीयते इति विकारनिर्देशो जह्यतेः प्रतिपत्त्यर्थः" इति ]। न परिहास्यते—परिहीणं न भविष्यति, कार्य्य-विकलतारूपा न्यूनता न भविष्यतीत्यर्थः। [ इयं बीजनिष्पत्तिः परिन्यासः, न किञ्चित् परिहास्यते सर्वं समाहितमिति परितः सर्वैरुपायैः बीजस्य न्यासात् ]। उदास्ते—उदासीनः सन् तिष्ठति । अभियोगदुःखैः,—कार्य्याभिनिवेशजनितैः खेदैः। [ अयं बीजसुखागमः प्राप्तिः नामाङ्गं, बीजेन स्वनीतिप्रयोगेण इपलस्य सुखागमात् सुख-प्राप्तेः। इत्थं मुखसन्धेः द्वादशाङ्गानि निरूपितानि । अतः परं यमपटचरस्तान्तः सर्वोऽपि "अवान्तरार्थसम्बन्धः सन्धिरेकान्वये सति" इत्युक्तस्य स्वपरपक्षानुरक्तापरक्त-जनजिज्ञासा राक्षसमुद्रालाभाद्यवान्तरार्थीजनसम्बन्धस्य कथनार्थः। प्रयुक्तश्च पर-पश्चेत्यनेन सूचितस्य यमपटचरस्य प्रवेशः इति ]। अपाकृतं—रहितम् ।

जगति स्वोपायाधिगतसम्पत्सम्पन्नानां वीराणामपि प्रायः स्वयमाहरणपूर्वकभोगे दुःखावश्यम्भाव इत्येतत् प्राकृतिकोदाहरणप्रदर्शनपुरःसरं समर्थयमान आह, स्वयमिति।—स्वभावतः प्रकृत्या, [ अत्र "प्रकृत्यादिभ्य उपसङ्ख्यानम्" ( वा० ) इति विहितायाः तृतीयायाः तसिः ] बलिनोऽपि बलवन्तोऽपि, गजेन्द्राश्च करिवराश्च, नरेन्द्राश्च भूपाश्च, [ चकारद्वयं प्रत्येकप्राधान्यसूचकम् ] स्वयम् आत्मना, न त्वन्येनेति भावः, आहृत्य सङ्गृह्य, एकत्र—पिप्पलन्यग्रोधकदल्यादिकम्, अन्यत्र—राज्यादिकमिति शेषः, भुञ्जानाः उपभोगं कुर्वाणाः, [ अत्र "भुजोऽनवने" ( १ । ३ । ६६ पा० ) इति तङि "लक्षणहेत्वोः—" ( ३ । २ । १२६ पा० ) इति शानच् ] अत एव दुःखिताः क्लिष्टाः सन्तः, प्रायः बाहुल्येन, सीदन्ति अत्यन्तकार्य्यव्याकुलतया अवसन्नाः भवन्तीत्यर्थः। [ अत्र प्रस्तुतानां स्वयमाहृत्य राज्यादिकं भुञ्जानानां भूपानाम् अप्रस्तुतानाञ्च स्वयं सङ्गृह्य कदल्यादिकमश्नतां गजेन्द्राणां बाहुल्येनावसादनरूपैकक्रियासम्बन्ध-कथनात् "बलावलेपादधुनाऽपि पूर्ववत् प्रबाध्यते तेन जगज्जिगीषुणा। सती च योषित् प्रकृतिश्च निश्चला पुमांसमभ्येति भवान्तरेष्वपि ॥" इति दर्पणोक्तोदाहरणवत् दीपकमलङ्कारः ; तल्लक्षणं यथा दर्पणे—"अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते। अथ कारकमेकं स्यात् अनेकासु क्रियासु चेत् ॥" इति। पथ्यावक्त्रं वृत्तम् ॥ १६ ॥

[ ततः प्रविशति सह यमपटेन (आ) चरः ]।

चरः। पणमह जमस्स चलणे, किं कज्जं देवेहिं अण्णेहिं ?।
एसो क्खु अण्णभत्ताणं हरइ जीअं फड़फड़ंतं * ॥१७॥

अवि अ—

पुरिसस्स जीविदव्वं विसमादो होइ भत्तिगहिआदो।
मारेइ सव्वलोअं जो तेण जमेण जीआमो ॥ १८ ॥

ता एदं गेहं पविसिअ जमपड़ं दंसअंतो गाएमि। †

[ इति परिक्रामति ]।

---

* प्रणमत यमस्य चरणौ किं कार्यं देवैरन्यैः ?।
एष खल्वन्यभक्तानां हरति जीवं परिस्फुरन्तम् ॥

† अपि च—पुरुषस्य जीवितव्यं विषमात् भवति भक्तिगृहीतात्।
मारयति सर्वलोकं यस्तेन यमेन जीवामः ॥

तस्मादिदं गृहं प्रविश्य यमपटं दर्शयन् गायामि।

---

(आ) असूचितस्य प्रवेशनिषेधात् "नियुक्ताश्च प्रणिधयः" इत्यनेन उपक्षिप्तस्य प्रणिधेः सूचनात् तस्य प्रवेशमाह, तत इति।—ततः,—सूचनाऽनन्तरमित्यर्थः। यमपटेन—यमस्य पट इव इति यमपटः तेन उपलक्षित इत्यर्थः, शुभाशुभकर्मसूचकत्वात् तत्पटेन साहश्यं, जीवानां शुभाशुभकर्मसूचकपटदर्शनेन हि आजीविका सम्पद्यते भिक्षुकस्य।

शुभाशुभसूचकयमपटाश्रितकरश्चरः स्वात्मानं यमभक्तिपरं प्रकटयितुं स्वाभीष्टदेवस्य यमस्य सर्वदेवप्राधान्यमाह, प्रणमतेति।—यमस्य चरणौ प्रणमत, यूयमिति शेषः, अन्यैः अपरैः, देवैः गणपत्यादिदेवताभिः, किं कार्यम आवश्यकम् ? न किमपि इत्यर्थः, अलमन्यदेवसेवया इति भावः। तत्र हेतुमाह—यतः एष यमः, अन्यभक्तानाम् अन्यदेवसेवकानां, परिस्फुरन्तं प्रकटीभवन्तं, जीवं प्राणान्, हरति खलु; यदा जीवो म्रियते, तदा केऽपि देवाः स्वोपासकजीवस्य प्राणान् रक्षितुं न प्रभवन्ति, अतः सर्वेभ्यः प्राधान्यात् यमस्य सेवैव कर्त्तव्या इति भावः। [ अत्र अन्यदेवसेवानिषेधस्य यमचरणप्रणामसेवोपदेशरूपपूर्वार्द्धगतवाक्यार्थं प्रति यमस्य अन्यदेवभक्तजीवनाशकत्वरूपपरार्द्धगतवाक्यार्थस्य हेतुतया उपन्यासात् काव्यलिङ्गमलङ्कारः ]। आर्य्या वृत्तम् ॥ १७ ॥

तद्देवान्यथा समर्थयमान आह, पुरुषस्येति।—भक्तिगृहीतात् भक्त्या वशी कृतात्-

शिष्यः [विलोक्य]। भद्र ! न प्रवेष्टव्यम्।

चरः। हंहो बम्हण ! कस्स एदं गेहम् ? *

शिष्यः। अस्माकम् उपाध्यायस्य सुगृहीतनाम्नः (ञ) आर्य्य-चाणक्यस्य।

चरः। [विहस्य]। हंहो बम्हण ! अत्तकेरकस्स ज्जेव्व एदं धम्मभादुअस्स (ट) घरं होदि, ता देहि मे पवेसं, जाव दे उवज्झाअस्स धम्मं उवदिसामि। †

शिष्यः [सक्रोधम्]। धिक् मूर्ख ! किं भवान् अस्मदुपाध्यायादपि धर्मवित्तरः ? (ठ)

---

* अहो ब्राह्मण ! कस्येदं गृहम् ?

† अहो ब्राह्मण ! आत्मीयस्यैव एतत् धर्मभ्रातुर्गृहं भवति, तस्मात् देहि मे प्रवेशं, यावत् तवोपाध्यायस्य धर्ममुपदिशामि।

---

रागेण, गृहीतात् आयत्तीकृतात्, भक्तिवशीकृतादित्यर्थः, विषमात् भयङ्करादपि, यमादिति शेषः, तमाश्रित्येत्यर्थः, [ल्यब्लोपे पञ्चमी]। पुरुषस्य यमसेवकस्य मानवस्य, जीवितव्यं जीवनं, भवति तिष्ठतीत्यर्थः। यः यमः, सर्वलोकं निखिलं जगत्, मारयति विनाशयति, तेन यमेन जीवामः तमुपसेव्य तदनुग्रहेण वा जीवनधारणं कुर्मः; यमभक्तिरपमृत्युहारिणीति भावः। [आर्य्यां गीतिमासौ चाणक्यस्य यमवत् क्रूरत्वं स्वपक्षपरपक्षानुग्रहनिग्रहसामर्थ्यञ्च द्योतयन् स्वस्य गूढचरत्वं व्यनक्ति। अत्र निखिलजगद्विनाशकयमरूपकारणात् तदुपासकस्य जीवनधारणोत्पत्तेः विषमो नाम अलङ्कारः]। आर्य्या वृत्तम् ॥ १८ ॥

(ञ) सुगृहीतनाम्नः,—यन्नाम्नि कृते शुभं स्यात् स सुगृहीतनामा तस्य। तथा चोक्तं—"स सुगृहीतनामा स्यात् यः प्रातः स्मर्य्यते जनैः" इति।

(ट) धर्मभ्रातुः,—धर्मस्य—राजकार्य्यस्य, भ्राता—प्रवर्त्तकः तस्य। धर्मं पुरस्तात्ते निवेदयामीति गूढाभिसन्धानवचनम्। यावन्तश्च सर्वेऽपि धर्मतो भ्रातर एवेति बहिरर्थः।

(ठ) धर्मवित्तरः,—समधिकधर्मज्ञः।

चरः। हंहो बम्हण! मा कुप्प; ण हि क्खु सव्वो सव्वं जाणादि, ता किंपि दे उवज्झाओ जाणादि, किंपि अम्हारिसापि जाणंति। *

शिष्यः। [सक्रोधम्]। मूर्ख! सर्वज्ञताम् उपाध्यायस्य चोरयितुमिच्छसि !! (ड)

चरः। हंहो बम्हण! जइ दे उवज्झाओ सव्वं जाणादि, जाणादु दाव कस्स चंदो अणभिमदो त्ति? † (ढ)

शिष्यः। मूर्ख! किमनेन ज्ञातेन गुरोर्भविष्यति?

चरः। हंहो बम्हण! तुह उवज्झाओ ज्जेव जाणिस्सदि जं इमिणा जाणिदेण भोदि, उजुअबुद्धिआ तुमं दाव इत्तिअं जाणासि, कमलाणं चंदो अणभिमदो त्ति। णं पेक्ख—

कमलाणं मणोहराणं वि रूआदो विसंवदइ सीलं।
संपुण्णमंडलम्मि वि जाइं चंदे विरुद्धाइं ‡ ॥ १८ ॥

---

* अहो ब्राह्मण! मा कुप्य; न हि खलु सर्वः सर्वं जानाति, तत् किमपि ते उपाध्यायो जानाति, किमपि अस्मादृशा अपि जानन्ति।

† अहो ब्राह्मण! यदि तवोपाध्यायः सर्वं जानाति, जानातु तावत् कस्य चन्द्रोऽनभिमत इति?।

‡ अहो ब्राह्मण! तवोपाध्याय एव ज्ञास्यति यदेतेन ज्ञातेन भवति, ऋजुबुद्धिस्त्वं तावत् एतावत् जानासि, कमलानां चन्द्रोऽनभिमत इति। ननु पश्य—

कमलानां मनोहराणामपि रूपाद्विसंवदति शीलम्।
सम्पूर्णमण्डलेऽपि यानि चन्द्रे विरुद्धानि॥

---

(ड) चोरयितुम्—अपहर्तुं, गोपायितुमिति यावत्। ["चोरयितुमिच्छसि" इत्यत्र "चोरयसि" इति पाठान्तरम्]।

(ढ) कस्य चन्द्रगुप्तोऽनभिप्रेत इति च गूढार्थः।

कमलानामिति।—मनोहराणां सुन्दराणामपि, कमलानां पद्मानां, रूपात् आकारात्, शीलं चरित्रं, विसंवदति असदृशमनुचितञ्च भवति, "यत्राकृतिस्तत्र गुणा वसन्ति" इति न्यायात् रूपशीलयोः साहचर्यौचित्येऽपि तयोरसाहचर्यं नितान्तमसङ्गतम्।

चाण। [ आकर्ण्य आत्मगतम् ]। अये! चन्द्रगुप्तात् अपरक्तान् पुरुषान् जानामि इति उपक्षिप्तम् (ण) अनेन।

शिष्यः। मूर्ख! किमिदमसम्बद्धम् (त) एवमभिधीयते?

चरः। हंहो बम्हण! सुसंबद्धं ज्जेव एदं भवे। *

शिष्यः। यदि किं स्यात्?

चरः। जइ सुणंतं जाणंतं अ जणं लहे। †

चाण। [ विलोक्य ]। भद्र! सुखं प्रविश, लप्स्यसे श्रोतारं ज्ञातारञ्च।

चरः। एसो प्पविसामि। [ प्रविश्योपसृत्य च ]। जेदु जेदु अज्जो। ‡

चाण। [ विलोक्य आत्मगतम् ]। कथं प्रभूतत्वात् (थ) कार्य्याणां कस्य परिज्ञाने नियुक्तः निपुणकः इति न ज्ञायते; आं ज्ञातम्,

---

* अहो ब्राह्मण! सुसम्बद्धमेवैतत् भवेत्।

† यदि शृण्वन्तं जानन्तञ्च जनं लभे। [ ''सुणिदुं जाणंतं'' इति पाठे—श्रोतुं जानन्तम् इति सं ]।

‡ एष प्रविशामि। जयति जयति आर्य्यः।

---

असङ्गतत्वमेव दर्शयति, सम्पूर्णेत्यादि।—सम्पूर्णमण्डलेऽपि चन्द्रे चन्द्रविषये, तमधिकृत्य इत्यर्थः, एतेन विरागकारणाभाव उक्तः, यानि विरुद्धानि विसदृशानि, तदुदये सङ्कोचनं तत्कान्तेरसहनञ्च इत्यनुचितमिति भावः। [ अनेन पद्येन मनोहरगुणस्यापि राक्षसपक्षपातिजनस्य स्वरूपानुगुणं शीलम् असम्पूर्णमण्डले चन्द्रगुप्ते विरुद्धमाचरतीति गूढार्थः सूचितः; एवं चन्द्रगुप्तस्य पूर्णमण्डलत्वेऽपि तस्मिन् प्रजानां विरागः अनुचित इति व्यज्यते। अत्र अप्रस्तुतात् कमलानां सम्पूर्णमण्डलचन्द्रेऽपि विरुद्धाचरणरूपात् सामान्यात् पूर्णमण्डलचन्द्रगुप्ते प्रजानां विरागप्रदर्शनात्मकानौचित्यरूपविशेषस्य अवगमात् अप्रस्तुतप्रशंसाऽलङ्कारः ]। आर्य्या वृत्तम् ॥ १९ ॥

(ण) उपक्षिप्तं—प्रकाशितं, कथितमित्यर्थः।

(त) असम्बद्धम्—असङ्गतं, पूर्वापरसम्बन्धरहितमित्यर्थः।

(थ) प्रभूतत्वात्—बाहुल्यात्।

अये ! कथमयं प्रकृतिचित्तपरिज्ञाने नियुक्तो निपुणकः !!
[प्रकाशम्]। भद्र ! स्वागतम् ? उपविश्यताम् ।

चरः । जं अज्जो आणवेदि त्ति । * [भूमावुपविशति] ।

चाण । भद्र ! उपवर्णय इदानीं स्वनियोगवृत्तान्तम् । अपि वृषलमनुरक्ताः प्रकृतयः ? (द)

चरः । अध इं । अज्जेण क्खु तेसु तेसु विराअकारणेसु परिहरिदेसु सुगहीदणामधेए देए चंदउत्ते दिढ़ं अणुरत्ताओ पइदिओ । किंतु उण संति एत्थ णअरे अमच्चरक्खसेण सह पढ़मं समुप्पण्णसिणेहबहुमाणा तिण्णि पुरिसा, जे देअस्स चंदसिरिणो सिरिं ण सहंति । †

चाण । [सक्रोधम्] । ननु वक्तव्यं स्वजीवितं न सहन्ते इति । भद्र ! अपि ज्ञायन्ते नामधेयतः ?

चरः । कधं अजाणिअणामधेआ अज्जस्स णिवेदिअंति !! ‡

चाण । तेन हि श्रोतुमिच्छामि ।

चरः । सुणादु अज्जो, पढ़मं दाव अज्जस्स रिपुवक्खे बद्धपक्खवादो क्खवणओ । §

चाण । [सहर्षमात्मगतम्] । अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणकः ! ! (ध) [प्रकाशम्] । किंनामधेयो हि सः ?

---

* यदार्य्य आज्ञापयतीति ।

† अथ किम । आर्य्येण खलु तेषु तेषु विरागकारणेषु परिहृतेषु सुगृहीतनामधेये देवे चन्द्रगुप्ते दृढ़मनुरक्ताः प्रकृतयः । किन्तु पुनः सन्ति अत्र नगरे अमात्यराक्षसेन सह प्रथमं समुत्पन्नस्नेहबहुमानास्त्रयः पुरुषाः, ये देवस्य चन्द्रश्रियः श्रियं न सहन्ते ।

‡ कथमज्ञातनामधेया आर्य्यस्य निवेद्यन्ते !!

§ शृणोतु आर्य्यः, प्रथमं तावत् आर्य्यस्य रिपुपक्षे बद्धपक्षपातः क्षपणकः ।

---

(द) प्रकृतयः,—प्रधानपुरुषाः । ("प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे" इति कोषः) ।

(ध) बद्धपक्षपातः,—बद्धस्नेहः । क्षपणकः,—बौद्धसन्न्यासिविशेषः दृत्यर्थः ।

चरः। जीवसिद्धी णाम। *

चाण। अस्मद्रिपुपक्षे बद्धपक्षपातः क्षपणक इति कथम् अवगतं भवता ?

चरः। जेण सा अमच्चरक्खसेण प्पउत्ता विसकण्णआ देए पव्वदेस्सरे समावेसिदा। †

चाण। [स्वगतम्]। जीवसिद्धिरेव तावत् अस्मत्प्रणिधिः। (न) [प्रकाशम्]। भद्र! अथ अपरः कः ?

चरः। अज्ज! अवरो क्खु अमच्चरक्खसस्स प्पिअवअस्सो काअत्थो सअडदासो णाम। ‡

चाण। [विहस्य आत्मगतम्]। कायस्थ इति लघ्वी मात्रा; (प) तथाऽपि न युक्तं प्राकृतमपि रिपुम् अवज्ञातुम्। तस्मिन् मया सुहृच्छद्मना सिद्धार्थको निक्षिप्तः। [प्रकाशम्]। भद्र! तृतीयं श्रोतुमिच्छामि।

चरः। तिदीओ वि अमच्चरक्खसस्स दुदीअं विअ हिअअं पुप्फउरवासी मणिआरसेट्ठी चंदणदासो णाम, जस्स गेहे कलत्तं णासीकदुअ अमच्चरक्खसो णअरादो अवक्कंतो। §

* जीवसिद्धिर्नाम।

† येन सा अमात्यराक्षसेन प्रयुक्ता विषकन्यका देवे पर्वतेश्वरे समावेशिता।

‡ आर्य! अपरः खलु अमात्यराक्षसस्य प्रियवयस्यः कायस्थः शकटदासो नाम।

§ तृतीयोऽपि अमात्यराक्षसस्य द्वितीयमिव हृदयं पुष्पपुरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम, यस्य गेहे कलत्रं न्यासीकृत्य अमात्यराक्षसो नगरादपक्रान्तः।

(न) प्रणिधिः,—गूढचरः; राक्षसमित्रीभूतः सचिवं जनापवादं निर्बध्य मलयकेतुं प्रत्याययिष्यतीति भावः।

(प) लघ्वी मात्रा—क्षुद्रः अंशः, हीनजातित्वात् हीनबुद्धिरयम्; हीनबुद्धिना कियती अपकृतिः साध्यते ? इति अवज्ञासूचकमिदम्; तदस्मात् नानिष्टं सम्भवेदिति भावः।

चाण। [आत्मगतम्]। नूनं सुहृत्तमः, न हि अनात्मसदृशेषु राक्षसः कलत्रं न्यासीकरिष्यति। [प्रकाशम्]। भद्र! चन्दनदासस्य गृहे राक्षसेन कलत्रं न्यासीकृतमिति कथमवगम्यते भवता?

चर:। अज्ज! इअं अंगुलीअमुद्दा अज्जं अवगदत्थं करिस्सदि। * [इति मुद्राम् अर्पयति]।

चाण। [मुद्रामवलोक्य गृहीत्वा राक्षसस्य नाम वाचयित्वा च, सहर्षं स्वगतम्]। ननु राक्षस एव अस्मदङ्गुलिप्रणयी संवृत्त इति। (फ) [प्रकाशम्]। भद्र! अङ्गुलिमुद्राधिगमं विस्तरेण श्रोतुमिच्छामि।

चर:। सुणादु अज्जो, अत्थि दाव अहं अज्जेण पउरजणचरिददंसणे णिउत्तो, तदो परघरप्पवेसे परस्स अणासंकणीएण इमिणा जमपडेण आहिंडंतो (ब) मणिआरसेट्ठिणो चंदणदासस्स घरं पविट्ठोम्हि, तहिं जमपडं पसारिअ पउत्तोम्हि गीदाइं गाइदुं—"। †

चाण। ततस्ततः?

चर:। "—तदो एक्कादो ओवरकादो (भ) पंचवरिसदेसीओ पिअदंसणीअसरीराकिदी कुमारओ बालजणसुलहकोदूहलोप्फुल्लणअणजुअलओ णिक्कमिदुं पउत्तो, तदो 'हा! णिग्गदो,

---

* आर्य! इयमङ्गुलिमुद्रा आर्यमवगतार्थं करिष्यति। ("अज्जं अवगमइस्सदि" इति पाठे—आर्यमवगमयिष्यति इति सं)।

† शृणोतु आर्यः, अस्ति तावदहमार्येण पौरजनचरितदर्शने नियुक्तः, ततः परगृहप्रवेशे परस्यानाशङ्कनीयेन अनेन यमपटेन आहिण्डमानो मणिकारश्रेष्ठिनः चन्दनदासस्य गृहं प्रविष्टोऽस्मि, तत्र यमपटं प्रसार्य प्रवृत्तोऽस्मि गीतानि गातुम्—"।

---

(फ) अङ्गुलिप्रणयी संवृत्तः,—हस्तगत इत्यर्थः।

(ब) आहिण्डमानः,—भ्रमन्नित्यर्थः।

(भ) आवरकात्—आवरकतः, जवनिकाया इत्यर्थः।

हा ! णिग्गदो' त्ति संकापरिग्गहणिहुदगुरुअणो तस्स ज्जेव आवरकस्स अब्भंतरे इत्थिआजणस्स उत्थिदो महंतो कलअलो । तदो ईसिदुआरदेसदाविदमुहीए एक्काए इत्थिआए सो कुमारओ णिक्कमंतो ज्जेव णिब्भच्छिअ अवलंबिदो कोमलाए बाहुलदाए । तस्साअ कुमारसंरोहसंभमप्पचलिदंगुलिदो करादो पुरिसंगुलिपरिणाहप्पमाणघडिआ (म) विअलिदा इअं अंगुलिमुद्दिआ देहलीबन्धम्मि णिपडिआ ; ताए इत्थिआए अणवबुद्धं ज्जेव मम चलणपासं समागच्छिअ पणामणिहुआ णव-बहुव्व णिच्चला संवुत्ता । मए वि अमच्चरक्खसस्स णामंकिदेत्ति अज्जस्स पादमूलं पाविदा, ता एसो इमाए मुद्दाए आगमो त्ति । *

चाण० । भद्र ! श्रुतम्, अपसर, नचिरादस्य परिश्रमस्यानुरूपं फलमधिगमिष्यसि ।

---

* "—ततश्च एकस्मात् आवरकात् पञ्चवर्षदेशीयः प्रियदर्शनीयशरीराकृतिः कुमारकः बालजनसुलभकौतूहलोत्फुल्लनयनयुगलको निष्क्रमितुं प्रवृत्तः, ततः 'हा! निर्गतो हा ! निर्गतः' इति शङ्कापरिग्रहनिभृतगुरुजनः ("संकापडिग्गहं णिवेदंत" इति पाठे—शङ्कापरिग्रहं निवेदयन् इति सं०) तस्यैव आवरकस्याभ्यन्तरे स्त्रीजनस्य उत्थितो महान् कलकलः । ततः ईषद्द्वारदेशदर्शितमुख्या एकया स्त्रिया स कुमारको निष्क्रामन्नेव निर्भर्त्स्यावलम्बितः कोमलया बाहुलतया । तस्याः कुमारसंरोधसम्भ्रमप्रचलिताङ्गुलेः करात् पुरुषाङ्गुलिपरिणाहप्रमाणघटिता विगलितेयमङ्गुलिमुद्रिका देहलीबन्धे निपतिता ; तया स्त्रिया अनवबुध्यमानैव मम चरणपार्श्वं समागत्य प्रणामनिभृता नववधूरिव निश्चला संवृत्ता । मयाऽपि अमात्यराक्षसस्य नामाङ्कितेति आर्यस्य पादमूलं प्रापिता, तस्मात् एषोऽस्या मुद्राया आगम इति ।

---

(म) पुरुषाङ्गुलिपरिणाहप्रमाणघटिता—पुरुषस्य अङ्गुलेः परिणाहः,—विस्तारः, तस्य प्रमाणेन—परिमाणेन, घटिता—निर्मिता, तेन ततः कृशाङ्गुल्याः स्त्रीकरात् पतनसम्भव इति भावः ।

चरः। जं अज्जो आणवेदि त्ति। * [इति निष्क्रान्तः]।

चाण। शार्ङ्गरव! शार्ङ्गरव!

शिष्यः। [प्रविश्य]। उपाध्याय! आज्ञापय।

चाण। वत्स! मसीभाजनं पत्रञ्च उपानय।

शिष्यः। यत् आज्ञापयति उपाध्यायः। [इति निष्क्रम्य पुनः प्रविश्य]। उपाध्याय! इदं मसीभाजनं पत्रञ्च।

चाण। [गृहीत्वा स्वगतम्]। किमत्राभिलिखामि? अनेन खलु लेखेन राक्षसो जेतव्यः। (य)

प्रतिहारी। [प्रविश्य]। जेदु जेदु अज्जो। † (र)

चाण। [सहर्षमात्मगतम्]। गृहीतोऽयं जयशब्दः। (ल) [प्रकाशम्]। शोणोत्तरे! किम् आगमनप्रयोजनम्?

---

* यदार्य्य आज्ञापयति इति।

† जयति जयति आर्य्यः।

---

(य) अयं चाणक्यस्य पुनरुद्योगो बिन्दुः, तदुक्तं दशरूपके—"अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्" इति लक्षणात्। अवान्तरार्थेन यमपटवृत्तान्तेन विच्छिन्नस्य अन्तरितस्य बीजस्य पुनः प्रवर्त्तनात् बिन्दुवत् बिन्दुः, जले तैलबिन्दुवत् प्रसृतत्वात्।

(र) प्रतीहारी—"द्वारि द्वाःस्थे प्रतीहारः प्रतीहार्य्यप्यनन्तरे" इत्यमरवाक्यात् राजसमीपवर्त्तिद्वारस्थिता रमणी प्रतीहारी। तस्याः कर्त्तव्यनिरूपणपूर्वकं लक्षणमाहुः नाट्यशास्त्राचार्य्याः,—"सन्धिविग्रहसम्बद्धं नानाकार्य्यसमुत्थितम्। निवेदयन्ति याः कार्य्यं प्रतीहार्य्यस्तु ताः स्मृताः॥" अत्र शोणोत्तरा इति तदाख्या।

(ल) राक्षसजयार्थं लेखं लिखित्वोद्भावयति चाणक्ये प्रतीहार्य्या उक्तिः जयार्थसंवलिता अभिश्रुता, तेन अभीष्टजयशब्दश्रवणात् चाणक्यस्य हर्षो जातः, तस्मात् सः "गृहीतोऽयं जयशब्दः" इत्युक्तवान्। [एतत् नाट्योक्तपताकास्थानकं प्रथमं, तदुक्तं दर्पणे—"यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते। आगन्तुकेन भावेन पताकास्थानकन्तु तत्॥ सहसैवार्थसम्पत्तिः गुणवत्युपचारतः। पताकास्थानकमिदं प्रथमं परिकीर्त्तितम्॥" इति। किन्तु अयं कार्य्यसिद्धिविषयमनीषी विन्यासः प्रथमाङ्कस्य]।

प्रती। अज्ज! कमलमुउलाआरमंजलिं सीसे णिवेसिअ देओ चंदसिरी अज्जं विण्णवेदि, 'इच्छामि अहं अज्जेण अब्भणुण्णादो देअस्स पव्वदेसरस्स पारलोइअं कादुं, तेण अ धारिदपुव्वाइं आभरणाइं गुणवंताणं बम्हणाणं पडिवादेमि' त्ति। *

चाण। [सहर्षमात्मगतम्]। साधु वृषल! साधु!! ममैव हृदयेन सह सम्मन्त्र्य सन्दिष्टवानसि। (व) [प्रकाशम्]। शोणोत्तरे! उच्यताम् अस्मद्वचनात् वृषलः, "साधु वत्स! साधु, अभिज्ञः खल्वसि लोकव्यवहाराणां, तदनुष्ठीयताम् आत्मनोऽभिप्रायः; किन्तु पर्वतेश्वरधृतपूर्वाणि भूषणानि गुणवन्ति गुणवद्भ्य एव ब्राह्मणेभ्यः प्रतिपादनीयानि; तत् एषोऽहं स्वयं परीक्षित-गुणान् ब्राह्मणान् प्रेषयामि। (श)

प्रती। जं अज्जो आणवेदि त्ति। † [निष्क्रान्ता]।

चाण। शार्ङ्गरव! शार्ङ्गरव! उच्यताम् अस्मद्वचनात् विश्वावसुप्रभृतयः त्रयो भ्रातरः, यथा "वृषलात् प्रतिगृह्याभरणानि भवद्भिः अहं द्रष्टव्यः" इति। (ष)

---

* आर्य! कमलमुकुलाकारमञ्जलिं शीर्षे निवेश्य देवश्चन्द्रश्रीरार्यं विज्ञापयति, 'इच्छाम्यहमार्येण अभ्यनुज्ञातो देवस्य पर्वतेश्वरस्य पारलौकिकं कर्तुं, तेन च धारितपूर्वाणि आभरणानि गुणवतां ब्राह्मणानां प्रतिपादयामि' इति।

† यत् आर्य आज्ञापयतीति।

---

(व) मन्मनोऽनुगतमेव त्वया चिकीर्षितमित्यर्थः।

(श) गुणवन्ति—बहुमूल्यत्वसुदृश्यत्वादिगुणयुक्तानि; अत एव गुणवद्भ्य एव देयानि सद्भिरिव योगस्योचितत्वादिति सूचयता चाणक्येन पात्रभूतेन स्वप्रणिधि-भूतेन विश्वावसुप्रभृतिभ्रातृत्रयेण तदलङ्करणं चन्द्रगुप्तहस्तगतमपि प्रतिग्रहच्छलेनानीय राक्षसस्य समीपे वणिग्द्वारा प्रेषणीयमित्याशयेन प्रतिपादनीयानीत्युपदिष्टम्। [प्रेषयामीत्यत्र भविष्यत्सामीप्ये लट् प्रेषयिष्यामीत्यर्थः]।

(ष) अलङ्कारत्रयस्य पृथक् पृथक् प्रतिग्रहाय त्रयो भ्रातरः इत्युक्तम्।

शिष्यः। यत् आज्ञापयति उपाध्यायः। [इति निष्क्रान्तः]।

चाण। [स्वगतम्]। उत्तरोऽयं लेखार्थः, (ख) पूर्वः कतमोऽस्तु ? [विचिन्त्य]। (ग) आः ज्ञातः, (घ) उपलब्धवानस्मि प्रणिधिभ्यः, यथा तस्य म्लेच्छराजबलस्य मध्यात् प्रधानतमाः पञ्च राजानः परया भक्त्या राक्षसमनुवर्त्तन्ते। ते यथा—

कौलूतश्चित्रवर्मा, मलयनरपतिः सिंहनादो नृसिंहः,
काश्मीरः पुष्कराक्षः, क्षतरिपुमहिमा सैन्धवः सिन्धुषेणः।

---

अहं द्रष्टव्यः,—मत्समीपमागन्तव्यम् इत्यर्थः। [प्रतिपक्षादनन्तरं स्वसकाशे आगमनमुपदिशता चाणक्येन तदलङ्काराणां तेभ्यः कार्य्यान्तरार्थं याच्यता सूचिता]।

(ख) अयम्—अलङ्काररूपः, लेखार्थः,—लेखस्य—पञ्चमाङ्के दर्शयिष्यमाणस्य "स्वस्ति यथास्थाने कुतोऽपि कोऽपि कमपि" इत्यादिकस्य, अर्थः,—प्रतिपाद्यः, उत्तरः,—उत्तरावयवः, तत्र लेखे शेषभागे "अस्मान् प्रति अलङ्कारत्रयञ्च यत् सत्यवताऽनुप्रेषितं तदुपगतम्" इति दर्शयिष्यमाणत्वात् तद्भागस्य अलङ्कारविषयकत्वम् इत्यग्रे स्पष्टीभविष्यति; तथा च, एतदलङ्कारं पात्रद्वारा चन्द्रगुप्तात् प्रतिपाद्य वणिग्द्वारा राक्षससमीपे विक्रीय मलयकेतुना राक्षसभेदार्थं कल्प्यमानस्य लेखस्य सुसंवादिता स्यात् इत्याशयः। [एतेन राक्षसमुद्राङ्कितपत्रपाठेन मलयकेतोः राक्षसात् भेदो भविष्यति इत्याशयेन सुहृद्भेदरूपः उपायः अवलम्बितः इति गम्यते; तथा "अलङ्कारत्रयञ्च सत्यवता यदनुप्रेषितं तदुपगतम्" इति निर्द्देशो वाचयिष्यमाण इत्यर्थः। इदं दृष्टनष्टबीजानुसरणं परिसर्पः, पूर्वस्मिन् दृष्टस्य मध्ये नष्टस्य बीजस्य अनुसन्धानात्]।

(ग) पूर्वः,—लेखस्य पूर्वावयवार्थः, कतमः,—किंरूपकः, अस्तु ?—भवेत् ? इति चिन्ता।

(घ) आः—इति स्मरणे, तत्प्रत्ययमाह, ज्ञात इति—निश्चित इत्यर्थः; लेखस्य पूर्वावयवार्थः इत्यनुकर्षणीयम्। किंरूपेण निश्चित इत्याशयेन प्रधानानां नृपाणां राक्षसानुरक्तत्वेन उपलब्धतया तानेव पूर्वावयवतया मलयकेतुतो भेदनार्थं लिखामीति लेखस्य पूर्वावयवार्थः निश्चित इति भावः।

तानेव दर्शयन् तेषु कार्य्यव्यदोषारोपणस्यावश्यसमुच्छेद्यतामाह, कौलूत इत्यादि।—कौलूतः कुलूतदेशपतिः, चित्रवर्मा नाम, नृसिंहः नरश्रेष्ठः, मलयाधिपतिः सिंहनादो

मेघाख्यः पञ्चमोऽस्मिन् पृथुतुरगबलः पारसीकाधिराजो
नामान्येषां लिखामि ध्रुवमहमधुना चित्रगुप्तः प्रमार्ष्टु ॥ २० ॥

[ विचिन्त्य ]। अथवा न लिखामि, ( ख ) सर्वमनभिव्यक्तमेव तावदास्ताम् । [ प्रकाशम् ]। शार्ङ्गरव ! शार्ङ्गरव !

शिष्यः। [ प्रविश्य ]। उपाध्याय ! आज्ञापय ।

चाण। वत्स ! श्रोत्रियाक्षराणि (ग) प्रयत्नेन लिखितान्यपि नियतमस्फुटानि भवन्ति ; तत् उच्यताम् अस्मद्वचनात् सिद्धार्थकः, [ कर्णे कथयित्वा ]। (घ) एभिः अक्षरैः "केनापि, किमपि, कस्यापि,स्वयं वाच्यम्" इति अदत्तवाह्यनामानं लेखं शकटदासेन

---

नाम, काश्मीरः कश्मीरदेशाधिराजः, पुष्कराक्षो नाम, हतरिपुमहिमा शत्रुदमः, सैन्धवः सिन्धुदेशाधिपतिः, सिन्धुषेणो नाम, पृथुतुरगबलः प्रशस्ताश्वसादिबलः, पारसीकाधिराजः पारसीकदेशपतिः, मेघाख्यो नाम, एते पूर्वोक्ताः पञ्च राजानः ; अहमेषां नामानि अत्र भेदपत्रे, लिखामि, अधुना चित्रगुप्तः यमः तत्सचिवो वा, ध्रुवं निश्चितं, प्रमार्ष्टु शोधयतु, व्यक्तु इति यावत्, अहमेव तेषां शासिता भविष्यामि, चित्रगुप्तप्रयासोऽत्र विफल इति भावः ; यद्वा—पत्रिम् पत्रे एतेषां नामलिखनेन एते मरिष्यन्ति, अतश्चित्रगुप्तः स्वगणिताक्षरपत्रे ( खाता ) जीवितत्वेन लिखितानामेषां नामानि प्रमार्क्ष्यतीति भावः। स्रग्धरा वृत्तम् ॥ २० ॥

(ख) नामानि लिखितानि चेत् शकटदासोऽस्माभिश्छलेन लेखयिष्यमाणं लेखं न लिखिष्यतीति तात्पर्य्यम् ; अथवा—न लिखामि—तेषां नामानि स्पष्टतया न लिखामि, किन्तु पत्रे "स्वस्ति यथास्थाने" इत्यादिके "आप्ततमात् सिद्धार्थकात्" इत्यंशे लिखिष्यमाणे वाचिकसन्देशस्यापि सूचनात् तन्मुखेनैव तन्नामप्रकाशनमत्र भविष्यति इत्याशयः। [ इदम् अनिष्टवस्तुनिक्षेपरूपं विधूतम् ; अनिष्टवस्तुनि नामलेखने क्षेपात् निषेधात । "विक्षेपः" इति पाठे—स एवार्थः ] ।

(ग) स्वयं लेख्यालेखने हेतुं दर्शयति, श्रोत्रियेति ।—एतेन शिष्यसमीपेऽपि छलेन स्वयथार्थस्य प्रकाशनात् मन्त्रगुप्तिः कृतेति बोध्यम् ।

(घ) "अर्थस्त्वेकेन विज्ञेयः पश्चात् श्लाव्या प्रसङ्गतः। कर्णे एवमित्युक्त्वा काव्यबन्धे प्रयुज्यते ॥" इत्यलङ्कारनियमात् अत्र "कर्णे एवमिव" इति पाठः साधीयान् ।

लेखयित्वा माम् उपतिष्ठस्व, न च आख्येयम् (ङ) अस्मै चाणक्यो लेखयतीति।

शिष्यः। यत् आज्ञापयति उपाध्यायः। [इति निष्क्रान्तः]।

चाण। [स्वगतम्]। हन्त !! जितो मलयकेतुः।

सिद्धार्थकः। [लेखहस्तः प्रविश्य]। जेदु जेदु अज्जो। (च) अज्ज ! अअं सो सअडदासेण सहत्थलिहिदो लेहो। *

चाण। [गृहीत्वा निरीक्ष्य]। अहो ! दर्शनीयता अक्षराणाम् !! [इति अनुवाच्य]। भद्र ! अनया मुद्रया मुद्रय (छ) एनम्।

सिद्धा। जं अज्जो आणवेदि त्ति। [तथा कृत्वा]। अज्ज ! अअं सो मुद्दिदो लेहो, ता आणवेदु अज्जो, किं अवरं अणुचिट्ठी-अदु त्ति ?। †

चाण। भद्र ! कस्मिंश्चित् आत्मनाऽनुष्ठेये कर्मणि त्वां व्यापारयितुम् (ज) इच्छामि।

---

* जयति जयति आर्य्यः। आर्य्य ! अयं सः शकटदासेन स्वहस्तलिखितो लेखः। [ "सह वअणेण अविचालिअ" इत्यधिकपाठे—मम वचनेनाविचार्य्य इति सं ]।

† यत् आर्य्य आज्ञापयतीति। आर्य्य ! अयं स मुद्रितो लेखः, तत् आज्ञापयतु आर्य्यः, किमपरमनुष्ठीयतामिति ?।

---

(ङ) अदत्तवाच्यनामानम्—अदत्तानि वाच्यानां—कौलूतराक्षसादीनां, नामानि यस्मिन्; अथवा—अलिखितशिरोभागस्थप्रतिपाद्यनामाक्षरम् इत्यर्थः। स्वयं वाच्यम् इति विशेषणेन शिरोनामशून्यत्वहेतुः दर्शितः; सति हि शिरोनामलेखने तन्नामाङ्कितपुरुषेणैव तद्वाच्यं स्यात्, न स्वयमिति पत्रीतिनियमात्; तथा च, स्वयं वाच्यतायोग्यतायै शिरोनामशून्यतया लेखनीयमिति भावः। चाणक्यस्य इदं लेख्यम् इत्यवगमे सन्देहात् शकटदासेन न लेख्यं स्यात् इत्यत उक्तं केनापि कस्यापीत्यादि, तथाऽपि चाणक्यस्य तत्प्रयोजकतयाऽवगमेऽपि न लिखिष्यति इत्यत आह, न च आख्येयमिति।—आख्येयं—वाच्यम्।

(च) इदं पताकास्थानकम्। लक्षणमुक्तं प्राक्।

(छ) अनया—राक्षसनामाङ्कितया मुद्रया, मुद्रय—अङ्कय।

(ज) व्यापारयितुं—नियोक्तुम्। [ अयमिष्टजनानुनयः पर्य्युपासनम् ]।

सिद्धा। [सहर्षम्]। अज्ज! अणुग्गहीदोम्हि, ता आसवेदु अज्जो, किं इमिणा दासजणेण अज्जस्स अणुचिट्ठिदव्वं ?। *

चाण। भद्र! प्रथमं तावत् वध्यस्थानं गत्वा घातकाः सरोषं दक्षिणाक्षिसङ्कोचसंज्ञां ग्राहयितव्याः, ततस्तेषु गृहीतसंज्ञेषु भयापदेशात् इतस्ततः प्रद्रुतेषु (झ) शकटदासो वध्यस्थानात् अपनीय राक्षसं प्रापयितव्यः, तस्माच्च सुहृत्प्राणरक्षणपरितुष्टात् पारितोषिकं (ञ) ग्राह्यं, राक्षस एव कञ्चित् कालं सेवितव्यः, ततः प्रत्यासन्नेषु परेषु त्वया प्रयोजनमिदम् अनुष्ठेयम्। [कर्णे एवमेवम्]। (ट)

सिद्धा। जं अज्जो आसवेदि त्ति। †

चाण। शार्ङ्गरव! शार्ङ्गरव!

शिष्यः। [प्रविश्य] उपाध्याय! आज्ञापय।

चाण। उच्यतां मद्वचनात् कालपाशिको दण्डपाशिकश्च,

---

* आर्य! अनुगृहीतोऽस्मि, तदाज्ञापयतु आर्यः, किमनेन दासजनेन आर्यस्य अनुष्ठातव्यम् ?।

† यदार्य्य आज्ञापयतीति।

---

(झ) प्रथममित्यादि।—शकटदासस्य शूलारोपणं कपटव्यवहारः न यथार्थः इति तत्स्थानात् मदुपदिष्टाङ्गितैः चाण्डालौ अपसार्य्यौ, इत्थं तत्प्राणरक्षासम्भवः, ततो विशिष्टसिद्धिः इत्याशयः। दक्षिणाक्षिसङ्कोचसंज्ञा—दक्षिणनेत्रसङ्कोचसङ्केतम्। मया सरोषं दक्षिणाक्षिसङ्कोचसंज्ञायां क्रियमाणायां भवद्भिस्तं विहाय पलायितव्यमिति सङ्केतयितव्या इति भावः। भयापदेशात्—भयच्छलात्, तत्स्थानाद्भयादपसरणं व्यञ्जयित्वा प्रस्थितयोः तयोः वधाद्रक्षा शकटदासस्य, ततः राक्षससमीपानयनेन मृत्युमुखादागतं भवदानीतं मित्रं निरीक्ष्य त्वयि विश्वासः सुतरां सेत्स्यति इत्याशयः। प्रद्रुतेषु—पलायितेषु।

(ञ) पारितोषिकमिति—तस्यैव सुहृद्दत्ते प्रधानोपयोगिताऽग्रे दर्शयिष्यते।

(ट) तेन पारितोषिकेण यच्च कर्त्तव्यं यच्च अकर्त्तव्यं तत् सर्वं कर्णे आह, एवमिति।—पञ्चमाङ्के वक्ष्यमाणसुद्राद्विव्यापारवृत्तम्।

यथा वृषलः समाज्ञापयति, 'य एष क्षपणको जीवसिद्धिर्नाम राक्षसप्रयुक्तो विषकन्यया पर्वतेश्वरं घातितवान्, स एनमेव दोषं प्रख्याप्य सनिकारं नगरात् निर्वास्यताम्' इति। (ठ)

शिष्यः। यत् आज्ञापयति उपाध्यायः। [इति परिक्रामति]।

चाण। वत्स! तिष्ठ तिष्ठ, 'योऽयमपरः कायस्थः शकटदासो नाम राक्षसप्रयुक्तो नित्यम् अस्मच्छरीरम् (ड) अभिद्रोग्धुमिह प्रयतते, स चापि एनं दोषं प्रख्याप्य शूलमारोप्यतां, (ढ) गृहजनश्च अस्य बन्धनागारे प्रवेश्यताम्' इति।

शिष्यः। यत् आज्ञापयति उपाध्यायः। [इति निष्क्रान्तः]।

चाण। [चिन्तां नाटयित्वा स्वगतम्]। अपि नाम दुरात्मा राक्षसो गृह्येत? (ण)

सिद्धा। अज्ज! गहीदो। * (त)

---

* आर्य्य! गृहीतः।

---

(ठ) जीवसिद्धेर्निष्काशनम् आत्मकृतपर्वतेश्वरवधस्य राक्षसकृततया ख्यापनार्थं, निष्काशितेन च तेन मलयकेतुसमीपे राक्षसेनैव पर्वतेश्वरो हतो न चाणक्येन इत्येवमर्थस्य ख्यापनार्थञ्च।

(ड) अस्मच्छरीरमिति।—अस्मच्छरीरमिव प्रेष्ठं चन्द्रगुप्तमिति भावः। [अस्मच्छरीरमित्यत्र "क्रुधद्रुहोरुपसृष्टयोः कर्म" (१।४।३८ पा०) इति सम्प्रदानस्य कर्मतायां द्वितीया]।

(ढ) शकटदासस्य शूलारोपणव्यपदेशेन भयमुत्पाद्य सिद्धार्थकेन तद्रक्षणं राक्षसस्य विश्वासोत्पादनार्थं, तेन वक्ष्यमाणमित्रभेदोपायसाधनं स्वाभीष्टलाभाशयः द्योतितः। गृहजनस्य बन्धनागारप्रवेशनफलम् उत्तरत्र चतुर्थाङ्के "तव च पुत्रदारैः सह समागमः" इति वक्ष्यमाणेन राक्षसवचनेन मलयकेतुमनसि भृतं स्यात् पुत्रदारस्येति राक्षसस्य च मनसि विकल्पापादनमिति सूक्ष्मदृग्भिः अवधेयम्।

(ण) अनुपलाभ्ययणात् क्रोधेन दुरात्मेति निर्देशः। [गृह्येत इत्यत्र सम्भावनायां लिङ्]।

(त) एतत् तृतीयं पताकास्थानम्; तल्लक्षणं यथा—"अर्थोपक्षेपकं

चाण। [सहर्षमात्मगतम्]। हन्त! गृहीतो राक्षसः। (थ) [प्रकाशम्]। भद्र! कोऽयं गृहीतः?

सिद्धा। गहीदो मए अज्जस्स संदेसो, ता गमिस्सं अहं कज्जसिद्धीए। *

चाण। [साङ्गुलिमुद्रं लेखमर्पयित्वा]। (द) भद्र! सिद्धार्थक! गम्यताम्, अस्तु ते कार्य्यसिद्धिः।

सिद्धा। जं अज्जो आणवेदि त्ति। † [प्रणम्य निष्क्रान्तः]।

शिष्यः। [प्रविश्य]। उपाध्याय! कालपाशिको दण्डपाशिकश्च उपाध्यायं विज्ञापयतः, 'इदम् अनुष्ठीयते देवस्य चन्द्रगुप्तस्य शासनम्' इति।

चाण। शोभनम्। वत्स! मणिकारश्रेष्ठिनं चन्दनदासम् इदानीं द्रष्टुमिच्छामि। (ध)

शिष्यः। यत्, आज्ञापयति उपाध्यायः। [इति निष्क्रम्य चन्दनदासेन सह पुनः प्रविश्य]। इत इतः श्रेष्ठिन्!

* गृहीतो मया आर्य्यस्य सन्देशः, तत् गमिष्यामि अहं कार्य्यसिद्धैर।

† यदार्य्य आज्ञापयतीति।

यत् तु क्षीनं सविनयं भवेत्। श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते॥" इति दर्पण-लक्षणात्।

(थ) दुर्ग्राह्यो राक्षसः गृहीतो भवेन्न वा इति चिन्तयतः चाणक्यस्य गृहीत इति निश्चयात्मकवाक्यश्रवणेन प्रभूतहर्षोदयः सञ्जातः। हन्तेति।—[ अयम् अरत्युपशमनं शमः पञ्चममङ्गम्; अरतेः चिन्तायाः उपशमनात् ]।

(द) साङ्गुलीति।—[ उत्तरोत्तरवाक्यैः कार्य्यसिद्धिबीजप्रकाशनात् इदं प्रशमनम् ]। मलयकेतुराक्षसयोः विरोधापादनार्थं लेखरूप उपायः कृतः।

(ध) अतः परं राक्षसस्य मौर्य्यसाचिव्यग्रहणीकरणाय सप्तमेऽङ्के वक्ष्यमाणोपायबीजमुपक्षेप्तव्यम् इत्याह—चन्दनदासमिदानीं द्रष्टुमिच्छामि इति।

चन्दनदासः। [स्वगतम्]।—

चाणक्कम्मि अकरुणे सहसा सद्दाविदस्स लोअस्स।

वड्ढइ णिद्दोसस्स वि संका किं जाददोसस्स ?॥ २१॥

ता भणिदा मए धणसेणप्पमुहा तिण्णि वाणिजिआ, जधा कदावि चाणक्कहदओ गेहं मे विचिणावेदि, ता अवहिदा णिव्वहध (न) भट्टिणो अमच्चरक्खसस्स घरअणं, मह दाव जं होदि तं होदु त्ति। *

शिष्यः। भोः श्रेष्ठिन्! इत इतः।

चन्द। अअं आअदोम्हि। †        [उभौ परिक्रामतः]।

शिष्यः। उपाध्याय! अयं श्रेष्ठी चन्दनदासः।

---

* चाणक्येऽस्मिन् अकरुणे सहसा शब्दायितस्य लोकस्य।

वर्द्धते निर्दोषस्यापि शङ्का किं जातदोषस्य ?॥

तत् भणिता मया धनसेनप्रमुखास्त्रयो वणिजकाः, यथा कदाऽपि चाणक्यहतको गेहं मे विचिनोति, तदवहिता निर्वहत भर्त्तुः अमात्यराक्षसस्य गृहजनं, मम तावत् यत् भवति तत् भवतु इति।

† अयमागतोऽस्मि।

---

चाणक्ये इति।—सहसा प्रसभं, शब्दायितस्य चाणक्येन आहूतस्य, [शब्दं करोति इति—"शब्दवैरकलह—" (३।१।१७ पा०) इति क्यङ्, ततः "हेतुमति च" (३।१।२६ पा०) इति णिचि कर्मणि निष्ठा, इट्; ततः "निष्ठायां सेटि" (६।४।५२ पा०) इति णेः लोपः] निर्दोषस्यापि लोकस्य जनस्य, अकरुणे निर्दये, अस्मिन् चाणक्ये, [विषयविवक्षायां सप्तमी] शङ्का भयं, वर्द्धते, किं वा कथा इत्यर्थः, जातदोषस्य राक्षसवनितारक्षणात् दोषाविष्टस्य, ममेति शेषः। [अत्र कूटनीतिप्रवणस्य कौटिल्यस्य समीपमुपगतवतः निर्दोषस्यापि शङ्का जायते, जातदोषस्य पुनः का कथेत्यर्थागमादर्थापत्तिरलङ्कारः,—"दण्डापूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते" इति दर्पणवचनात्]। आर्या वृत्तम्॥ २१॥

(न) विचिनोति—मार्गयति। निर्वहत—निष्क्रामयत, अन्तःपुरात् स्थानान्तरं प्रापयत इत्यर्थः।

चन्द । [ उपसृत्य ] । जेदु जेदु अज्जो । *

चाण । [ नाट्येन अवलोक्य ] । भोः श्रेष्ठिन् ! ( प ) स्वागतम् ? इदमासनम् आस्यताम् ।

चन्द । [ प्रणम्य ] । किं ण जाणादि अज्जो, जहा अणुचिदो उवआरो ( फ ) परिहवादोवि महंतं दुःखमुप्पादेदि ; ता इह ज्जेव्व अहं उचिदाए भूमीए उववि सामि । †

चाण । भोः श्रेष्ठिन् ! मा मा एवम्, उचितमेवैतत् ( ब ) अस्मद्विधैः सह भवतः ; तदुपविश्यताम् आसने एव ।

चन्द । [ स्वगतम् ] । उपलक्खिदमणेण किंपि । ( भ ) [ प्रकाशम् ] । जं अज्जो आणवेदि त्ति । ‡ [ उपविष्टः ] ।

चाण । भो. श्रेष्ठिन् ! चन्दनदास ! अपि प्रचीयन्ते संव्यवहाराणां लाभा वः ? ( म )

---

* जयति जयति आर्य्यः ।

† किं न जानाति आर्य्यः, यथाऽनुचित उपचारः [ अत्र "अहिदअस्स" इति अधिकपाठे—"अहृदयस्य" इति शं ] परिभवादपि महद्दुःखमुत्पादयति, तत् इहैव अहम् उचितायां भूमौ उपविशामि ।

‡ उपलक्षितमनेन किमपि । यदार्य्य आज्ञापयति इति ।

---

( प ) भोः श्रेष्ठिन् इति ।—[ एतदादि चन्दनदासातिसन्धानार्थं परिहासवचनं नर्म ] ।

( फ ) उपचारः,—अभ्यर्थनादिरूप आदरः ।

( ब ) "उचितमेवैतत्" इत्यत्र "असम्भावितमेवेदम्" इति पाठान्तरे—इदम् उपचारकरणं असम्भावितमेव इति वहिरुपचारः, परिभवकरणम् इति तु निगूढ़ आशयः ।

( भ ) उपलक्षितमिति—मदीयमपराधादिकं ज्ञातं, यतः अस्मद्विधैः सह इत्यादि कथितम् ।

( म ) प्रचीयन्ते—वर्द्धन्ते । [ कर्मकर्त्तरि रूपम ] । संव्यवहाराणां—वाणिज्यस्य । "लाभा वः" इत्यत्र "वृद्धिलाभाः" इति पाठे—वृद्धेः कुसीदस्य इत्यर्थः ।

चन्द। अज्ज! अध इं; अज्जस्स पसादेण अखंडिदा मे वाणिज्जा। * (य)

चाण। भोः श्रेष्ठिन्! अपि कदाचित् चन्द्रगुप्तदोषा अति-क्रान्तपार्थिवगुणान् अधुना स्मारयन्ति प्रकृतीः? (र)

चन्द। [कर्णौ पिधाय]। संतं पावं। (ल) सारअणिसा-समुग्गदेण विअ पुण्णिमाचंदेण चंदसिरिणा (व) अधिअं णंदंति पइदिओ। †

चाण। भोः श्रेष्ठिन्! यदि एवं, प्रीताभ्यः प्रकृतिभ्यः प्रिय-मिच्छन्ति राजानः।

---

* आर्य्य! अथ किम्; आर्य्यस्य प्रसादेन अखण्डिता मे वाणिज्या।

† शान्तं पापम्। शारदनिशासमुद्गतेन इव पूर्णिमाचन्द्रेण चन्द्रश्रिया अधिकं नन्दन्ति प्रकृतयः।

---

(य) सिद्धविषयस्वीकारसूचकं पदद्वयमिदं, तदेव प्रकटयन् आह, आर्य्यस्य प्रसादेनेत्यादि।—[वणिजां कर्म वृत्तिर्वा इति वाणिज्य, वाणिज्य करोति इति "तत्करोति तदाचष्टे" (ग०) इति णिचि "अः प्रत्ययात्" (३।३।१०२ पा०) इति अः, ततष्टाप्। केचित् तु—"वणिज्या" इति पठन्ति, तदर्थस्तु स एव, तथा चामरः,—"वाणिज्यन्तु वणिज्या स्यात्" इति]।

(र) अतिक्रान्तेति।—चन्द्रगुप्तादधिकान् सौजन्योदार्य्यादीन् अतीतनन्दादि-पार्थिवगुणान् इत्यर्थः। प्रकृतीः,—प्रकृतिभिरित्यर्थः, [स्मरणार्थ ज्ञानविशेषार्थतया तद्योगे प्रयोज्यकर्त्तरि कर्मसंज्ञाभावात् कवीनां निरङ्कुशतया प्रयोगः। दुण्ढिराजस्तु—स्मरतिः ज्ञानसामान्यवचनः, अतो गतिबुद्धीत्यादिना कर्मत्वम् इत्याह। राघवानन्द-मते—स्मरणालङ्कारः]।

(ल) शान्तं पापं—"शान्तं पापमनिर्देश्ये" इति वचनात् अवाच्यार्थे शान्तं पापमिति प्रयुज्यते शब्दो, न वाच्यमित्यर्थः। अश्राव्यश्रवणे लोके राम रामेत्यनुवाद-वद्भावः।

(व) चन्द्रश्रिया—चन्द्रगुप्तेन इत्यर्थः। [इयम् चन्द्रगुप्तोद्दाटनार्था प्रीतिः अर्थस्तुतिः चटनमलम्]।

चन्द । आणवेदु अज्जो, किं किज्जिअं वा अत्थजादं इमादो जणादो इच्छीअदि त्ति ? । * (अ)

चाण । भोः श्रेष्ठिन् ! चन्द्रगुप्तराज्यमिदं, न नन्दराज्यम् ; यतो नन्दस्य एवार्थरुचेः अर्थसम्बन्धः प्रीतिमुत्पादयति, (ब) चन्द्रगुप्तस्य तु भवताम् अपरिक्लेश एव । (स)

चन्द । [सहर्षम्] । (ड) अज्ज ! अणुग्गहीदोम्हि । †

चाण । भोः श्रेष्ठिन् ! स च अपरिक्लेशः कथम् आविर्भवतीति न पुनः प्रष्टव्याः स्मो भवता ? (क)

चन्द । आणवेदु अज्जो । ‡ (ख)

---

* आज्ञापयतु आर्य्यः । किं कियद्वा अर्थजातमस्माज्जनादिष्यते ? इति ।

† आर्य्य ! अनुगृहीतोऽस्मि ।

‡ आज्ञापयतु आर्य्यः ।

---

(अ) मत्तः किं प्रार्थ्यते ? इत्याशयः । [इयं राजानुरागहेतुः वाक्यरचना उपन्यासः] ।

(ब) अत्र "स्म" शब्दो लिपिकरप्रमादान्न लिखितः, स्मतश्च तत्र प्रीतेर्वर्त्तमानत्वा-योगादिति केचित् ; प्रीत्युत्पादनस्य तात्कालिकवर्त्तमानत्वाङ्गीकारे तु सिद्धोऽयं प्रयोगः ।

(स) अपरिक्लेशः,—खेदाभावः, न त्वर्थसम्बन्धः चन्द्रगुप्तस्य प्रीतिमुत्पादयति इत्यनुकर्षः ।

(ड) अर्थाकाङ्क्षिलोभात् उदाराशयात् चन्द्रगुप्तात् स्वार्थहानेरभावकारणात् चन्दनदासस्य हर्षः ।

(क) अन्यधर्मस्य दुःखाभावस्यान्येन साधः दुष्करः इति व्यञ्जकहेतुनैव तस्याभि-व्यक्तिः इति दर्शयन्नाह, स च अपरिक्लेश इत्यादि ।—स कथं व्यज्यते इत्याद्यभिव्यक्ति-प्रकारः एवं भवता वः,—वयं, न पुनः प्रष्टव्याः,—जिज्ञासितव्याः ? अपि तु प्रष्टव्या एव, अत्र काकुः । तथा च प्रकृतीनाम् अपरिक्लेशव्यञ्जकः को हेतुरिति भवता मां प्रति प्रष्टव्यमेव इत्याशयः ।

(ख) अपरिक्लेशहेतुप्रश्नाय चाणक्येन नियोजितः चन्दनदासः पृच्छति, [आज्ञापयत्विति ।—वदतु भवान् अपरिक्लेशव्यञ्जकः को हेतुः इत्याशयः ।

चाण। सङ्क्षेपतो राजनि अविरुद्धाभिर्वृत्तिभिः वर्त्तितव्यम्। (ग)

चन्द। अज्ज! को उण अधण्णो अज्जेण अवगच्छीअदि? *

चाण। भवान् एव तावत् प्रथमः। (घ)

चन्द। [कर्णौ पिधाय]। संतं पावं संतं पावं, कीदिसो तिणाणं अग्गिणा सह विरोहो? † (ङ)

चाण। अयम् ईदृशो विरोधो यत्, त्वम् अद्यापि राजापथ्यकारिणोऽमात्यराक्षसस्य गृहजनं स्वगृहम् अभिनीय रक्षसि। (च)

चन्द। अज्ज! अलीअं एदं, केणावि अणज्जेण अज्जस्स णिवेदिदं। ‡

चाण। भोः श्रेष्ठिन्! अलम् आशङ्कया, भीताः पूर्वराजपुरुषाः पौराणाम् अनिच्छताम् अपि गृहेषु गृहजनं निक्षिप्य देशान्तरं व्रजन्ति, ततः तत्प्रच्छादनम् (छ) एव दोषम् उत्पादयति।

* आर्य्य! कः पुनरधन्य आर्य्येणावगम्यते? ["को राअविरुद्धो त्ति" इति पाठे—को राजविरुद्धः इति। "राअ" इत्यत्र "राअि" "राआ" इति च क्वचित् पाठः, "राज्ञि" राजविषये, "राज्ञा" सह वा इति सं]।

† शान्तं पापं, शान्तं पापं, कीदृशस्तृणानामग्निना सह विरोधः?

‡ आर्य्य! अलीकमेतत्, केनापि अनार्य्येण आर्य्यस्य निवेदितम्।

(ग) सङ्क्षेपत इति।—सङ्क्षेपतः,—समासतः, राजनि अविरुद्धाभिः,—अनुकूलाभिः, वृत्तिभिः,—व्यवहारैः, अपरिक्लेश आविर्भवतीत्यनुक्तष्टार्थः; प्रतिकूलाचरणस्य परिक्लेशव्यञ्जकत्वं सिद्धम्। वर्त्तितव्यं—व्यवहर्त्तव्यं, तदपरिक्लेशाभिव्यञ्जकमित्यर्थः।

(घ) भवानेव इति—[इदं प्रतिमुखनिष्ठुरवचनं वज्रम्]।

(ङ) अत्र अप्रस्तुतप्रशंसाऽलङ्कारः।

(च) पुरा पुरादपक्रमणसमये रक्षणं भवतु नाम, अद्यापि तत्प्रयोजनमाश्रित्य राजापथ्यकरणसमये तत्कलत्ररक्षणमनुचितमिति भावः।

(छ) तत्प्रच्छादनं—तस्य गोपनम्।

चन्द। एव्वं णेदं। तस्सिं समए आसी अम्हघरे अमच्चरक्खसस्स घरअणो। *

चाण। प्रथमम् 'अनृतम्,' इदानीम् 'आसीत्' इति परस्परविरोधिनी वचने। (ज)

चन्द। एत्तिअं ज्जेव अत्थि मे वाआच्छलं। † (झ)

चाण। भोः श्रेष्ठिन्! चन्द्रगुप्ते राजनि न परिग्रहः छलानां, तत् समर्पय राक्षसस्य गृहजनम्, अच्छलं भवतु भवतः।

चन्द। अज्ज! णं विण्णवेमि, तस्सिं समए आसी अम्हघरे अमच्चरक्खसस्स घरअणो त्ति। ‡

चाण। अथ इदानीं क्व गतः?

चन्द। ण जाणामि कहिं गदो त्ति। §

चाण। [स्मितं कृत्वा]। कथं न ज्ञायते नाम? भोः श्रेष्ठिन्!

---

* एवं नु इदम्। तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजनः।

† एतावदेवास्ति मे वाचाच्छलम्।

‡ आर्य्य! ननु विज्ञापयामि, तस्मिन् समये आसीदस्मद्गृहे अमात्यराक्षसस्य गृहजन इति।

§ न जानामि कुत्र गत इति।

---

(ज) प्रथमम् 'अलीकमेतत्' इति कथनेन स्वनिकेतने राक्षसगृहजनस्य स्थितेः अप्रत्यतोक्ता, इदानीम् 'आसीत्' इति कथनेन समय-विशेषे स्थितिरुक्ता, इत्यनयोः वचनयोः परस्परविरोधिता इति।

(झ) "छलं निरस्य भूतेन" इति स्मृतेः कपटं नरेन्द्राग्राह्यम् इति प्रकटयन् ब्रवीति, एत्तिअमिति।—एतावत्—पूर्वापरविरोधरूपं, वाचाच्छलं, न तु तत्कृतनिह्नवरूपापराधः। ["वाचा" इति आबन्तो वाक्शब्दः, "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपञ्चैव हलन्तानां यथा वाचा निशा दिशा॥" इति नियमात्]।

शिरसि फणी, दूरे तत्प्रतीकारः; अन्यच्च नन्दमिव विष्णुगुप्तः—"। (ञ) [इति सशङ्को लज्जां नाटयति]। (ट)

चन्द्र। [स्वगतम्]।—

उवरि घणाघणत्थणिअं दूरे दइआ किमेदआवडिअं ?।
हिमवदि दिव्वोसहिओ सीसे सप्पो समाविट्ठो * ॥ २२ ॥

---

* उपरि घनाघनस्तनितं दूरे दयिता किमेतदापतितम् ?।
हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः ॥

---

(ञ) शिरसि फणीति।—फणी—सर्पः, विषधरत्वेन सद्यःप्राणहरदंशनक्षम इत्यर्थः, शिरसि—उत्तमाङ्गे, [एतेन दंशनमात्रेणैव विनाशसम्भावना व्यज्यते] उपस्थितः इति शेषः, तत्प्रतीकारः,—तस्य—फणिनः, प्रतीकारः,—निरसनोपायः, दूरे—विप्रकृष्टे, वर्त्तते इति शेषः, राजद्रोहिणा सह सन्धानादसह्यविक्रमो राजदण्डः सन्निहितः, निष्कृत्युपायः पुनरसन्निहितः इत्यर्थः, [अप्रस्तुतप्रशंसाऽलङ्कारः]। अस्य निवारणोपायः राक्षसेन चन्द्रगुप्तहननं, तत्प्रत्याशा दूरवर्त्तिनी, फलिष्यति न वा इति संशय एव; तथा च "उपस्थितं परित्यज्य योऽध्रुवं तु विचिन्तयेत" इत्युक्तरीतिरापतितेति भावः। ['नन्दम्' इति जातावेकवचनम्]। विष्णुगुप्तः—चाणक्यः।

(ट) स्वकृतनन्दहननस्य उपमानतया स्वेन कथनमतः।नुचितमित्यतश्चाणक्यस्य लज्जा।

मित्रराक्षसकलत्रार्पणे पापम् अतिमहत्, अनानुपकर्त्तव्यतया च साधुजननिगर्हणीयमेव भवेत्, तदप्रदाने च नास्ति चाणक्यतो मोक्षः; एवं सङ्कटे किमिदानीं विधेयम् ? इति चिन्तामग्नस्तेनाह, उपरीति।—घनाघनस्तनितं घनाघनस्य वर्षुकमेघस्य, तथा च महाभारते शान्तिपर्वणि—"समुह्यमाना बहुधा येन नीताः पृथक् घनाः। वर्षमोक्षकृतारम्भास्ते भवन्ति घनाघनाः॥" इति। [हनधातोरपि "चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्येति वक्तव्यम्" इत्यच "हन्तेर्घत्वञ्च" इति वार्त्तिकेन अभ्यासाऽऽगमे अभ्यासस्य घत्वे च "अभ्यासाच्च" (७।३।५५ पा०) इति हकारस्य कुत्वे घनाघनः इति सिद्धम्] यद्वा—घनस्य मेघस्य, अघनस्तनितं नास्ति घनं यस्मात् तत् अघनं तत् स्तनितं गर्ज्जितम्, अतिघोरगर्जितमित्यर्थः, उपरि, वर्त्तते इति शेषः, दयिता प्रिया, दूरे, तिष्ठतीति शेषः, एतत् किम् आपतितम् उपस्थितम् ? विरहिणां मेघध्वनिः अतीवोद्दीपकत्वात् भयङ्कर इति भावः; तत्प्रतीकारस्तु प्रियासङ्गम

वाच। "—चन्द्रगुप्तम् अमात्यराक्षसः समुच्छेत्स्यतीति मैवं मंस्थाः। पश्य—

विक्रान्तैर्नयशालिभिः सुसचिवैः श्रीवक्रनासादिभिः
नन्दे जीवति, या तदा न गमिता स्थैर्य्यं चलन्ती मुहुः।
तामेकत्वमुपागतां द्युतिमिव प्रह्लादयन्तीं जगत्,
कश्चन्द्रादिव चन्द्रगुप्तनृपतेः कर्त्तुं व्यवस्येत पृथक्? ॥२३॥

एव, तस्या दूरस्थितेः कथञ्चन न सम्भवः ; एव शीर्षे सर्पः समाविष्टः दंशनार्थमुपागत इत्यर्थः, तत्प्रतीकारोपायभूता दिव्योषधयः हिमवति हिमालये, अतिदूरे इत्यर्थः, सन्तीति शेषः। अयं भावः,—मृत्युरोगस्य सङ्कटभावेन उपस्थितिः, किन्तु तदौषधस्य दूरवर्त्तित्वात् सुतरां प्रतीकारासम्भव इति। [ अत्र मेघगर्ज्जितादिभिरतिशयोत्कण्ठितस्य विरहिणो दयितादूरवर्त्तितया तदीयदुःखापनोदनरूपाप्रस्तुतात् श्लिष्टकर्त्तृकरासम्बन्धतार्पणेन चाणक्यपीडनासम्भवरूपप्रस्तुतप्रतीतेरप्रस्तुतप्रशंसा ; सा च शीर्षस्थितसर्पस्य हिमवतः औषधानयनमिव सर्वथाऽसम्भवमिति बिम्बप्रतिबिम्बबोधनात् दृष्टान्तालङ्कारेण सङ्कीर्य्यते ] ॥ २२ ॥

नयपराक्रमसमन्वित-सुसचिवसमेत-नवनन्दविनाशनेन मौर्य्यश्रीस्थैर्य्यप्रतिपादनपुरःसरं स्वनीत्युत्कर्षं प्रकटयन्नाह, विक्रान्तैरिति।—विक्रान्तैः विक्रमशालिभिः, [ एतेन तेषां प्रसह्य परापहरणासम्भवत्वं व्यज्यते ] न केवलं विक्रमयुक्तैरपि तु नयशालिभिः नीतिज्ञैः, [ एतेन नयानभिज्ञपराक्रमप्रयोगः फलसिद्धेः प्रतिकूलः, इह तु तदन्यथैवेति ध्वन्यते ] सुसचिवैः सुमन्त्रिभिः, [ एतेन सचिवमूर्खत्वे तु पराक्रमस्यायथाप्रयोगात् फलासिद्धिरिति व्यज्यते ] वक्रनासादिभिः प्रधानपुरुषैः जीवति नन्दे [ इति जातावेकवचनम्। एतेन न केवलं नयपराक्रमशालिनः सचिवाः, अपि तु निखिलनृपगुणसम्पन्नाः नरपतयः, तत्रापि न पुनः द्वित्राः, अपि तु नवसङ्ख्याकाः, अतः कथमपि न प्रमादसम्भावनेति सूच्यते ] मुहुः वारं वारं, चलन्ती अतिचञ्चला, दुर्नयाद्यन्यप्रयोगप्रमादादिति भावः, या श्रीः राजलक्ष्मीः, तदा स्थैर्य्यं न गमिता न प्रापिता, न स्थिरीकृतेत्यर्थः, कौ जनः, जगत् प्रह्लादयन्तीम् उल्लासयन्तीं, द्युतिं चन्द्रिकामिव, एकत्वमुपागतां स्थिरत्वमापन्नां, मन्नीत्या मया हेतुना इति शेषः, तां श्रियं, चन्द्रादिव चन्द्रगुप्तनृपतेः पृथक्कर्त्तुं वियोजयितुं, व्यवस्येत प्रयतेत ? न कोऽपि तत् कर्त्तुं शक्नुयादित्यर्थः। नवसु नन्देषु जीवत्सु व्यासज्य स्थिताऽपि या मया व्यवस्थिता सती स्थैर्य्यं न गमिता, तां चन्द्रगुप्ते एकत्वमुपागत्य दृढतया स्थिताम्

अपि च, [आस्वादितेत्यादि प्रागुक्तं पठति]। (ठ)

चन्द्र। [स्वगतम्]। फलेण संपादिदं सोहदि दे विकत्थिदं। * (ड)

[नेपथ्ये उत्सारणा (ढ) क्रियते]।

चाण। शार्ङ्गरव! ज्ञायतां किमेतत्।

शिष्यः। यत् आज्ञापयति उपाध्यायः। [इति निष्क्रम्य, पुनः प्रविश्य]। उपाध्याय! एष राज्ञः चन्द्रगुप्तस्य आज्ञया राजापथ्यकारी क्षपणको जीवसिद्धिः सनिकारं नगरात् निर्वास्यते। (ण)

चाण। क्षपणकः? अहह!! अथवा—अनुभवतु राजापथ्य-

---

* फलेन सम्पादितं शोभते ते विकत्थितम्।

---

अविद्यमानेषु नन्देषु कथालयेत? इति भावः। [अत्र सम्भावनायां लिङ्। उपमाऽलङ्कारः]। शार्दूलविक्रीडितं वृत्तम्॥ २३॥

(ठ) आस्वादितेत्यादि।—[एतत्तु स्वाम्यनुरागप्रकाशविशिष्टवचनं पुष्पम्]। (अयं श्लोकः १४ पृष्ठे द्रष्टव्यः)।

(ड) ["सम्पादितम्" इत्यत्र "संवादितम्" इति पाठे—प्रकटितम्]। विकत्थितम्—आत्मनः श्लाघा।

(ढ) उत्सारणा—दर्शनार्थं मिलितानां लोकानां सम्मर्दनिवारणार्थमपसारणा।

(ण) राजापथ्यकारी—राजविद्रोहीत्यर्थः, [पथ्यं—हितं, पथः अनपेतम् इति यावत्; "धर्मपथ्यर्थन्यायादनपेते" (४।४।९२ पा०) इति यत्, न पथ्यम् अपथ्यम्—अहितमित्यर्थः, राज्ञः अपथ्यं राजापथ्यं, तत् कर्तुं शीलमस्य इति राजापथ्यकारी]। सनिकारं—सापमानम्। निर्वास्यते—देशान्तरं प्रस्थाप्यते, प्रकारान्तरेण वधदण्डं प्राप्यते इति यावत्। "वपनं द्रविणादानं स्थानान्निष्कासनं तथा। एष हि ब्रह्मबन्धूनां वधो नान्योऽस्ति दैहिकः॥" इति भागवतोक्तेः उन्मत्तिनामपि ब्राह्मणवद्दण्डविधानाच्च।

(त) क्षपणकः,—निष्परिग्रहः तपस्वी, तेन निष्कारणः इति कारुण्याविष्करणार्थः अहहशब्दः। अथवेति।—राजापथ्यकारी यः कश्चिदपि निग्राह्य एवेति

कारित्वस्य फलम्। भोः श्रेष्ठिन् चन्दनदास! एवमयं राजापथ्यकारिषु तीक्ष्णदण्डो राजा, तत् क्रियतां पथ्यं सुहृद्वचः, समर्प्यतां राक्षसगृहजनः, चिरमनुभूयन्तां विचित्रा राजप्रसादाः। (त)

चन्द। णत्थि मे गेहे अमच्चरक्खसघरअणो।*

[ततो नेपथ्ये कलकलः]।

चाण। शार्ङ्गरव! ज्ञायतां पुनः किमेतत्।

शिष्यः। यत् आज्ञापयति उपाध्यायः। [इति निष्क्रम्य, पुनः प्रविश्य]। उपाध्याय! असौ राजाज्ञया राजापथ्यकारी कायस्थः शकटदासः शूलम् आरोपयितुं नीयते।

चाण। स्वकर्मफलभाक् भवतु। भोः श्रेष्ठिन्! एवमयं राजापथ्यकारिषु तीक्ष्णदण्डो राजा, न मर्षयिष्यति राक्षस-कलत्रप्रच्छादनं भवतः, तत् रक्ष परकलत्रेण आत्मनः कलत्रं जीवितञ्च। (थ)

चन्द। अज्ज! किं मे (द) भअं दंसेसि? संतं वि गेहे अमच्चरक्खसस्स घरअणं ण समप्पेमि, किं उण असंतं।†

---

* नास्ति मे गेहे अमात्यराक्षसगृहजनः।

† आर्य्य! किं मे भयं दर्शयसि? सन्तमपि गेहे अमात्यराक्षसस्य गृहजनं न समर्पयामि, किं पुनरसन्तम्।

---

समाधानम्। तीक्ष्णेत्यादि।—चन्दनदासेन सह कथोपकथनसमये अपथ्यकस्य राजदण्डवर्णनं तद्भासनार्थम्; एवम् अग्रेऽपि।

(थ) मर्षयिष्यति—क्षमिष्यते। प्रच्छादनं—गोपनम्। परकलत्रेण—राक्षस-भार्य्याप्रदानेन, आत्मनः कलत्रं जीवितञ्च रक्ष, अन्यथा तदनर्पणे तव कलत्रजीवनयोः रनिष्टः स्यादित्याशयः।

(द) मे इति।—[ अत्र "गतिबुद्धि—" (१।४।५२ पा०) इति सूत्रे "दृशेः सर्वत्र"

चाण। चन्दनदास! एष ते निश्चयः?

चन्द। बाढ़ं, (घ) एसो मे त्थिरो णिच्चओ। *

चाण। [स्वगतम्]। साधु चन्दनदास! साधु!—

सुलभेष्वर्थलाभेषु परसंवेदने जनः।
क इदं दुष्करं कुर्य्यादिदानीं शिविना विना?॥ २४॥

[प्रकाशम्]। चन्दनदास! एष ते निश्चयः?

चन्द। बाढ़ं। † (न)

---

* बाढ़, एष मे स्थिरो निश्चयः।

† बाढ़म्।

---

इति भाष्यवचनात् कर्मतायां "पत्ये शेते" इतिवत् "कर्मणा यमभिप्रैति" (१।४।३२ पा०) इति सूत्रेण चतुर्थी]।

(घ) बाढं—"भृशप्रतिज्ञयोः बाढम्" इत्यमरः।

बन्धुनिमित्तं निखिलमैश्वर्य्यजातमपहाय स्वविनाशमनायासेन स्वीकुर्वतश्चन्दनदासस्य दृढतामवगम्य मनसा तं स्तौति, सुलभेष्विति।—अर्थलाभेषु अर्थानां लाभाः येभ्यः ते अर्थलाभाः अर्थार्जनोपाया इत्यर्थः, तेषु सुलभेषु सत्सु राक्षसकलत्रपरित्यागे राजानुग्रहलाभः, तल्लाभे च विविधोन्नतिः सम्भाव्यते इति जानन्नपि इति भावः; इदानीम् अस्मिन् कलियुगे, शिविना तन्नामधेयेन राज्ञा, विना परसंवेदने (संविद्यते अनुभूयते इति संवेदनं सुखदुःखादि, प्रकरणादत्र दुःखं) परस्य इतरस्य, संवेदने दुःखे तद्विषये, (परसंवेदने परकीयार्थस्य समर्पणे कृते सति स्वस्वार्थलाभेषु सुलभेषु अयमेव अन्वयः साधुः) इदम् उक्तप्रकारं स्वजीवनदानेनापि स्वार्थं तृणीकृत्य परकलत्ररक्षणरूपं, दुष्करम् असाध्यं, राजदण्डावश्यम्भावादिति भावः, कस्को जनः, कुर्य्यात्? न कोऽपीत्यर्थः। धनार्जनोपायार्थत्वेन तत्राऽऽचरणं कादित्याशङ्क्य तेषां सुलभत्वं प्रदर्शितम्। शिविना कपोतरक्षणाय श्येनभक्ष्यार्थमात्मनः मांसं दत्तमिति पौराणिकी वार्त्ताऽत्रानुसन्धेया। [अत्र महतः शिवेश्चरितस्य प्रस्तुताङ्गत्वादुदात्तालङ्कारः, शिविः नरेन्द्रः पुण्यबहुले कृतयुगे कृतवान्, त्वं तु इदानीं पापबहुलेऽपि कलौ करोषीति ततोऽप्यधिकमुच्चरितत्वमिति व्यतिरेकश्च व्यज्यते। इदमपि पुष्पम्]। पथ्यावक्त्रं वृत्तम्॥ २४॥

(न) स्वजीवननाशेऽपि अमात्यकलत्रासमर्पणरूपो निश्चयः निश्चीयमानोऽर्थः।

चाण। [सक्रोधम्]। दुरात्मन्! दुष्टवणिक्! अनुभूयतां तर्हि राजकोपः।

चन्द। [बाहू प्रसार्य (प)]। सज्जोम्हि, अणुचिट्ठदु अज्जो अत्तणो अहिआरस्स अणुरूअं। *

चाण। [सक्रोधम्]। शार्ङ्गरव! उच्यताम् अस्मद्वचनात् कालपाशिको दण्डपाशिकश्च—"शीघ्रमयं दुष्टवणिक् निगृह्यताम्" अथवा—तिष्ठतु, उच्यतां दुर्गपालो विजयपालश्च, "गृहीतगृहसारम् एनं सपुत्रकलत्रं संयम्य रक्ष" तावत्, यावत् मया वृषलाय कथ्यते, (फ) स एव अस्य सर्वस्वप्राणहरणं दण्डम् आज्ञापयिष्यति।

शिष्यः। यत् आज्ञापयति उपाध्यायः। श्रेष्ठिन्! इत इतः।

चन्द। [उत्थाय]। अज्ज! अअमाअच्छामि। [स्वगतम्]। दिट्ठिआ मित्तकज्जेण मे विणासो जणिदो, ण उण पुरिसदोसेण। † (ब) [परिक्रम्य शिष्येण सह निष्क्रान्तः]।

चाण। [सहर्षम्]। हन्त!! लब्ध इदानीं राक्षसः। कुतः?—

* सज्जोऽस्मि, अनुतिष्ठतु आर्य्यः आत्मनोऽधिकारस्य अनुरूपम्। [ "सरिसं" इति पाठे—सदृशम्]।

† आर्य्य! अयमागच्छामि। दिष्ट्या मित्रकार्य्येण मे विनाशो जनितः, न पुनः पुरुषदोषेण।

(प) दण्डग्रहणे सानन्दचित्ततापदर्शनार्थं निःशङ्कं दण्डग्रहणार्थं वा बाहुप्रसारणम्।

(फ) गृहीतगृहसारं—गृहीतः गृहस्य सारः,—मूलधनादिरूपश्चिरांशः यस्य स तथोक्तस्तम्। वृषलाय इति।—[ अत्र "क्रियाग्रहणमपि कर्त्तव्यम्" इति वार्त्तिकात् चतुर्थी। इह छद्मना हितागमननिरोधनं निरोधः। छद्मना कपटेन हितागमनार्थं स्वेष्टसिद्धये चन्दनदासनिरोधात्; यद्वा—हितं राक्षसम् आगमयति इति हितागमः, हितागमनस्य हितराक्षसागमनहेतुभूतस्य चन्दनदासस्य निरोधनात् ]।

(ब) पुरुषदोषेण—स्वापराधेन, सर्वगुणसाधारणदोषेण न विनाशः जनितः इत्यर्थः। [ अत्र अप्रस्तुतपूर्वकं कथितावस्तुनःसाध्याभ्यस्य अपीड़ात् परिकरोऽलङ्कारः ]।

त्यजत्यप्रियवत् प्राणान् यथा तस्यायमापदि।
तथैवास्यापदि प्राणा नूनं तस्यापि न प्रियाः॥ २५॥

[ नेपथ्ये कलकलः ]।

चाण। शार्ङ्गरव!

शिष्यः। [ प्रविश्य ]। उपाध्याय! आज्ञापयतु।

चाण। ज्ञायतां किमेतत्।

शिष्यः। [ निष्क्रम्य विभाव्य पुनः प्रविश्य सम्भ्रान्तः ]। उपाध्याय! एष खलु शकटदासं बध्यमानं बध्यभूमेः आदाय समपक्रान्तः (भ) सिद्धार्थकः।

चाण। [ स्वगतम् ]। साधु सिद्धार्थक! साधु, कृतः कार्य्यारम्भः। (म) [ प्रकाशम् ]। प्रसह्य किमपक्रान्तः? [ सक्रोधम् ]। वत्स! उच्यतां भागुरायणो यथा "त्वरितमेनं सम्भावय" इति। (य)

---

बन्धुकलत्ररक्षणाय चन्दनदासस्य स्वमरणस्वीकरणमाकर्ण्य मुदितश्चाणक्यः राक्षस-पराभवमुत्प्रेक्षमाण आह, त्यजतीति।—अयं चन्दनदासः, तस्य राक्षसस्य, आपदि पुत्रकलत्रादीनां ग्रहणरूपे पतिष्यन्त्यरूपायां, तद्रक्षणायेति भावः, प्राणान् अप्रियवत् अनिष्टवत्, [ अप्रियैः अनभीष्टैः तुल्यम् इति वतिः ] यथा त्यजति, अस्य चन्दनदासस्य, आपदि स्वकलत्ररक्षणार्थं राजदण्डेन विनाशरूपायां विपत्तौ सत्यां, तथैव तस्य राक्षसस्यापि, प्राणाः न प्रियाः, भविष्यन्तीति शेषः, तस्य कृतोपकारित्वात् अभिमत-चन्दनदासेन सहाभिन्नहृदयत्वाच्च। नूनमुत्प्रेक्षे, सम्भावयामीति भावः। [ अत्र अयं स इव सोऽपि अयमिव इति उपमेयोपमा व्यङ्ग्या ]। पथ्यावक्त्रं वृत्तम्॥ २५॥

(भ) बध्यभूमेः इति।—[ अपादाने पञ्चमी ]। समपक्रान्तः,—पलायितवान्।

(म) कार्य्यारम्भः,—समन्वितस्य शकटदासं बध्यभूमेरादायापसरणरूपस्य कार्य्यस्य आरम्भः साधु यथा स्यात् तथा कृतः। तथा करणे च तस्य राक्षसविषये विश्वासभाजनता स्यात् इति, तेन चाग्रे वर्णयिष्यमाणं महत् कार्य्यं भविष्यतीति तस्य साधुत्वम्। [ अयमपि बिन्दुः ]।

(य) सम्भावय—धर। निकटस्थं विद्रावं नाशय इति भावः, त्वमपि तेन सह गत्वा कार्य्यं साधय इति च गूढोऽर्थः।

शिष्यः। [ पुनः तथा कृत्वा प्रविश्य सविषादम् ]। उपाध्याय! हा धिक् कष्टम्, अपक्रान्तो भागुरायणोऽपि। (र)

चाण। [ स्वगतम् ]। व्रजतु कार्य्यसिद्धये। (ल) [ प्रकाशं सक्रोधमिव ]। वत्स! कृतं विषादेन, उच्यन्ताम् अस्मद्वचनात् भद्रभट-पुरुषदत्त-हिङ्गुरात-बलगुप्त-राजसेन-रोहिताक्ष-विजयवर्माणः, "शीघ्रम् उपसृत्य गृह्यतां दुरात्मा भागुरायणः"।

शिष्यः। यदाज्ञापयति उपाध्यायः। [ इति निष्क्रम्य पुनः प्रविश्य सविषादम् ]। उपाध्याय! हा धिक् कष्टं, सर्वमेव तन्त्रमाकुलीभूतं, तेऽपि खलु भद्रभटप्रभृतयः प्रथमम् अप्रभातायामेव रजन्याम् अपक्रान्ताः। (व)

चाण। [ स्वगतम् ]। सर्वेषामेव शिवाः पन्थानः सन्तु। [ प्रकाशम् ]। वत्स! अलं विषादेन। पश्य—

ये याताः किमपि प्रधार्य्य हृदये, पूर्वं गता एव ते,
ये तिष्ठन्ति, भवन्तु तेऽपि गमने कामं प्रकामोद्यमाः।

---

(र) भागुरायणस्यापि अपक्रमणं मलयकेतोराश्रयस्थित्या वक्ष्यमाणकार्य्यनिष्पादनार्थं, तच्च चाणक्येन स्वयमुपदिष्टम्।

(ल) कार्य्यस्य—अग्रे वर्णयिष्यमाणस्य स्वोपदिष्टस्य कृत्यस्य, सिद्धये—निष्पादनाय।

(व) तन्त्र—प्रकृतिमण्डलम्। आकुलीभूतं—व्यतिव्यस्तम्, अनवस्थितमर्य्यादमिति यावत्; प्रायोऽनेकेषाम् अपसरणात्। अप्रभातायां रजन्याम् इति।—[ अत्र "प्रथमतरमुषस्येव" इति क्वचित् पाठः ]। अपक्रान्ताः,—पलायिताः।

योऽहं सहायहीनोऽपि स्वबुद्धिशक्त्या सर्वं सम्पादितवान्, तस्य मे स्थितायां तद्बुद्धौ किं सहायगमनेनेति वहिः प्रकटयितुमिच्छन्नाह, ये याता इति।—ये भागुरायणादयः, किमपि मदुपदिष्टमनुपदिष्टं वा इष्टं, हृदये प्रधार्य्य मनसि कृत्वा, (अस्मद्विरोधं मनसि कृत्वा इति वहिः, अस्मत्कार्य्यसिद्धिमुद्दिश्य इति गूढम्) याताः मलयकेतोः समीपे इत्यर्थः, ते पूर्वमेव गताः, हृदयचिन्ताऽनुसारित्वात् स्वस्वमतेः, अतः तदनुशोचनं वृथैव, "गतस्य शोचनं नास्ति" इति न्यायादिति भावः; ये जनाः, अत्र इदानीं तिष्ठन्ति तेऽपि गमने मलयकेतुसमीपगतौ, प्रकामोद्यमाः

एका केवलमर्थसाधनविधौ सेनाशतेभ्योऽधिका
नन्दोन्मूलनदृष्टवीर्य्यमहिमा बुद्धिस्तु मा गान्मम ॥ २६ ॥

[ उत्थाय प्रत्यक्षवदाकाशे लक्ष्यं बद्ध्वा ]। एष खलु दुरात्मनो भद्रभट-प्रभृतीन् आहरामि। [ आत्मगतम् ]। दुरात्मन् राक्षस! क्व इदानीं यास्यसि ? (श) एषोऽहमचिरात् भवन्तं—

स्वच्छन्दमेकचरमुज्ज्वलदानशक्तिम्
उत्सेकिना बलमदेन विगाह्यमानम्।

प्रकाश्यमानोत्साहाः, कामं यथेष्टम्, अनुमतमेतदेव इत्यर्थः, ("अकामानुमतौ कामम्" इत्यमरः) भवन्तु गच्छन्तु इत्यर्थः, मया स्वबुद्ध्या एव तैर्विनाऽपि सर्वकार्य्याणां सम्पाद्यत्वात् तैरपि न मे प्रयोजनमिति भावः। अर्थसाधनविधौ प्रयोजनसम्पादनरूपे विधाने, सेनाशतेभ्यः बहुसेनाभ्यः, अधिका अधिककार्य्यक्षमा, नन्दोन्मूलनदृष्टवीर्य्यमहिमा नन्दानाम् उन्मूलने दृष्टः वीर्य्यस्य शक्तेः, महिमा माहात्म्यं, कार्य्यक्षमतातिशय इत्यर्थः, यस्यास्तादृशी, एका अद्वितीया, मम बुद्धिस्तु केवलं मा गात् न गच्छतु, [ बुद्धेः सर्वकार्य्यसाधनक्षमताद्योतनार्थं नन्दोन्मूलनेत्यादि विशेषणम् ] बुद्धिबलेन एवाहं सर्वं सम्पादयिष्यामि इति भावः। [ अत्र काव्य-लिङ्गमलङ्कारः। अयं चतुर्वर्णनिर्वर्णनं वर्णसंहारः। ब्राह्मणादिचतुर्वर्णान्तःपातिनीनां प्रकृतीनां ये याता इत्यादिना निर्वर्णनात् निर्देशात् त्रयोदशम् अङ्गम्। इतीवाङ्के वक्ष्यमाणं तेषामुदन्तमानेष्यामि इति गूढाशयः ]। शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥

(श) स्वप्रेरितपुरुषैः राक्षसस्य व्यापनात् तस्य सुखयाप्यत्वं द्योतयन्नाह, क्वेदानी-मित्यादि।—इदानीमस्मत्प्रेरितगुप्तचरैरेवं संवेष्टितः कस्मिन् पुरुषे विश्वस्य स्वकार्य्यं विन्यस्य यास्यसि ? न केचिदपि तवार्थसाधकाः, सर्वे ममार्थसाधका एव, मत्प्रणिधि-त्वात्; यद्वा—क्व कस्मिन् देशे, यास्यसि ? अस्मत्प्रणिधिभिरनुसियमाणः यत्र कुत्रापि पलायिष्यसे तत्र तत्रैव धृतो भविष्यसीति तव पलायनमप्यसुकरमिति भावः।

स्वबुद्धिविनयेन नन्दवंशध्वंसं नन्दराज्ये मौर्य्यप्रतिष्ठाञ्च विदधत् कौटिल्यः स्वबुद्धि-कौशलेन नीतिबुद्धिविभूषितस्यापि राक्षसस्य वशीकरणं प्रतिपादयति, स्वच्छन्दमिति। —एकचरम् एकः निःसहायः, दूरीभूय सन्, चरतीति तथोक्तं, नन्दवंशसम्बन्धिनी-ऽस्मान् हित्वा तवैकास्तरतीति भावः, उज्ज्वलदानशक्तिम् उज्ज्वला उत्कृष्टा, दानशक्ति-र्वितरणशक्तिः, मदजलक्षरणसामर्थ्यञ्च यस्य तथाविधं, परस्वात्योपलापार्थे महता कोषव्ययेन स्थापितः अकटदास इति वक्ष्यमाणवहुव्ययकारिणमिति भावः;

बुद्ध्या निगृह्य, वृषलस्य कृते, क्रियायाम्

आरण्यकं गजमिव प्रगुणीकरोमि ॥ २७ ॥

[ इति निष्क्रान्ताः सर्वे ] । (च)

इति मुद्राराक्षसे प्रथमोऽङ्कः । (छ)

---

उत्सेकिना उद्रिक्तेन, बलमदेन सैन्यगर्वेण, दैविकसामर्थ्योद्दामपराक्रमेण च, अरातिहस्तगतो विनश्येत, न तु चन्द्रगुप्तेन सन्दधीत इति षष्ठाङ्के वक्ष्यमाणदुरभिमानवतीति भावः; स्वच्छन्द यथेच्छं, यद्वा—स्वच्छन्दं निरङ्कुशं, स्वपक्षमपहाय विजातीयं परपक्षमाश्रितोऽसीति तव कोऽपि नियन्ता नास्तीत्यर्थः, विगाहमानम् अस्मदपकाराय चेष्टमानं, विचरन्तञ्च, आरण्यकं वन्यं, दुर्दमत्वसाम्यात, गजमिव भवन्तमिति गम्यस्थपदमत्राक्षेप्यान्वयः कार्यः; वृषलस्य चन्द्रगुप्तस्य, कृते निमित्तं, तस्य प्रयोजनसाधनार्थमित्यर्थः, बुद्ध्या निगृह्य वशीकृत्य, क्रियायां तस्यैव साचिव्यग्रहणरूपायां, वाहनादिरूपायाञ्च, प्रगुणीकरोमि प्रकृष्टगुणवन्तम्, अनुरागिणमित्यर्थः, सुदृढरज्जुबद्धञ्च, करोमि । यथा आरण्यको दुष्टगजः शनैर्गतपाददृढरज्जुबन्धनादिना उपायेन संवाहनादिक्रियायां प्रगुणीक्रियते ( वशीक्रियते ) एवं त्वामतिसङ्कटे पातयित्वा अगतिकतया यथा स्वयमेव प्रणयीभवसि तथा वृषलसाचिव्यक्रियायां वशीकरोमि इत्यर्थः । [ अत्र श्लेषानुप्राणिता उपमा । अयं प्रयत्नः,—"प्रयत्नस्तु तदप्राप्तौ व्यापारोऽतित्वरान्वितः" इति लक्षणात् । इत्थं यत्नबिन्दुसम्बन्धरूपप्रतिमुखसन्धिः । बिन्दुप्रयत्नानुगुण्येनास्य सन्धेः त्रयोदशान्यप्यङ्गानि यथामति योजितानीति सूक्ष्मदृष्टिभिरवधार्य्य सन्तोष्टव्यम् ] । वसन्ततिलकं वृत्तम् ॥ २७ ॥

(च) "पात्रैस्त्रिचतुरैरङ्कस्तेषामन्ते च निर्गमः" इत्युक्तेः प्रविष्टपात्राणामङ्कशेषे निष्क्रमणस्यावश्यकत्वात् निष्क्रान्ताः सर्वे इत्युक्तम् ।

(छ) "प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः" इत्याद्युक्तलक्षणः अङ्कः ।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन कुलपतिकल्प-"बि,ए"इत्युपनामक-

श्रीमज्जीवानन्दविद्यासागर भट्टाचार्य्यविरचितायां, तदात्मजाभ्यां

श्रीमदाशुबोधविद्याभूषण-श्रीमन्नित्यबोधविद्यारत्नाभ्यां

परिवर्त्तित-परिवर्द्धितायां सुखबोधिनी-

समाख्यायां मुद्राराक्षसव्याख्यायां

प्रथमोऽङ्कः ॥ १ ॥

# द्वितीयोऽङ्कः ।

[ ततः प्रविशति आहितुण्डिकः । (क) ]

आहि ।—

जाणंति तंतजुत्तिं जहट्ठिअं मंडलं अहिलिहंति ।
जे मंतरक्खणपरा ते सप्पणराहिवे उवचरंति * ॥ १ ॥

---

* जानन्ति तन्त्रयुक्तिं यथास्थितं मण्डलमभिलिखन्ति ।
ये मन्त्ररक्षणपरास्ते सर्पनराधिपे उपचरन्ति ॥

---

(क) अथ राक्षसकृतोपायवृत्तान्तकथनाय प्राप्त्याशापताकासम्बन्धरूपो गर्भसन्धिः द्वितीयेनाङ्केन आरभ्यते।—"गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः" इति लक्षणात्। पूर्वाङ्के दृष्टस्य अत्र राक्षसाहितुण्डिकसंवादरूपया व्यापिन्या कथया पताकाख्यया नष्टस्य अदृष्टस्य चाणक्यनीतिरूपस्य बीजस्य अग्रे मुहुरन्वेषणात्। पताकाप्राप्त्याशानुगुण्येन गर्भसन्धेरङ्गानि—"अभूताहरणं मार्गो रूपोदाहरणे क्रमः। सङ्ग्रहश्चानुमानञ्च तोटकाधिबले तथा। उद्वेगसम्भ्रमाक्षेपा द्वादशाङ्गान्यनुक्रमात्॥" इति।

आहितुण्डिकः,—सर्पक्रीडनोपजीवीत्यर्थः, ("सापुड़े" "तुण्डिओयाला" इति वा भाषा) [ अहितुण्डेन सर्पमुखेन दीव्यतीति ठक् ] अत्राहितुण्डिकरूपच्छद्मवेशधारिणो विराधगुप्तस्य सर्वं प्राकृतं वचनं प्रस्तुतोपयोगिच्छद्माचरणमभूताहरणम्; प्रस्तुतस्य राक्षसं प्रति कुसुमपुरवृत्तान्तकथनस्योपयोगि छद्माचरणात्।

सुनीतिप्रयोगनिपुणेन धीसम्पन्नेन राक्षसेन छद्मना कुसुमपुरवृत्तान्तं ज्ञातुं नियुक्तः आहितुण्डिकवेशधारी पुरुषः स्वकार्यस्य दुरवगाहराजनीतिपरतयाऽतिक्लिष्टत्वं दर्शयितुमाह, जानन्तीति।—ये जनाः, तन्त्रे स्वराष्ट्रचिन्तायाम्, विषौषधसिद्धे च, ("तन्त्रं स्वराष्ट्रचिन्तायां शास्त्रौषधमखेष्वपि" इति वैजयन्ती) युक्तिं सिद्धान्तोपन्यासं प्रयोगञ्च, यथास्थितं यथायथं, जानन्ति, मण्डलं राष्ट्रम्, अथवा द्वादशराजमण्डलम्, अयमरिः, अयं मित्रम्, अयमरिमित्रम्, अयमुदासीनः, अयं विजिगीषुः इत्यादिस्वरूपं, पक्षे—मण्डलं माहेन्द्रादिदेवतायन्त्रं, मण्डलाकारवेष्टनं वा, अभि अभिमुख्य, निश्चितो ज्ञात्वा, [ "अभिरभागे" (१।४।९१ पा०) इति द्वितीया ] लिखन्ति

[आकाशे]। अज्ज! किं भणासि—को तुमं त्ति? (ख) अज्ज! अहं क्खु आहितुंडिओ जिण्णविसो णाम। [पुनराकाशे]। किं भणासि—अहंपि अहिणा खेलिदुं इच्छामि त्ति? अध कदरं उण अज्जो वित्तिं उवजीवदि? [पुनराकाशे]। किं भणासि—राअउलसेवओ त्ति? णं खेलदि ज्जेव अज्जो अहिणा। किं भणासि—कधं त्ति? अमंतोसहिकुसलो वालग्गाही,

---

* आर्य्य! किं भणसि—कस्त्वमिति? आर्य्य! अहं खलु आहितुण्डिको जीर्णविषो नाम। किं भणसि—अहमपि अहिना खेलितुमिच्छामीति? अथ कतरां पुनरार्य्यो वृत्तिम् उपजीवति? किं भणसि—राजकुलसेवक इति? ननु खेलति एव आर्य्योऽहिना। किं भणसि—कथमिति? अमन्त्रौषधिकुशलो व्यालग्राही,

---

पलाकृढान् कुर्वन्ति, पक्षे—सर्पकुण्डलनस्थानं विविच्य भूमिं विदारयन्ति ; ये च मन्त्ररक्षणपरा: मन्त्रणाकार्य्यस्य रक्षणे गोपने, परा: आसक्ता:, मन्त्रणागोपनशीला: इति यावत, पक्षे—गारुडादिमन्त्रै: रक्षणे आत्मरक्षणे, परा अप्रमत्ता:, गारुडादिमन्त्रधारका इत्यर्थ:, ते जना:, सर्पनराधिपे सर्प एव नराधिप:. यत्किञ्चित्स्खलनेऽपि तीक्ष्णप्रतापेन प्राणहरत्वात, [एतेन तन्त्रप्रयोगादिषु अभिज्ञस्य सर्वगुणसम्पन्नस्य राक्षसस्यैव सर्पेण क्रीडनसदृशे अस्मिन् कौटिल्येन सह प्रतिद्वन्द्विताव्यापारे योग्यता विद्यते, नान्येषा-मल्पबुद्धीनामिति व्यज्यते] तस्मिन् उपचरन्ति व्यवहरन्ति, तमुपजीव्य जीवितु शक्नुवन्ति, नान्ये। [एतेन राज्यतन्त्रविचक्षणैः अतिसावधानतया वर्त्तितव्यम्, अन्यथा आत्मविनाशसम्भव इति सूच्यते। अत्र सर्पे नराधिपत्वारोपात् तथा तन्त्रादिपदानां श्लिष्टत्वेन सर्पपक्षे राजपक्षे च अभिधाननियमनात् श्लेषानुप्राणितो रूपकालङ्कार: ; तेन च राजनीतिसर्पखेलनकुशलोऽहं सर्पक्रीडया चन्द्रगुप्तं पराभूय राजनीतिकत्वं प्रति-पादयिष्यामि इति वस्तु व्यज्यते] ॥ १ ॥

(ख) एवमाकाशस्थादृश्यपुरुषवाक्यं स्वयमेवोक्त्वा प्रत्युत्तरयति, आर्य्येति।—"किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते। श्रुत्वेवानुक्तमप्यर्थं तत् स्यादाकाशभाषितम् ॥" इति "अप्रविष्टै: सहालापो भवेदाकाशभाषणम्" इति च लक्षणात्। एवमग्रेऽपि।

(ग) नन्विति—निश्चये, उत्तरवाक्यप्रदाने वा। तत्र त्वयं विशेष:,—["ननौ पृष्टप्रतिवचने" (३।२।१२० पा०) इति सूत्रेण "खेलति" इत्यत्र भूते लट्, तेन ननु खेलति—क्रीडितवानासीत् इत्यर्थ:। एतेन भवानपि सर्पनराधिपनर्तक: इति

अगिहीदंकुसो मत्तगअवरारोही, लद्धाहिआरो जिदकासो राअसेवओ त्ति, एदे तिण्णि अवस्सं विणासमणुहोंति। (ग) कधं, दिट्ठमत्तो अदिक्कंतो एसो! [पुनराकाशे]। अज्ज! तुमं उण किं भणासि—किं एदेसु पेडासमुग्गकेसु त्ति? अज्ज! अप्पजीविआसंपादआ सप्पा। [पुनराकाशे]। किं भणासि—पेक्खिदुमिच्छामि त्ति? पसीददु पसीददु अज्जो, अट्ठानं क्खु एदं; ता जइ दे कोदूहलं, ता एहि, एदस्सिं आवासे दंसेमि। [पुनराकाशे]। किं भणासि—एदं क्खु भट्टिणो अमच्चरक्खसस्स गेहं, णत्थि इध अम्हारिसाणं प्पवेसो त्ति? तेण हि गच्छदु अज्जो, जीविआए प्पसादेण अत्थि एत्थ मम प्पवेसो त्ति। कधं, एसो वि अदिक्कंतो! *

---

अगृहीताङ्कुशो मत्तगजवरारोही, लब्धाधिकारी जितकाशी राजसेवक इति, एते त्रयोऽवश्यं विनाशमनुभवन्ति। कथं, दृष्टमात्रोऽतिक्रान्त एषः! आर्य! त्वं पुनः किं भणसि—किमेतेषु पेटकसमुद्गकेषु इति? आर्य! आत्मजीविका-सम्पादकाः सर्पाः। किं भणसि—प्रेक्षितुमिच्छामीति? प्रसीदतु प्रसीदतु आर्यः, अस्थानं खलु एतत्; तत् यदि ते कौतूहलं, तदेहि, एतस्मिन्नावासे दर्शयामि। किं भणसि—इदं खलु भर्तुरमात्यराक्षसस्य गृहं, नास्तीह अस्मादृशानां प्रवेशः इति? तेन हि गच्छतु आर्यः, जीविकायाः प्रसादेन अस्ति अत्र मम प्रवेश इति। कथम्, एषोऽपि अतिक्रान्तः!।

---

व्यज्यते]। मन्त्रौषधिकुशलः,—मन्त्रे—गारुडादिके, ओषधौ—ईश्वरमूलकादौ च, ("ईश्वर मूल" इति भाषा) न कुशलः,—निपुणः, अज्ञः इत्यर्थः। ["असूर्यम्पश्या राजदाराः" इत्यादिवत् अत्रापि नञ् समासः]। एवंविधो व्यालग्राही—सर्प-ग्रहणोपजीवी। तथा अगृहीताङ्कुशः,—अगृहीतः अङ्कुशः येन तादृशः, अङ्कुशदण्ड-रहितः इत्यर्थः। मत्तगजवरारोही—मत्तहस्तिश्रेष्ठारोही। तथा लब्धाधिकारः,—लब्धः अधिकारः,—कार्यप्रभुत्वं येन तादृशः। जितकाशी—युद्धविजयी इत्यर्थः, [जितेन काशते प्रकाशते इति णिनिः] एवम्भूतः राजसेवकः,—राजपरिचारकः। एते—चत्वारः। त्रयः,—त्रितयाः, त्रयः इति शेषः। अवश्यं—निश्चितम्। विनाशं—मृत्युम्। अनुभवन्ति—प्राप्नुवन्तीत्यर्थः; एतेषां सर्वेषां स्वस्वकर्मप्रमादादिति भावः।

[ दिशोऽवलोक्य संस्कृतमाश्रित्य (घ) स्वगतम् ]। अहो! आश्चर्यम्। चाणक्यमतिपरिगृहीतं चन्द्रगुप्तम् अवलोक्य विफलमिव राक्षसप्रयत्नम् अवगच्छामि। राक्षसमतिपरिगृहीतञ्च मलयकेतुम् अवलोक्य चलितमिवाधिराज्यात् चन्द्रगुप्तमवगच्छामि। (ङ) तथा हि—

कौटिल्यधीरज्जुनिबद्धमूर्त्तिं
मन्ये स्थिरां मौर्य्यकुलस्य लक्ष्मीम्।
उपायहस्तैरपि राक्षसेन
विकृष्यमाणामिव लक्षयामि ॥२॥

---

(घ) वस्तुतः स्वस्य उत्तमपात्रत्वात् स्वगतं संस्कृतवचनम्।

(ङ) चाणक्येति।—चाणक्यस्य मतिः,—बुद्धिः, प्रवर्त्तनारूपा परिगृहीता येन तं तथोक्तं, [ निष्ठान्तस्य "वाऽऽहिताग्न्यादिषु च" (२।२।३७ पा०) इति आहिताग्न्यादित्वात् पाक्षिकः पूर्वनिपातः ]। राक्षसप्रयत्नं—राक्षसस्य प्रयासम्। विफलमिव—चाणक्यबुद्धिसाहाय्यमधिगम्यापि चन्द्रगुप्ते फलजननासामर्थ्यात् वृथैव। अवगच्छामि—सम्भावयामि। एवं राक्षसमतीत्यादेरप्यर्थः। [ एतेन उभयोरपि सचिवयोः बुद्धिकौशलमतीव विस्मयकरमिति द्योतितम् ]।

इदानीम् उभयोर्बुद्धिकौशलयोः परस्परविमर्दकत्वमेव दर्शयितुमाह, कौटिल्येति।—मौर्य्यकुलस्य चन्द्रगुप्तवंशस्य, लक्ष्मीं राज्यश्रियं, कौटिल्यस्य चाणक्यस्य, धीः बुद्धिः एव, ( स्थिरताऽऽपादनहेतुत्वात् ) रज्जुः, तया निबद्धा मूर्त्तिर्यस्याः ताहृशीम्, अत एव स्थिरां रज्जुबद्धत्वात् निश्चलाम् इव, मन्ये। अपि तथा, राक्षसेन उपायाः सामादयः, ( "भेदो दण्डः साम दानमित्युपायचतुष्टयम्" इत्यमरः ) एव हस्ताः ( आकर्षणहेतुत्वात् ) तैः विकृष्यमाणाम् आकृष्यमाणामिव, लक्षयामि सम्भावयामि; रज्जुबद्धमपि हस्तेनाकृष्यमाणं लोकसिद्धमित्यतस्तथा सम्भावनम्। [ अत्र बुद्धौ रज्ज्वा उपायेषु च कराणां तादात्म्येन अभेदारोपाद्रूपकद्वयम्; तेन च मौर्य्यलक्ष्मीबन्धनस्य तथा राक्षसकर्तृकाकर्षणस्य सम्भावनाबोधनादुत्प्रेक्षाद्वयम्; तदनयोरङ्गाङ्गिभावेन सङ्करः, "रूपकं रूपिताऽऽरोपाद्विषये निरपह्नवे" इति "भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति च लक्षणात् ]। अत्र इन्द्रवज्रोपेन्द्रवज्रयोः उपजातिः वृत्तम्; सा च उपजातिप्रकारस्य बहूनामवयवोदाभेदे वल्लभंवति ॥ २ ॥

तदेवमनयोः सुनयशालिनोः सचिवयोर्विरोधे संशयितेव (च) नन्दकुललक्ष्मीर्लक्ष्यते। कुतः?—

विरुद्धयोर्भृशमिह मन्त्रिमुख्ययोः
महावने वनगजयोरिवान्तरे।
अनिश्चयाद्गजवशयेव भीतया
गतागतैर्भृशमिव खिद्यते श्रिया ॥३॥

तत् यावत् (छ) अहममात्यराक्षसं पश्यामि। [ इति परिक्रम्य स्थितः ]।

---

(च) सुनयशालिनोः,—सुनीतिज्ञयोः। सचिवयोः,—मन्त्रिणोः, चाणक्य-राक्षसयोरित्यर्थः। संशयितेव—कुत्र तिष्ठामीति सन्देहाकुलेव इत्यर्थः। [अत्र उत्प्रेक्षाऽलङ्कारः]।

सुनयशालिनोश्चाणक्य-राक्षसयोः कलहे मौर्य्य-मलयकेत्वोः अन्यतरमङ्गीकृत्य दृढमवतिष्ठे इति राजलक्ष्म्याः सन्दिग्धतां वर्णयन्नाह, विरुद्धयोरिति।—महावने महारण्ये, अन्तरे—आहवे, वनगजयोरिव भृशम् अतिमात्रं, विरुद्धयोः अन्योऽन्यजयार्थं विरोधमाचरतोः, मन्त्रिमुख्ययोः अमात्यवरयोः चाणक्यराक्षसयोः, अन्तरे मध्ये, स्थितया इति शेषः; इह अस्मिन् उपस्थितविषये परस्परजयरूपे व्यापारे, अनिश्चयात् कस्य जयो भविष्यतीति निश्चयाभावात्, भीतया गजवशया करिण्या इव, ("वशा स्त्री करिणी च स्यात्" इत्यमरः) श्रिया राजलक्ष्म्या, गतागतैः मलयकेतोः मौर्य्ये गतिः, पुनः मौर्य्यात् मलयकेतौ आगतिरित्येवं गमनागमनैः, भृशं प्रयासबाहुल्यात् अत्यर्थं, खिद्यते इव। [ मन्त्रिणोर्वनगजसादृश्यप्रदर्शनात् श्रियाश्च करिणीसाम्यकथनात् उपमाद्वयं, तेन च राजलक्ष्म्याः खेदसम्भावनाऽवबोधनादुत्प्रेक्षा, तदनयोः संसृष्टिः। इयं प्राप्त्याशा—"उपायापायशङ्काभ्यां प्राप्त्याशा कार्य्यसम्भवः" इति लक्षणात्। कौटिल्यधीरज्जुनिबद्धा इति उपायशङ्का, राक्षसेन विकृष्यमाणा इति अपायशङ्का, ताभ्यां कार्य्यस्य मौर्य्यश्रीस्थैर्य्यस्य सम्भवः आदावव्यक्तत्वेन सम्भावना। विराध-राक्षसयोः महती संवादकथा पताका—"प्रतिपाद्यकथाङ्गं स्यात् पताका व्यापिनी कथा" इति लक्षणात्। अनयोः सम्बन्धात् अयं गर्भसन्धिः ]। रुचिरा वृत्तं—"जभौ सजौ गिति रुचिरा चतुर्ग्रहैः" इति लक्षणात्। अत्र प्रस्तारसङ्ख्या २८०६ ॥ ३ ॥

(छ) इदम् अङ्कास्यम्—"अङ्कान्तपात्रैरङ्कास्यमुत्तराङ्कार्थसूचना" इति लक्षणात्; पूर्वाङ्के चाणक्येन "बलमदेन विगाहमानम्" इति राक्षसकृतविगाहनस्य नीतिप्रयोगस्य अग्रिमाङ्के वक्ष्यमाणस्य सूचनात्। यद्वा अङ्कावतरणं—"अङ्क

[ ततः प्रविशति आसनस्थः स्वभवनगतः पुरुषेणानुगम्यमानः
सचिन्तो राक्षसः ]।

राक्ष। [ ऊर्ध्वमवलोक्य सबाष्पम् ]। (ज) कष्टं भोः ! कष्टम् ।—

वृष्णीनामिव नीतिविक्रमगुणव्यापारशान्तद्विषां
नन्दानां विपुले कुलेऽकरुणया नीते नियत्या क्षयम् ।
चिन्तावेशसमाकुलेन मनसा रात्रिन्दिवं जाग्रतः
सैवेयं मम चित्रकर्मरचना भित्तिं विना वर्त्तते ॥ ४ ॥

---

स्यादुत्तराङ्कार्थः पूर्वाङ्कार्थानुसङ्गतः। अङ्कसूचिताङ्कपात्रं तदङ्कावतरणं मतम् ॥" इति लक्षणात्। अत्र वक्ष्यमाणस्य चाणक्यशकटदासादिनिपातस्य पूर्वाङ्कार्थानुसक्तत्वात् चाहितुण्डिकप्रवेशस्यासूचनाच्च।

(ज) चिन्ताकाले ऊर्ध्वावलोकनं प्रसिद्धम्। पूर्वघटनास्मरणात् वाष्पपातः॥

नयपराक्रमशालिनो राज्याधिपस्य स्वस्वामिनो दुर्दैवेन समुत्पादितं तादृशं विपर्ययं स्मरन् तत्प्रतीकारचिन्ताकुलचेताः तदर्थमनुशोचन्नाह, वृष्णीनामिति।—नीतिः दण्डनीतिः, विक्रमः शौर्य्यं, गुणाः सन्धिविग्रहादयः, तेषां व्यापारैः यथायथं प्रयोगैः, शान्ताः शमिताः, [ "वा दान्तशान्त—" ( ७।२।२७ पा० ) इति णिजन्तशमेर्निष्ठान्तः पाक्षिकः निपातः ] द्विषः शत्रवः यैः तादृशानां, वृष्णीनां यदूनामिव, नन्दानां पुत्राष्टकसहितयोगानन्दस्य, विपुले महति अखिले वा, कुले अकरुणया अननुकूलया, नियत्या दैवेन, क्षयं विनाशं, नीते गमिते सति, चिन्तावेशसमाकुलेन कथमापदुद्धारः स्यादित्येवं चिन्ताप्रसक्तिव्याकुलेन, मनसा रात्रिन्दिवं [ रात्रौ च दिवा च "अचतुरविचतुर—" ( ५।४।७७ पा० ) इत्यादिना निपातः ) जाग्रतः चिन्ताबाहुल्यात् अनिद्रामनुभवतः इत्यर्थः, मम सैव नन्देषु जीवत्सु यादृशी तादृश्येव, इयं चिन्ता कल्पितविषयावलम्बनेन तद्विषयसङ्कल्पविकल्पयोर्जायमाना भावना, भित्तिं चित्रलेखनाधारविशेषं, विना चित्रकर्मरचना विचित्रपौरुषव्यापारः, वर्त्तते; अनवरता चिन्ता निराधारा चेत्यर्थः। चिन्तया विविधविषयिणी कल्पना आविर्भवति, परं प्रकृतस्थानं न प्राप्नोति; स्वामिनो विनैव मुधा व्यापृते इति खेदः। [ अत्र नीतिविक्रमगुणप्रयोगशमितशत्रूणां वृष्णीनामिव नन्दानामित्यंशेनोपमाऽनुप्राणितः रात्रिन्दिवं चिन्ताऽन्वितस्य भावनाकल्पितविषयसङ्कल्पविकल्पमयी चित्रकर्मरचना चित्रलेखनकुड्याद्याधारं विना वर्त्तते इति आधारं विना आधेयस्थापनात् अनाधाराधेयस्थापनात्मकः विशेषालङ्कारः; तदुक्तं दर्पणे—"यदाधेयमनाधारमेकञ्चानेकगोचरम्। किञ्चित् प्रकुर्वतः कार्य्यमशक्यस्येतरस्य

अथवा—

नेदं विस्मृतभक्तिना न विषयव्यापारमूढात्मना
प्राणप्रच्युतिभीरुणा न च मया, नात्मप्रतिष्ठार्थिना ।
अत्यर्थं परदास्यमेत्य निपुणं नीतौ मनो दीयते
देवः स्वर्गगतोऽपि शात्रववधेनाराधितः स्यादिति ॥ ५ ॥

---

वा । कार्य्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः ॥” इति ; स च “सैव चित्रकर्मरचना” इति व्यस्तरूपकेण सङ्कीर्य्यते ]। शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

स्वामिभक्त्युत्कर्षार्थं स्वस्य नीतिप्रयोगफलं दर्शयितुमाह, नेदमिति ।—परदास्यं पराधीनताम्, एत्य प्राप्य, आश्रित्य इत्यर्थः, मया नीतौ यत् मनः अत्यर्थम् अतीव, दीयते, इदं नीतौ मनोदानं, विस्मृतभक्तिना न, स्वाम्यनुरागं आरतैव दीयते इत्यर्थः ; तन्मरणे स्वामिगुणविस्मरणे नीतौ मनोदानासम्भवादेवमुक्तम् । [ “विस्मृतभक्तिना” इत्यत्र विस्मृता भक्तिः येन इति विग्रहे—“स्त्रियाः पुंवत्—” (६।३।३४ पा०) इति सूत्रेण पुंवद्भावो दुर्घटः, तत्र “—अपूरणीप्रियादिषु” इति निषेधात् भक्तिशब्दस्य प्रियादिषु पाठात् । ततः “दृढभक्तिरित्येवमादिषु स्त्रीपूर्वपदस्य अविवक्षितत्वात् सिद्धम् इति समाधेयम्” इति काशिकावचनात्, “दृढं भक्तिः यस्य स दृढभक्तिः” इति सिद्धान्तकौमुद्युक्तेः “विस्मृतं भक्तिः येन” इति दृढभक्तिवत् नपुंसकपूर्वपदो बहुव्रीहिः इति समाधेयम् ; तेन “अतो दृढं भक्तिः अस्य इति नपुंसकपूर्वपदो बहुव्रीहिः” इति नव्यव्याख्यानं सङ्गच्छते । न्यासकारोऽपि एवमेव अनुमनुते । वृत्तिकारस्तु—“दीर्घनिवृत्तिमात्रपरो दृढभक्तिशब्दो लिङ्गविशेषस्य अनुपकारत्वात् स्त्रीत्वमविवक्षितमेव” इत्याह । भोजराजस्तु—“कर्मसाधनस्यैव भक्तिशब्दस्य प्रियादिषु पाठात् 'भवानी-भक्तिः' इत्यादौ कर्मसाधनत्वात् पुंवद्भावप्रतिषेधः, 'दृढभक्तिः' इत्यादौ भावसाधनत्वात् पुंवद्भावसिद्धिः पूर्वपदस्य” इत्युक्तवान् । तेन भावविहिते भक्तिशब्दे पुंवद्भावनिषेधो न स्यात् इति विभावनीयम् ]। अनुरक्तस्यापि अकार्य्यज्ञस्य कार्य्यसिद्धेरभावः, अतः तदभावं आत्मनि दर्शयन्नाह, न विषयेति ।—विषयव्यापारमूढात्मना न, विषय-व्यापारे यथावत् सामादिप्रयोगे, मूढः अनभिज्ञः, आत्मा अन्तःकरणं यस्य तादृशेन, न, सामादिप्रयोगं यथायथं जानता एवेत्यर्थः, तथाभूतस्यापि भीरुत्वे न कार्य्यसिद्धिः, अतः तदभावमपि आत्मनि दर्शयन्नाह, न प्राणेति ।—प्राणप्रच्युतिः प्राणनाशः, तस्याः भीरुणा शङ्कितेन, न, अपि तु निर्भीकेणैव इदं मनो दीयते इत्यर्थः ; तत्

[ आकाशमवलोकयन् सासम् ] । भगवति कमलालये ! भृशम् अगुणज्ञाऽसि । कुतः ?—

आनन्दहेतुमपि देवमपास्य नन्दं
सक्ताऽसि किं कथय वैरिणि मौर्य्यपुत्रे ? ।
दानाम्बुराजिरिव गन्धगजस्य नाशे
तत्रैव किं न चपले ! प्रलयं गताऽसि ? ॥ ६ ॥

---

किमात्मनः यशोलाभाय मनो दीयते ? इत्याह, नेति ।—नात्मप्रतिष्ठार्थिना आत्मयशोवाञ्छया न । किं तर्हि ? इत्यत आह, देव इति ।—देवः नन्दः, योगानन्द इत्यर्थः, स्वर्गगतोऽपि शास्त्रबधेन शत्रुनाशेन, [ भावनिर्देशः ] तदीयरिपूणां मया नाशनेन इति यावत्, आराधितः तत्प्रार्थितस्य मया सम्पादनात् आप्यायितः, स्यात्, इति अस्मादेव कारणात्, मनो दीयते इत्यर्थः । [ इदं तत्त्वानुकीर्त्तनं मार्गः । अत्र स्वीयपराधीनतायामपि परलोकप्राप्तप्रभोराराधनायैव शत्रुवधरूपाद्वस्तुनः हेतोः नैतिकसन्दर्भे अत्यन्तमनोनियोगप्रकाशनम्, अप्रश्नपूर्वकतादृशविश्रुतभाक्तत्वात्म-प्रतिष्ठालाभप्रमुखशब्दहेतुचतुष्टयनिराकरणेन परिसंख्याऽलङ्कारः । तदुक्तं दर्पणे—"प्रश्नादप्रश्नतो वाऽपि कथितात् वस्तुनो भवेत् । तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ॥ परिसंख्या—" इति ] । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

"लक्ष्मीः पुंयोगमाशंसुः कुलटेव कुतूहलात् । अन्तिकेऽपि स्थिता पत्युः छलेनान्यं निरीक्षते ॥" इति न्यायमवलम्ब्य अङ्गीकृतपुरुषपरित्यागरूपं लक्ष्मीदोषं प्रकटयन् आह, आनन्दहेतुमिति ।—चपले ! कुलटावत् हे चञ्चलस्वभावे ! लक्ष्मि ! [ "चपले" इति सम्बोधनेन कार्य्यविमूढता श्रियः सूचिता ] । आनन्दहेतुं रतिनिदानम् अपि; अतः परित्यागासम्भवः इति भावः, देवं राजानं, न तु निकृष्टमित्यर्थः, अतः श्रियाः अपरित्यागासम्भवः इति भावः, नन्दम् अपास्य विहाय, किं कथं, वैरिणि तद्विपक्षे, मौर्य्यपुत्रे दुष्कुलजे, अतः तत्रानुरागानौचित्यमिति भावः, सक्ताऽसि ? अनुरागिणी भवसि ? इति कथय । गन्धगजस्य "यस्य गन्धं समाघ्राय पलायन्तेऽपरे गजाः" तद्गुणरूपस्य हस्तिनः, नाशे तादृशे हस्तिनि नष्टे सति इत्यर्थः, ( "कदाचिद्विहितो भावी कर्त्तव्यतया प्रकाशते" इत्युक्तेः ) तदीया दानाम्बुराजिः मदजलधारा इव, तत्रैव नन्दे अपि च, तेन सह इत्यर्थः, किं कथं, प्रलयं विलयं, न गताऽसि ? अतापि लक्ष्मीः अनुगच्छति ; तादृशं गुणशालिनं पतिं विहाय अनुपगतेऽपपुरुषे तत्राश्रयणमनुचित-

अपि च, अनभिजाते! (भ)—

पृथिव्यां किं दग्धाः प्रथितकुलजा भूमिपतयः,
पतिं पापे! मौर्य्यं यदसि कुलहीनं वृतवती?।
प्रकृत्या वा काशप्रभवकुसुमप्रान्तचपला,
पुरन्ध्रीणां प्रज्ञा पुरुषगुणविज्ञानविमुखी॥ ७॥

मिति अकृतज्ञाश्रयणापेक्षया ते मरणमेव वरमिति भावः। [अत्र श्रियो दानाम्बुधाभिसदृशतयोपनिबद्धत्वात् उपमाऽलङ्कारः, आनन्दहेतुमित्यादिविशेषणपदानां साभिप्रायत्वप्रतिपादनात् जायमानेन परिकरालङ्कारेण संसृज्यते, "उक्तैर्विशेषणैः साभि-प्रायैः परिकरो मतः" इति दर्पणलक्षणात्]। वसन्ततिलकं वृत्तम्॥ ६॥

(भ) अनभिजाते!—असद्वंशजे! अकुलीने इति यावत्, "लक्ष्मीर्यादोनिधेर्यादो नाऽदो यादोचितं वचः। बिभेति धीवरेभ्यो हि जड़े(ले)ष्वेव निमज्जति॥" इति वचनात्; दुष्कुलजातत्वेनास्याः असदाचरणे प्रवृत्तिरिति भावः। [दुःखावेशेन "अनभिजाते!" इति भर्त्सनम्]।

नन्दराजपरित्यागेन मौर्य्यसमाश्रयणात् श्रिया अविनीतत्वमवबोधयन्नाह, पृथिव्यामिति।—पापे! हे पापाचरणे लक्ष्मि! पृथिव्यां प्रथितकुलजाः विख्यातकुलोद्भवाः, भूमिपतयः राजानः, किं दग्धाः? भस्मीभूताः? नैवेत्यर्थः, यत् यस्मात्, कुलहीनम् अकुलीनं, मौर्य्यं पतिं वृतवती असि? महाकुलीनासद्भावे दुष्कुलाश्रयणं सम्भवति, परं सत्सु महाकुलीनेषु तदनाश्रयणमतीव गर्हितमिति भावः। रमणीनामेवं स्वभावतया नात्र ते कोऽपि दोषः इत्याह, प्रकृत्येति।—वा अथवा, पुरन्ध्रीणां स्त्रीणां, काशप्रभवकुसुमप्रान्तचपला काशः प्रभवो यस्य तादृशं यत् कुसुमं काशपुष्पमित्यर्थः, तस्य प्रान्तः अग्रं, तद्वत् चपला चञ्चला, अव्यवस्थितेत्यर्थः; ["आकाशप्रभवकुसुमप्रान्तचपला" इत्यपपाठः, तस्य मिथ्यात्वात् उपमानासम्भवात्] प्रज्ञा बुद्धिः, प्रकृत्या स्वभावेन, पुरुषस्य गुणविज्ञाने गुणानां विशेषतो विवेचने, विमुखी, भवतीति शेषः; सहसा गुणविज्ञानस्य असम्भवात् धैर्य्यमत्रापेक्षते, न तु चापल्यमिति भावः। [अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासालङ्कारः "प्रान्तचपला" इति उपमया संसृज्यते। अत्र काशकुसुममिति वक्तव्ये "काशप्रभवकुसुमम्" इति अधिकस्य प्रभवशब्दस्य कथनात् अधिकपदतादोषः। "भगवति कमलालये!" इत्याद्यारभ्य राक्षसस्य वितर्कप्रतिपादनं वाक्यं रूपं नाम अङ्गम्]। शिखरिणी वृत्तं—"रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात्। अस्य प्रचारसङ्ख्या तु ४९२१० इति ज्ञेया

अपि च, अविनीते! तदहमाश्रयोन्मूलनेन एव त्वामकामां करोमि। (ञ) [विचिन्त्य]। मया तावत् सुहृत्तमस्य चन्दनदासस्य गृहे गृहजनं निक्षिप्य नगरान्निर्गच्छता न्याय्यमनुष्ठितम्। किं कारणमिति? कुसुमपुराभियोगं प्रति अनुदासीनो राक्षस इति तत्रस्थानाम् अस्माभिः सह एककार्य्याणां देवपादोपजीविनां नोद्यमः शिथिलीभविष्यतीति। चन्द्रगुप्तशरीरम् अभिद्रोग्धुम् अस्मत्प्रयुक्तानां तीक्ष्णरसदायिनाम् उपसङ्ग्रहार्थं, परकृत्योपजापार्थञ्च महता कोषसञ्चयेन स्थापितः शकटदासः। प्रतिक्षणम् अरातिवृत्तान्तोपलब्धये, तत्संहतिभेदाय च व्यापारिताः (ट) सुहृदो जीवसिद्धिप्रभृतयः, तत् किमत्र बहुना?—

इष्टात्मजः सपदि सान्वय एव देवः
शार्दूलपोतमिव यं परिपुष्य नष्टः।

---

(ञ) आश्रयोन्मूलनेन—चन्द्रगुप्तसमुन्मूल्येत्यर्थः। अकामां—विफलमनोरथाम।

(ट) अनुदासीनः,—आग्रहान्वितः, सचिन्तः इत्यर्थः। [उत्+आस+शानच्, "ईदासः" (७।२।८३ पा०) इति आस-धातोः परस्य आनस्य ईदादेशः नञ्-समासश्च]। तत्रस्थानां—तत्स्थाने वर्त्तमानानां, ["तत्पुरुषे कृति बहुलम्" (६।३।१४ पा०) इति सप्तम्या अलुक्]। चन्द्रगुप्तेति।—[अत्र "क्रुधद्रुहोरुपसृष्टयोः कर्म" (१।४।३८ पा०) इति सम्प्रदानस्य कर्मत्वम्]। परकृत्योपजापार्थं—शत्रुकार्य्यभङ्गार्थेम, अथवा—परेषां—शत्रूणां, कृत्यमेव कृत्यं—कार्य्यं येषां तादृशानां शत्रुकार्य्यकारिणाम, उपजापार्थं—भेदार्थं, प्रचुरधनादिदानेन ते पुरुषा यथा शत्रुभ्यो भिद्येरन् तथाऽऽचरणार्थं, मनोभङ्गकरणार्थमित्यर्थः। कोषसञ्चयेन—धनराशिना। तत्संहतिभेदाय—तेषाम्—अरातीनां, संहतिः,—सम्मेलनं, तस्या भेदः भङ्गः तस्मै, [तत्संहतयो भद्रभटादयः जीवसिद्धिना भेदिताः इत्यस्य मर्म्मः। इदं प्रकृतोत्कर्षाभिधानम् उदाहरणं, राक्षसेन प्रकृतकार्य्यस्य उत्कर्षाभिधानात्] सम्मेलने शत्रूणां दुर्जयता, भेदे सुजयतेति भावः। व्यापारिताः,—नियुक्ताः।

अनुद्धा मौर्य्यविनाशे दृढसङ्कल्पमुपपादयन्नाह, इष्टात्मज इति।—इष्टः प्रियः

तस्यैव बुद्धिविशिखेन भिनद्मि मर्म
वर्मीभवेद् यदि न दैवमदृश्यमानम् ॥ ८ ॥

[ ततः प्रविशति कञ्चुकी ]। (ठ)

कञ्चु।—

कामं नन्दमिव प्रमथ्य जरया चाणक्यनीत्या यथा
धर्मो मौर्य्य इव क्रमेण नगरे नीतः प्रतिष्ठां मयि।
तं सम्प्रत्युपचीयमानमपि मे लब्धान्तरः सेवया
लोभो राक्षसवज्जयाय यतते, जेतुं न शक्नोति च ॥ ९ ॥

---

आत्मजः यस्य सः, देवः नन्दः, सान्वयः स्वोत्पादितैरष्टाभिः पुत्रैः सहित एव इत्यर्थः, शार्दूलपोतं व्याघ्रशावकमिव, ( स्वपोषकघातकत्वेनायं दृष्टान्तः ) यं चन्द्रगुप्तं, दासीगर्भजमपि आत्मजबुद्ध्यैव परिपुष्य प्रतिपाल्य, सपदि सद्यः, नष्टः विनाशं गतः, अहं बुद्धिविशिखेन प्रज्ञारूपशरेण, तस्य मौर्य्यस्यैव, मर्म जीवस्थानं, (यस्मिन्नाहते मृत्युर्भवति तत् स्थानं मर्म ) भिनद्मि द्विधा करोमि ; यदि एतत् दैवं भाग्यं, चन्द्रगुप्तशुभादृष्टमित्यर्थः, अदृश्यमानम् अदृश्यमानं सत्, [ "अदृश्यमानम्" इति पाठे—दैवं दृश्यं चेत् तदपि प्रतिकर्त्तुं शक्नुयाम् इति भावः ] तस्य न वर्मीभवेत् कवचरूपं न स्यात्, रक्षकं न भवेदित्यर्थः ; [ अवर्म वर्म सम्पद्यमानं भवेत् इति अभूततद्भावे च्विः ] तथा च तस्य भाग्यवर्मैव मद्बुद्धिशरभेदनात् रक्षणोपायः, नान्य इति भावः। [ अत्र उपमारूपकयोः संसृष्टिः। "मया तावत्" इत्यारभ्य "दैवमदृश्यमानम्" इत्यन्तेन राक्षसस्य उपायापायशङ्के दर्शिते ]। वसन्ततिलकं वृत्तम् ॥ ८ ॥

(ठ) कञ्चुकी—अन्तःपुरद्वाररक्षकपुरुषविशेषः। "अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥" इति दर्पणकृतो लक्षणात्।

जरायां स्वकीयलोभस्य धर्मजयेच्छादृष्टान्तप्रसङ्गेन चाणक्यनीतिकौशलेन मौर्य्यप्रतिष्ठापितायाः अपि राजलक्ष्म्याः जयाय प्रयतमानस्य विशिष्टनीतिसमन्वितस्यापि राक्षसस्य असामर्थ्यं प्रकाशयितुमाह, काममित्यादि।—यथा चाणक्यनीत्या नन्दं प्रमथ्य कुसुमपुरे क्रमेण मौर्य्यः प्रतिष्ठापितः, तथा जरया वार्द्धकेन, कामं विषयाभिलाषं, प्रमथ्य सम्मर्द्य, मयि क्रमेण धर्मः प्रतिष्ठापितः, वार्द्धके विषयवैराग्ये कामं विहाय धर्ममेव सेवितुमुत्सहे इति भावः ; सम्प्रति मलयकेतुसेवया लब्धान्तरः लब्धावसरः, राक्षसः यथा

[ इति ]। अयममात्यराक्षसः। [ परिक्रम्य उपसृत्य च ]। अमात्य! स्वस्ति भवते।

राच। आर्य्ये जाजले! अभिवादये। प्रियंवदक! आसनम् अत्रभवत उपनय।

प्रियं। एदं आसणं उपविसदु अज्जो। *

कञ्चु। [ आसने उपविश्य ]। अमात्य! कुमारो मलयकेतुः अमात्यं विज्ञापयति—"चिरात् प्रभृति आर्य्यः परित्यक्तोचित-शरीरसंस्कार इति पीड्यते मे हृदयम्। यद्यपि स्वामिगुणाः सहसा न शक्यन्ते विस्मर्त्तुं, (ड) तथाऽपि मद्विज्ञापनां मानयितुम् अर्हति आर्य्यः।" [ इत्याभरणानि दर्शयित्वा ]। अमात्य! इमानि आभरणानि कुमारेण स्वशरीरादवतार्य्य प्रेषितानि, धारयितुम् अर्हति आर्य्यः।

---

* इदम् आसनम् उपविशतु आर्य्यः।

---

मौर्य्यजयाय यतते, किन्तु तम उपभोग्यमानं वर्द्धिष्णुम् अपि, मौर्य्यं जेतुं न शक्नोति चाणक्यनीतेः प्राबल्यात् न प्रत्यति, तदत् सेवया राजकुलस्यैश्वर्यं, कृष्णावसरो मे लोभः, धर्मस्य जयाय यतते, वर्द्धिष्णुं तं धर्मं जेतुं च न शक्नोति ; जरायां धर्मबाहुल्यात् प्रबलमपि लोभो विषयवैराग्यात् न धर्मं जेतुं शक्नोतीति भावः। [ "उपभोग्यमानम्" इत्येव पाठः समीचीनः "अधर्मोऽप्यभूत" ( १।४।९० पा० ) इति कर्मप्रवचनीयेनानुना योगे द्वितीयायाः साधुत्वात्। "अपि" इति पाठे तु जेतुमित्यस्य कर्मणि द्वितीया, तथात्वे व्यवहितान्वयत्वात् क्लिष्टत्वदोषः स्वीकरणीय इति। अनेन कञ्चुकिनिर्वेदेन राक्षसोद्यमस्य चाणक्यनीत्या भावी उपमर्दः सूचितः। अत "मौर्य्य इव" तथा "राक्षसवत्" इति साहश्यप्रतिपादनादुपमा, तथा प्रस्तुते कञ्चुकिलोभे अप्रस्तुतभटस्यवहारस्य अधिकारादिकस्य समारोपणात् समासोक्तिश्च ]। शार्दूलविक्रीडितं वृत्तम्॥ ८॥

(ड) उचितसंस्कारत्यागे हेतुं वर्णयन्नाह, स्वामिगुणा इति।—स्वामिनः,—नन्दस्य, ये गुणाः,—दयादाक्षिण्यादयः ते, सहसा विस्मर्त्तुं न शक्यन्ते, तत्कारणेन च तदीयदुःखमात्मनि आरोप्य देहसंस्कारो नैव क्रियते, दुःखितस्य भूषायां श्रद्धाभावादिति भावः।

राच। आर्य्य ! जाजले ! विज्ञाप्यतां मद्वचनात् कुमारः, "विस्मृता मया स्वामिगुणाः तव गुणपक्षपातिना। किन्तु—

न तावन्निर्वीर्य्यैः परपरिभवाक्रान्तिकृपणै-
र्वहाम्यङ्गैरेभिः प्रतनुमपि संस्काररचनाम्।
न यावन्निःशेषक्षयितरिपुचक्रस्य निहितं
सुगाङ्गे हेमाङ्कं नृवर ! तव सिंहासनमिदम्" ॥ १० ॥

कञ्चु। अमात्ये त्वयि नेतरि सुलभमेतत् कुमारस्य, तत् प्रतिमान्यतां कुमारस्य प्रथमः प्रणयः। (ढ)

राच। आर्य्य ! कुमार इव अनतिक्रमणीयवचनो भवानपि, तदनुष्ठीयते कुमारस्याज्ञा।

कञ्चु। [ नाट्येन भूषणानि परिधाप्य ]। स्वस्ति भवते, साधयाम्यहम्। (ण)

---

स्वस्य स्वामिभक्तिं परपरिभवेण स्वराज्यप्रतिष्ठानुरागाधिक्यञ्च दर्शयितुमाह, न तावदिति।—नृवर ! हे नरश्रेष्ठ ! परपरिभवाक्रान्तिकृपणैः परेषां परिभवः परपरिभवः तस्य आक्रान्त्याम् आक्रमणे कृपणैः दीनैः, अत एव निर्वीर्य्यैः वीर्य्यप्रकटनरहितैः, एभिः अङ्गैः तावत्कालं प्रतनुमपि स्वल्पामपि, संस्काररचनां देहमार्जनालङ्कारधारणादिरूपां, न वहामि न करोमि, यावत् निःशेषं यथा तथा क्षयितं नाशितं, रिपुचक्रं शत्रुसमूहो यस्य तादृशस्य, तव हेमाङ्कं स्वर्णालङ्कृतमित्यर्थः, इदम् [ इदमिति बुद्धिस्थपरामर्शः ] सिंहासनं सुगाङ्गे तदाख्ये पाटलिपुत्रनगरस्थप्रासादे, सुष्ठु गाङ्गं गङ्गाजलं यत्र तादृशे नगरे पाटलिपुत्रे इति वा, न निहितं स्थापितं, भवेदिति शेषः। शिखरिणी वृत्तम् ॥ १० ॥

(ढ) प्रतिमान्यतां—प्रतिपाल्यताम्। प्रणयः,—आभरणधारणरूपा प्रार्थना।

(ण) साधयाम्यहं—नाटके गच्छामीत्यत्र साधयामि इति प्रयुज्यते, "प्रायेण युञ्जकः साधिर्गमेः स्थाने प्रयुज्यते" इति दर्पणोक्तेः; अहं कार्य्यसाधनार्थं गच्छामि इत्यर्थः। इदं प्रस्तुतोपयोगि समाधानवचनं सङ्कुरः; प्रस्तुतस्य राक्षसस्य ग्रहणस्योपयोगित्वात्। यद्वा—प्रस्तुतस्य चाणक्योपायरूपस्य बीजस्योपयोगि इदं भूषणदानं समाधानवचनम्, अनुपदमेव राक्षसेन सिद्धार्थकाय पारितोषिकतया दास्यमानानाम् एषामेव भूषणानां [illegible] कूटविधौ उपयोज्यमानत्वात्।

राक्ष। आर्य्य! अभिवादये। [ कञ्चुकी निष्क्रान्तः ]। प्रियंवदक! ज्ञायतां, कोऽयमस्मद्दर्शनार्थी द्वारि तिष्ठति।

प्रियं। जं अज्जो आणावेदि त्ति। [ परिक्रम्य आहितुण्डिकं दृष्ट्वा ]। णं अज्ज! को तुमं? *

आहि। भद्द! अहं क्खु आहितुंडिओ जिण्णविसो णाम, इच्छामि अमच्चरक्खसस्स पुरदो सप्पेहिं खेलिदुं। †

प्रियं। चिट्ठ, जाव अमच्चस्स णिवेदेमि। [ राक्षसमुपसृत्य ]। अज्ज! एसो क्खु सप्पोवजीवी इच्छदि सप्पेहिं अमच्चस्स पुरदो खेलिदुं। ‡

राक्ष। [ वामाक्षिस्पन्दनं सूचयित्वा आत्मगतम् ]। कथं, प्रथममेव सर्पदर्शनम्!! (त) [ प्रकाशम् ]। प्रियंवदक! न नः कुतूहलमस्ति सर्पदर्शने; तत् परितोष्य विसर्जयैनम्।

प्रियं। जं अज्जो आणावेदि। [ परिक्रम्य आहितुण्डिकमुपसृत्य ]। भद्द! एसो क्खु दे अमच्चो अदंसणेण प्पसादं करेदि, ण उण दंसणेण। §

* यदार्य्य आज्ञापयतीति। नन्वार्य्य! कस्त्वम्?

† भद्र! अहं खल्वाहितुण्डिको जीर्णविषो नाम, इच्छाम्यमात्यराक्षसस्य पुरतः सर्पैः खेलितुम्।

‡ तिष्ठ, यावदमात्यस्य निवेदयामि। आर्य्य! एष खलु सर्पोपजीवी इच्छति सर्पैः अमात्यस्य पुरतः खेलितुम्।

§ यदार्य्य आज्ञापयति। भद्र! एष खलु ते अमात्योऽदर्शनेन प्रसादं करोति, न पुनर्दर्शनेन।

(त) कथं प्रथममेव सर्पदर्शनमिति महाकपः सम्भ्रमः।

आहि। भद्द ! विख्रवेहि मम वअणेण अमच्चं—"ण केवलं अहं सप्पोवजोवी, पाउअकवी (च) क्खु अहं ; ता जइ मे दंसणेण अमच्चो प्पसादं ण करेदि, ता एदं पि पत्तअं वाचेदुं प्पसोददु" त्ति। * [पत्रमर्पयति]।

प्रियं। [पत्रं गृहीत्वा राक्षसमुपसृत्य]। अमच्च ! एसो क्खु आहि-तुंडिओ विखवेदि—'ण केवलं अहं सप्पोवजोवी, पाउअकवी क्खु अहं, ता जइ मे दंसणेण अमच्चो प्पसादं ण करेदि, ता एदं पि पत्तअं वाचेदुं प्पसोददु' त्ति। †

राच। [पत्रं गृहीत्वा वाचयति]।—

पाऊण णिरवसेसं कुसुमरसं अत्तणो कुसलदाए।
जं उग्गिरेइ भमरो तं अस्साणं कुणइ कज्जं ‡॥ ११ ॥

---

* भद्र ! विज्ञापय मम वचनेनामात्यं—"न केवलमहं सर्पोपजीवी, प्राकृतकविः खल्वहम् ; तस्मात् यदि मे दर्शनेन अमात्यः प्रसादं न करोति, तदा एतदपि पत्रकं वाचयितुं प्रसीदतु" इति।

† अमात्य ! एष खलु आहितुण्डिको विज्ञापयति—'न केवलमहं सर्पोप-जीवी, प्राकृतकविः खलु अहं, तस्मात् यदि मे दर्शनेन अमात्यः प्रसादं न करोति, तदा एतदपि पत्रकं वाचयितुं प्रसीदतु' इति।

‡ पीत्वा निरवशेषं कुसुमरसमात्मनः कुशलतया।
यदुद्गिरति भ्रमरस्तदन्येषां करोति कार्य्यम् ॥

---

(च) प्राकृतकविः,—खतःविज्ञानवान्, प्राकृतभाषाभिज्ञः काव्यकर्त्ता वा। [प्रकृतिपरिज्ञाने यस्त्वया वियुक्तः सोऽहमिति च ध्वन्यते]।

अवन्निमुक्तः प्रविविरइं, न पुनः भुजगोपजीवी, तद्गुणानीहि ते शुभदर्शनायेति अप्रस्तुतार्थलेखनमुखेन प्रतिपादयितुमाह, पीत्वेति।—आत्मनः कुशलतया नैपुण्येन, निरवशेषं समग्रं, कुसुमरसं कुसुमस्य पुष्पस्य, रसं मधु, [कुसुमस्य कुसुमपुरस्य, रसं वीर्य्यं, गूढरहस्यतत्त्वं वा, ज्ञात्वा इत्यपि सूच्यते] पीत्वा भ्रमरः मधुकरः, सर्व्वत्रगामित्वात् भ्रमरधर्मांचरश्च, यत् उद्गिरति, तत् उद्गीर्य्यमाणं मधु, उपकारित्वात् परवाक्यम्, अन्येषां सर्व्वेषां, परप्रेरकस्य च, कार्य्यं देवपैत्रादिकं सन्धिविग्रहादिकञ्च कर्म, करोति निष्पादयति। [एवमप्रस्तुतात् भ्रमरस्य स्वनैपुण्येन समग्रकुसुमरसपाननिमित्तक-

राक्ष। [आत्मगतम्]। अये! कुसुमपुरवृत्तान्तज्ञः (द) अहं भवत्प्रणिधिश्चेति गाथाऽर्थः। आः!! कार्य्यव्यग्रत्वात् (ध) मनसः, प्रभूतत्वाच्च प्रणिधीनां विस्मृतम्, इदानीं स्मृतिरुपलब्धा। व्यक्तम् आहितुण्डिकच्छद्मना (न) कुसुमपुरात् आगतेन विराधगुप्तेन अनेन भवितव्यम्। [प्रकाशम्]। प्रियंवदक! प्रवेशय एनं, सुकविः एषः, श्रोतव्यम् अस्मात् सुभाषितम्।

प्रियं। जं अज्जो आणवेदि त्ति। [आहितुण्डिकमुपसृत्य]। उवसप्पदु अज्जो। *

आहि। [नाट्येन उपसृत्य अवलोक्य च संस्कृतमाश्रित्य स्वगतम्]। अये! अयममात्यराक्षसः तिष्ठति। स एषः,—

वामां बाहुलतां निवेश्य शिथिलं कण्ठे विवृत्तानना,
स्कन्धे दक्षिणया बलान्निहितयाऽप्यङ्के पतन्त्या मुहुः।

---

* यदार्य्य आज्ञापयति। उपसर्पतु आर्य्यः।

---

मधूद्गिरत्वात्, प्रस्तुतस्य स्वनैपुण्येन कुसुमपुरवृत्तान्तवेदिनो विराधस्य तद्वार्त्तोद्गिरत्वप्रतीतेः अप्रस्तुतप्रशंसाऽलङ्कारः; तेन च यथा भ्रमरस्य निरतिशयमधुपानादुद्गिरत्वाभिलाषः, तथा कुसुमपुरवृत्तान्तस्य बहुत्वतया सङ्गृहीतत्वात् तद्भाषणे ममातितरामभिलाष इति व्यज्यते]। आर्य्या वृत्तम्॥ ११॥

(द) कुसुमपुरवृत्तान्तज्ञः इति।—[इयं सञ्चिन्तितार्थप्राप्तिः क्रमः; पूर्वं द्वारि कस्तिष्ठति इति कुसुमपुरवृत्तान्तश्रवणाय समागतस्य सञ्चिन्तितस्य प्राप्तेः]।

(ध) कार्य्यव्यग्रत्वात् इति।—[इदम् इष्टजनानुसन्धानरूपसमाधिबलम् अङ्गम्]।

(न) व्यक्तमाहितुण्डिकेति।—[इदं लिङ्गादभ्यूहनम् अनुमानमङ्गम्]।

मौर्य्यस्य अचिरेण राज्याभिषेके संवृत्तेऽपि राक्षसप्रयत्नतः पुनः भ्रंशभयेनैव राजलक्ष्मीः सम्पूर्णतया नाद्यापि तमाश्रयतीति दर्शयन्नाह, वामामित्यादि।—श्रीः लक्ष्मीः, वामां दक्षिणेतरां, (स्त्रीणां पतिवामभागे शयनविधानात् प्रथमं वामभुजस्यैव पत्युः कण्ठे दानसम्भवादिति भावः) बाहुलतां भुजवल्लीं, (तनुत्वात् दीर्घत्वात् वेष्टनयोग्यत्वाच्च बाहौ लतात्वारोपः) कण्ठे शिथिलं, न तु गाढ़मित्यर्थः, यथा स्यात्

गाढालिङ्गनसङ्गपीडितमुखं यस्योद्यमाशङ्किनी,
मौर्य्यस्योरसि नाधुनाऽपि कुरुते वामेतरं श्रीः स्तनम् ॥१२॥

[प्रकाशम्]। जअदु जअदु अमच्चो। *

राक्ष। [विलोक्य]। अये विराध !—" (प) [इत्यर्द्धोक्ते विरूढ़-स्मृतिः]। (फ) प्रियंवदक ! भुजङ्गैः इदानीं विनोदयामः, तत् विश्रम्यतां परिजनेन, त्वमपि स्वमधिकारम् अशून्यं कुरु। (ब)

* जयति जयति अमात्यः।

तथा निवेश्य आसज्य, यस्य राक्षसस्य, उद्यमाशङ्किनी उद्योगभीता, [सापेक्षत्वेऽपि गमकत्वात् समासः] अत एव विवृत्तानना चकितस्य पराङ्मुख्य दर्शनोचितत्वात् पराङ्मुखी सती, बलात् प्रसह्य, स्कन्धे स्वकण्ठे, निहितया भयेन समारोपणात् पत्यैव स्वयम् अर्पितया अपि, मुहुः पुनः पुनः, अङ्के क्रोड़देशे, पतन्त्या पतनेन स्खलन्त्या, दक्षिणया वामेतरया, बाहुलतयेति शेषः, हेतुभूतया तदर्पणेनैव गाढ़ालिङ्गनसम्भवः इति भावः; यत् गाढ़ालिङ्गनं दृढ़ालिङ्गनं, तस्य सङ्गेन संश्लेषेण, पीड़ितं मुखं यत्र तत् चिपिटीकृतचूचुकम् इत्यर्थः, यथा स्यात् तथा, अद्यापि अधुनाऽपि, मौर्य्यस्य चन्द्रगुप्तस्य, उरसि वक्षसि, वामेतरं दक्षिणं, स्तनं न कुरुते स्थापयति, उभयबाहुभ्यां दृढं समालिङ्ग्य न शेते इत्यर्थः, भीतायाः गाढ़ालिङ्गना-सम्भवादिति भावः। [एतेनाद्यापि चन्द्रगुप्ते राज्यश्रीर्भृशं नानुरक्ता, तत्र राक्षसप्रयत्नात् पुनराकर्षणभयमेव कारणमिति ध्वनितम्। अनेदानीमपि मौर्य्ये नातिस्थिरायां प्रत्युत राक्षसप्रयत्नेन पुनश्चलितायां राजलक्ष्म्यां प्रस्तुतायाम् अप्रस्तुतायाः प्रतिनायक-भीतायाः कस्याश्चित् नायिकायाः भयचकितत्वागाढ़ालिङ्गनादिकार्य्यांऽऽरोपात् समासोक्तिरलङ्कारः, स च उद्यमाशङ्किनीति पदार्थहेतुकेन काव्यलिङ्गेन सङ्कीर्णः]। "स एषः" इति गद्यस्थस्य पद्यस्थेन यस्येत्यनेन अन्वयः। शार्दूलविक्रीड़ितं वृत्तम् ॥१२॥

(प) "अये विराध !" इति परिजनं प्रति रहस्यगोपनार्थमर्द्धोक्तिः।

(फ) विरूढ़स्मृतिः,—जातस्मरणः। [अत्र "अये विराध ! (इत्यर्द्धोक्ते) ननु प्ररूढ़श्मश्रुः" इति अमात्योक्तिरूपः पाठः एव साधीयान्; अत्रापि "अये विराध" इति परिजनं प्रति रहस्यगोपनार्थमर्द्धोक्तिः। "प्ररूढ़श्मश्रुः" इति उक्तवाक्यस्य अन्यथा-करणेन पूरणम्। विराधप्ररूढ़श्मश्रुरित्येकपदम्। विगता राधा येषाः, तद्रूपाणि प्ररूढ़ाणि श्मश्रूणि यस्य स इत्यर्थः]।

(ब) स्वाधिकारमशून्यमिति।—परप्रवेशमनदत्वा द्वारि अवहितस्तिष्ठेत्यर्थः।

प्रियं। जं अमच्चो आणवेदि त्ति। *

[ सपरिवारो (भ) निष्क्रान्तः ]।

राच। सखे! (म) विराधगुप्त! इदम् आसनम् आस्यताम्।

विरा। यत् आज्ञापयति अमात्य इति। [ नाट्येन उपविष्टः ]।

राच। [ सखेदं निर्वर्ण्य (य) ]। अहो! देवपादपद्मोपजीविनो जनस्य इयम् अवस्था। [ इति रोदिति ]।

विरा। अमात्य! अलं शोकेन, नातिचिरात् अमात्योऽस्मान् नूनं पुरातनीम् अवस्थाम् आरोपयिष्यति। (र)

राच। सखे! विराधगुप्त! वर्णय इदानीं कुसुमपुर-वृत्तान्तम्। (ल)

विरा। अमात्य! विस्तीर्णः कुसुमपुरवृत्तान्तः, तदाज्ञापय, कुतः प्रभृति कथयामि? (व)

राच। सखे! चन्द्रगुप्तस्य तावत् नगरप्रवेशात् प्रभृति अस्मत्प्रयुक्तैः तीक्ष्णरसदायिभिः किम् अनुष्ठितमिति आदितः श्रोतुमिच्छामि।

---

* यदमात्य आज्ञापयतीति।

---

आहितुण्डिकच्छद्मना प्रच्छादितया प्रविष्टस्य विराधगुप्तस्य प्रियंवदकसमीपे नामोच्चारणे मन्त्रप्रकाशनं स्यादित्याशङ्कितो तस्य गोपनाय प्रियंवदकं प्रति छलेन ततोऽपसारणमिति द्रष्टव्यम्।

(भ) सपरिवारः,—सपरिजनः।

(म) सखे!—अभिन्नहृदय! आदरातिशय्यप्रकटनार्थम् एवं सम्बोधनम्। "समप्राणः सखा मतः" इत्युक्तेः।

(य) निर्वर्ण्य—दृष्ट्वा, ( "निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः )।

(र) पुरातनीं—प्राचीनां, प्राक्तनीमित्यर्थः। आरोपयिष्यति—आरोहयिष्यति [ "रुहः पोऽन्यतरस्याम्" ( ७।३।४३ पा० ) इति हकारस्य पकारः ]।

(ल) सखे! वर्णय इति।—[ इयं व्यापिनी नाम पताका ]।

(व) कथयामि इति।—[ "लोडर्थलक्षणे च" ( ३।३।८ पा० ) इति लट् ]।

विरा। एष कथयामि। अस्ति तावत् शकयवनकिरातकाम्बोजपारसीकवाह्लीकप्रभृतिभिः चाणक्यमतिपरिगृहीतैः चन्द्रगुप्त-पर्वतेश्वरबलैः उदधिभिः इव प्रलयकालचलितसलिलसञ्चयैः समन्तात् उपरुद्धं (श) कुसुमपुरम्।

राक्ष। [शस्त्रमाकृष्य ससम्भ्रमम्]। मयि स्थिते कः कुसुमपुरम् उपरोत्स्यति !! प्रवीरक ! प्रवीरक ! (ष) क्षिप्रमिदानीम्—

प्राकारान् परितः शरासनधरैः क्षिप्रं परिक्षिप्यतां,
द्वारेषु द्विरदैः परद्विपघटाभेदक्षमैः स्थीयताम्।
मुक्त्वा मृत्युभयं प्रहर्त्तुमनसः शत्रोर्बले दुर्बले,
ते निर्यान्तु मया सहैकमनसो येषामभीष्टं यशः॥ १३॥

---

(श) अस्तीति।—[अत्र वाक्यार्थः कर्त्ता]। उपरुद्धं—सैन्यवेष्टितम्।

(ष) उपरोत्स्यति इति।—[अत्र "अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि" (३।३।१४५ पा०) इति भूते लृट्]। प्रवीरकः,—तदानीन्तनः सन्निहितोऽनुचरः।

इत्यकाण्डमाकर्ण्य श्रुतौ राक्षसस्योत्साहातिशयात् तत्कालोचितकार्य्यकरणाय अधिकारिणो नियोगं वर्णयति, प्राकारानिति।—प्राकारान् प्राचीराणि, परितः सर्वतः, ["अभितः परितः—"(वा०) इति परितः-शब्दयोगे द्वितीया] शरासनधरैः धानुष्कैः, [शरा अस्यन्ते क्षिप्यन्ते अनेनेति शरासनं धनुः तद्धरैः] क्षिप्रं चेपणीयम्, आयुधं वा अस्त्रं, परिक्षिप्यताम्। (तत्क्षेपणे हि शत्रूणां प्रवेशासम्भवात् तथोपदेशः बोध्यः)। [श्लोकेऽत्र क्षिप्रमिति पदं न क्रियाविशेषणं, तस्य मदाक्षेन क्षिप्रमिति पदेन प्रत्येकक्रियायामनुषञ्जनीयेन पुनरुक्तत्वापत्तेः]। परद्विपघटाभेदक्षमैः परेषां शत्रूणां, द्विपानां हस्तिनां घटायाः समूहस्य भेदक्षमैः शत्रुपक्षीयहस्तिसमूहनिवारणसमर्थैरित्यर्थः, द्विरदैः हस्तिभिः, द्वारेषु स्थीयताम्; (अनेनापि प्राचीरात् अस्त्रक्षेपणेन पुरद्वारेषु प्रबलहस्तिवृन्दरक्षणेन शत्रूणां पुरप्रवेशासम्भवाय तथोपदेशः)। एवं स्वदुर्गरक्षामुपदिश्य आत्मना सह बलनिर्गममुपदिशति, मुक्त्वेत्यादि।—किञ्च, येषां यशः कीर्त्तिरेव, अभीष्टम् अभिलषितं, ये केवलं यशःप्रार्थिनः इत्यर्थः, ते निर्यान्तु, पुरादिति शेषः; स्वामिमरणेऽपि युद्धादौ प्रवर्त्तनं स्वामिसन्तोषाय, अपि तु यशोऽर्थायेति भावः। भीरूणां रणप्रवेशासम्भवादाह, मृत्युभयमिति।—मृत्युभयं मुक्त्वा त्यक्त्वा, मया सह (अस्वामिनः निरुत्साहतावारणाय मया सह इत्युक्तम्) एकमनसः अभिन्नमतयः, (एतच्च विशेषणं

विरा। अमात्य! अलमावेगेन ; वृत्तमिदं वर्ण्यते।

राक्ष। कथं वृत्तमिदम्!! मया पुनर्ज्ञातं, स एव कालो वर्त्तते इति। [ सास्रमुत्सृज्य शास्त्रम् ]। हा देव नन्द! स्मरति ते राक्षसः प्रसादानां, (स) यस्तु एवंविधे काले—

यत्रैषा मेघनीला चलति गजघटा, राक्षसस्तत्र यायात्
एतत् पारिप्लवाम्भःप्लुति तुरगबलं वार्य्यतां राक्षसेन।
पत्तीनां राक्षसोऽन्तं नयतु बलमिति प्रेषयन्मह्यमाज्ञाम्
अज्ञासीः स्नेहयोगात् स्थितमिह नगरे राक्षसानां सहस्रम् ॥१४॥

ततस्ततः?

---

स्वामिनो विनाशेऽपि यथा स्वामिभक्त्यनुसारेण मया प्रयत्यते, एवं मया तुल्यरूपाः अपि प्रवर्त्तन्तामिति दर्शनाय ) अत एव प्रहर्त्तुं मनो येषां तादृशाः युयुत्सवः सन्तः, अरेः विपक्षस्य, दुर्बले स्वपक्षात् हीनबले, ( तथोक्तिरुत्साहवर्द्धनार्था ) पराक्रम-कौशलाद्यभावात् सुजये इत्यर्थः, बले सैन्ये, निर्यान्तु इति पूर्वेणान्वयः, प्रविशन्तु इति तस्यार्थः। [ इदं रोषसम्भ्रमवचनं त्रोटकम्। अत्र हि वीरो रसः ; तत्र शत्रुबलादयः आलम्बनविभावाः, कुसुमपुरप्रवेशे विपक्षपक्षचेष्टा उद्दीपनविभावाः, "मुक्त्वा सलुभयं··· ···ते निर्यान्तु" इत्यादिरूपनिजसहायान्वेषणादयः अनुभावाः, "मयि स्थिते कः कुसुम-पुरम् उपरोत्स्यति" इत्यादिरूप-गर्वादयः शस्त्राकर्षणादिकञ्च सञ्चारिभावाः, पूर्वोक्तास्रु-पातादयः सात्त्विकभावाः, एतैः परिपुष्टः शत्रुपक्षनिवारणपूर्वकं निजनगररक्षायां राक्षसोत्साहः स्थायिभावः वीररसतां भजते ]। शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

(स) प्रसादानाम्—अनुग्रहपूर्वकप्रदत्तानाम्, "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात्। ( "प्रसादस्तु प्रसन्नता" इत्यमरः )। [ अत्र "अधीगर्थदयेशां कर्मणि" ( २।३।५२ पा० ) इति षष्ठी ]।

स्वस्वामिनां नन्दानां तादृशविनाशं चाणक्यस्य च सर्वथा जयलाभमनुस्मरन् विशुद्धाशयः राक्षसः स्वं प्रति जीवितवतां तेषां प्राक्कालीनमनुरागं प्रदर्शयन्ननुशोचति, यत्रेति।—यत्र रणप्रदेशे, एषा मेघनीला मेघवत् श्यामला, गजघटा हस्तिवृन्दं, चलति तत्र राक्षसः यायात् युद्धाभिमुखीभूय गच्छेत्, [गजघटां दृष्ट्वा राक्षसो न बिभेति इति ध्वनितम्]। पारिप्लवं चञ्चलम्, उत्तरङ्गमित्यर्थः, यत् अम्भः जलं, तद्वत् प्लुतिः उल्लम्फनादिगतिविशेषो यस्य तादृशं वीचीरविधाभचञ्चलसागरतरङ्गवल्लोलवदित्यर्थः,

इच्छा के आघात की अत्याचार

विरा। ततः समन्तात् उपरुद्धं पुष्पपुरम् अवलोक्य बहुदिवसप्रभृति महत् उपरोधवैशसम्(ङ) उपरि पौराणां परिवर्त्तमानम् (क) असहमाने, तस्याम् अवस्थायां पौरजनापेक्षया सुरङ्गाम् (ख) उपेत्य अपक्रान्ते तपोवनाय देवे सर्वार्थसिद्धौ, स्वामिविरहात् सुशिथिलीकृतप्रयत्नेषु युष्मद्बलेषु जयघोषणाव्याघातादिसाहसानुमितान्तर्नगरवासिषु (ग) पुनरपि नन्दराज्यप्रत्यानयनाय सुरङ्गया बहिरपगतेषु युष्मासु, चन्द्रगुप्तनिधनाय युष्मत्प्रयुक्तया विषकन्यया घातिते तपस्विनि (घ) पर्वतेश्वरे—"

---

एतत् तुरगबलं विपक्षस्य अश्वसैन्यं, राक्षसेन वार्य्यतां प्रतिरुध्यताम्। [तथापि राक्षसो न वस्यति इति सूचितम्]। राक्षसः पत्तीनां पदातीनाम्, अथवा— "एकेभैकरथा त्र्यश्वा पत्तिः पञ्च पदातयः" इत्यमरोक्तलक्षणाक्रान्तानाम्, एतत् बलम्, अन्तं नाशं, नयतु प्रापयतु। [पत्तरिति पाठे—पत्तीनां मम पदातीनाम्, अन्तः मध्ये, बलं स्वबलं सैन्यं, नयतु प्रापयतु]। इति एवम्प्रकारेण, मह्यं मां प्रति इत्यर्थः, आज्ञां प्रेषयन्, हे देव! इति शेषः, स्नेहयोगात् प्रीतिहेतोः, इह नगरे राक्षसानां सहस्रं स्थितम् अज्ञासीः सहस्रराक्षससाध्यकार्य्यकारितया मां राक्षससहस्रमिव सम्भावितवान्, उत्प्रेक्षसे स्म इत्यर्थः। [अत्र उपमयोः संसृष्टिः; तथा च, प्रथम-तृतीयपादयोः "राक्षसो यायात्" "राक्षसो नयतु" इति कर्तृवाच्यप्रयोगप्रक्रमे, द्वितीयपादे "वार्य्यतां राक्षसेन" इति कर्मवाच्यप्रयोगात् भग्नप्रक्रमतादोषोऽनुसन्धेयः]। स्रग्धरा वृत्तम् ॥१४॥

(ङ) उपरोधवैशसम्—उपरोधेन वैशसम्—अत्याचाररूपम्।

(क) परिवर्त्तमानं—नित्यनूतनमित्यर्थः।

(ख) पौरजनापेक्षया—नगरवासिनामनुमत्या। सुरङ्गां—सन्धिं, भूमध्यगतप्रच्छन्नपथमिति यावत्।

(ग) जयघोषणेत्यादि।—जयघोषणा—डिण्डिमवादनपुरःसरजयविज्ञापनं, मौर्य्यस्येति शेषः, तस्याः व्याघातः,—अपहरणम् आदिर्येषां तैः, साहसैः,—बलकृतकार्य्यैः, अनुमितेषु—अस्मदुपजापदूषिता इत्येवम् उन्नीतेषु, अन्तर्नगरवासिषु, "युष्मद्बलेषु" इत्यस्य विशेषणम्।

(घ) तपस्विनि—वराके, निरपराधे इत्यर्थः।

राच। सखे! पश्य आश्चर्य्यम्—

कर्णेनेव विषाङ्गनैकपुरुषव्यापादिनी रक्षिता,
हन्तुं शक्तिरिवार्जुनं बलवती या चन्द्रगुप्तं मया।
सा विष्णोरिव विष्णुगुप्तहतकस्यात्यन्तिकश्रेयसे
हैडिम्बेयमिवेत्य पर्वतनृपं तद्वध्यमेवावधीत्॥ १५॥

विरा। अमात्य! दैवस्य अत्र कामचारः, किमत्र क्रियते?

राच। ततस्ततः?

विरा। "—ततः पितृवधपरित्रासात् अपक्रान्ते कुसुमपुरात् कुमारे मलयकेतौ, विश्वासिते (ङ) च पर्वतकभ्रातरि वैरोचके, प्रकाशिते च चन्द्रगुप्तस्य नन्दभवनप्रवेशे, चाणक्यहतकेन आहूय अभिहिताः कुसुमपुरनिवासिनः सर्व्वे एव सूत्रधाराः, (च) यथा 'सांवत्सरिकवचनात् (छ) अद्यैव अर्द्धरात्रसमये

---

मौर्य्यविनाशाय प्रयुक्तस्य अमोघस्य स्वपुरुषकारस्य प्रतिकूलदैवेन अन्यथाकरणमुपमया सविस्मयं दर्शयन्नाह, कर्णेनेति।—कर्णेनेव राधेयेनेव, मया राक्षसेन, अर्जुनमिव चन्द्रगुप्तं हन्तुं बलवती सामर्थ्यशालिनी, एकपुरुषव्यापादिनी एकपुरुषघातिनी, शक्तिरिव इन्द्रदत्त एकघ्नीशक्तिनामास्त्रविशेष इव, या विषाङ्गना विषकन्या, रक्षिता स्थापिता, सा विषकन्या, विष्णोरिव कृष्णस्येव, विष्णुगुप्तहतकस्य चाणक्यहतकस्य, आत्यन्तिकश्रेयसे समधिककल्याणार्थम्, अर्जुनस्येव चन्द्रगुप्तस्य इत्यर्थात्, तद्वध्यं तस्य परिपन्थितराज्यार्द्धदानभीरोः चाणक्यस्य एव वध्यं, हैडिम्बेयमिव हिडिम्बातनयं घटोत्कचमिव, पर्वतनृपम् एत्य प्राप्य, अवधीत्। सहजकवचकुण्डलादानतुष्टेन एकपुरुषघातिनी शक्तिरिन्द्रेण कर्णाय दत्ता, ततः रात्रियुद्धे अतिविक्रान्तं घटोत्कचं कथमपि वारयितुमशक्नुवन् कर्णः अर्जुनवधार्थं रक्षितया एकपुरुषघातिन्या शक्त्या निहतवानिति महाभारतीयकथाऽत्रानुसन्धेया। (अत्र आरब्धवैफल्यपूर्व्वकानर्थोत्पत्तिरूपो विषमालङ्कारः, स च उपमासङ्कीर्णः]। शार्दूलविक्रीडितं वृत्तम्॥ १५॥

(ङ) विश्वासिते—"तुभ्यमेव राज्यार्द्धं दास्यामि" इति सान्त्वयित्वा चाणक्येन आश्वासिते।

(च) सूत्रधाराः,—काष्ठशिल्पिनः।

(छ) सांवत्सरिकवचनात्—दैवज्ञवाक्यात्।

एवाभिमतः चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति, ततः प्रथमद्वारात् प्रभृति संस्क्रियतां राजभवनम्' इति। ततः सूत्रधारैः अभिहितम्—'आर्य्य! प्रथममेव देवस्य चन्द्रगुप्तस्य नन्दभवनप्रवेशम् उपलभ्य (ज) सूत्रधारेण दारुवर्म्मणा कनकतोरणन्यासादिभिः संस्कारविशेषैः (झ) संस्कृतं प्रथमराजद्वारम्। इदानीम् अस्माभिः अभ्यन्तरे संस्कारो (ञ) विधेयः' इति। ततः चाणक्यवटुना अनादिष्टेनैव दारुवर्म्मणा संस्कृतं राजभवनद्वारम् इति परितुष्टेन दारुवर्म्मणः सुचिरं दाक्ष्यम् (ट) अभिनन्द्य अभिहितम्'अचिरादस्य दाक्ष्यस्य अनुरूपं फलम् (ठ) अधिगमिष्यसि दारुवर्म्मन्!'

राक्ष। [सोद्वेगम्]। सखे! कुतः चाणक्यवटोः परितोषः? अफलम् अनिष्टफलं वा दारुवर्म्मणः प्रयत्नम् अवगच्छामि; यदनेन बुद्धिमोहात् अथवा राजभक्तिप्रकर्षात् (ड) नियोगकालम् अप्रतीक्षमाणेन सञ्जनितः चाणक्यवटोः चेतसि बलवान् विकल्पः (ढ)। ततस्ततः?

विरा। ततः चाणक्यहतकेन (ण) अनुकूललग्नवशात् अद्य

---

(ज) उपलभ्य—ज्ञात्वा।

(झ) संस्कारविशेषैः,—चन्द्रगुप्तोपरि तोरणपातनोद्यमादिरूपैः।

(ञ) अभ्यन्तरे संस्कार इति।—तीक्ष्णरसदानशयनगृहकल्पितखननादिरूपः इति गूढोऽभिसन्धिः।

(ट) दाक्ष्यं—नैपुण्यम्।

(ठ) अनुरूपं फलं—वधरूपं फलम् इति गूढम्।

(ड) राजभक्तीति।—राज्ञि—सर्वार्थसिद्धौ, भक्तिप्रकर्षः,—वैरिनिधनेन भक्त्यतिशयप्रदर्शनं तस्मात्। [ अयम् अपकारिजनात् भयम् उद्वेगः ]।

(ढ) विकल्पः,—संशयः।

(ण) ततः चाणक्यहतकेनेत्यादि।—[ इदं चाणक्यस्य इष्टार्थोपायानुसरणम् आक्षेपो नाम सन्ध्यङ्गम् ]।

अर्द्धरात्रसमये चन्द्रगुप्तस्य नन्दभवनप्रवेशो भविष्यतीति शिल्पिनः पौरांश्च गृहीतार्थान् कृत्वा, तस्मिन्नेव क्षणे पर्वतेश्वरभ्रातरं वैरोचकमेकासने चन्द्रगुप्तेन सह उपवेश्य कृतः (त) पृथ्वीराज्यार्द्धभागः।

राक्ष। किम् अतिसृष्टं (थ) पर्वतेश्वरभ्रात्रे वैरोचकाय पूर्वप्रतिश्रुतं राज्यार्द्धम्?

विरा। अमात्य! अथ किम्।

राक्ष। [आत्मगतम्]। नियतम् अतिधूर्त्तवटुना तेनापि तपस्विनः कमपि उपांशुवधम् आकलय्य (द) पर्वतेश्वरविनाशजनितस्य अयशसः परिहारार्थम् एषा लोकप्रतिपत्तिः उपचरिता। (ध) [प्रकाशम्]। ततस्ततः?

विरा। ततः प्रथममेव प्रकाशीकृते चन्द्रगुप्तस्य अर्द्धरात्रे नन्दभवनप्रवेशे, कृताभिषेके च वैरोचके, हिमविमलमुक्तागुणपरिक्षेपोपरचितपट्टवारबाणप्रच्छादितशरीरे, (न) मणिमयमुकुटपट्टबन्धनिविड़नियतरुचिरतरमौलौ, सुरभिकुसुमदामवैकक्षिकावभासितवक्षःस्थले, (प) परिचितदर्शनैरपि

---

(त) कृतः,—दत्त इत्यर्थः।

(थ) अतिसृष्टं—दत्तम्।

(द) उपांशुवधं—गुप्तहत्या। आकलय्य—अवधार्य्य।

(ध) लोकप्रतिपत्तिः,—लोकानां प्रतिपत्तिः,—निश्चयः, [ अत्र "लोकप्रसिद्धिः" इति पाठे—लोकेषु प्रसिद्धिः,—प्रख्यापनेत्यर्थः ]। उपचरिता—कल्पिता।

(न) वैरोचके—पर्वतेश्वरभ्रातरि। हिमेत्यादि।—हिमम् इव विमलः,—स्वच्छः, यः मुक्तागुणः,—मुक्ताहारः, तस्य परिक्षेपः,—शोभार्थं परितः प्रदानं, तेन उपरचितः निर्मितः, पटुः उज्ज्वलः, यो वारबाणः कञ्चुकः, तेन प्रच्छादितं शरीरं यस्य तादृशे। [ एतेन तस्य वैरोचकस्येनाभिज्ञातं न भविष्यतीति सूचितम् ]।

(प) सुरभीत्यादि।—सुरभि—सुगन्धि, यत् कुसुमदाम—पुष्पमाल्यं, तदेव

अनभिज्ञायमाने, नृपाकृतौ (फ) चाणक्यहतकस्य आज्ञया चन्द्रगुप्तोपवाह्यां (ब) चन्द्रलेखाभिधानां नागवशाम् (भ) आरूढे, चन्द्रगुप्तानुयायिना (म) राजलोकेन अनुगम्यमाने, जवेन देवस्य नन्दस्य भवनं प्रविशति वैरोचके, युष्मत्प्रयुक्तेन सूत्रधारेण दारुवर्मणा चन्द्रगुप्तोऽयमिति मन्यमानेन वैरोचकस्य उपरि निपातनाय सज्जीकृतं यन्त्रतोरणम् (य)। अत्रान्तरे बहिर्निगृहीतवाहनेषु स्थितेषु चन्द्रगुप्तानुयायिषु भूमिपालेषु युष्मत्प्रयुक्तेनैव चन्द्रगुप्तनिषादिना बर्बरकेण (र) कनकदण्डान्तर्निहिताम् असिपुत्रिकाम् (ल) आकर्ष्टुकामेन अवलम्बिता करेण कनकशृङ्खलामुखावलम्बिनी कनकदण्डिका (व)।

राक्ष। उभयोरपि अस्थाने यत्नः। ततस्ततः?

विरा। अथ जघनाभिघातम् उत्प्रेक्षमाणा (श) गजवधूः अतिजवनतया गत्यन्तरम् आरूढवती। (ष) ततः प्रथमगत्यनु-

---

वैकक्षिक—यज्ञोपवीतवत् तिर्य्यग्लम्बि एकपार्श्वस्कन्धं व्याप्य अपरपार्श्वकुक्षिपर्य्यन्त-विस्तृतः हारः, तेन अवभासितं—शोभितं, वक्षःस्थलं यस्य तादृशी।

(फ) नृपाकृतौ—चन्द्रगुप्तवत् अभिज्ञायमाने इत्यर्थः, अथवा कृत्रिमाकारे।

(ब) चन्द्रगुप्तोपवाह्यां—चन्द्रगुप्तः उपवाह्यो यस्याः तां चन्द्रगुप्तवाहिनीमित्यर्थः।

(भ) नागवशां—नागस्य वशा—स्त्री तां, हस्तिनीमित्यर्थः। ("वशा स्त्री करिणी च स्यात्" इत्यमरः)।

(म) चन्द्रगुप्तानुयायिनेत्युक्तिश्चन्द्रगुप्तभ्रमसम्पादनार्थम्।

(य) यन्त्रतोरणं—तोरणरूपेण निर्मितं यन्त्रमित्यर्थः।

(र) अयं हि चन्द्रगुप्तस्य उपांशुवधार्थं तत्र निषादित्वेन राक्षसेन नियोजितः।

(ल) असिपुत्रिकां—क्षुरिकामित्यर्थः।

(व) कनकेत्यादि।—कनकशृङ्खला—स्वर्णहारः, मुखावलम्बिनी—मुखे लम्बमाना यस्याः तादृशी। कनकदण्डिका—स्वर्णयष्टिः।

(श) उत्प्रेक्षमाणा—अवबुध्यमाना।

(ष) अतिजवनतया—अतिवेगवत्तया, गत्यन्तरम्—अन्यां गतिं, त्वरितगतिमित्यर्थः, आरूढवती—प्राप्तवती, आश्रितेत्यर्थः।

रोधप्रत्याकलितमुक्तेन भ्रष्टलक्ष्यं (स) पतता यन्त्रतोरणेन आकृष्टकृपाणो व्यग्रपाणिः (ह) अनासाद्यैव चन्द्रगुप्तप्रत्याशया वैरोचकं दारुवर्मणा हतः तपस्वी वर्वरकः। ततो दारुवर्मणा यन्त्रतोरणपातम् आत्मविनाशफलम् अवधार्य्य शीघ्रमेव उत्तुङ्ग-तोरणस्थानम् आरूढ़ेन यन्त्रघटनबीजलोहकीलकम् (क) आदाय हस्तिनीगत एव हतः तपस्वी (ख) वैरोचकः।

राक्ष। हा! कष्टम्, अनर्थद्वयमापतितम्; न हतः चन्द्रगुप्तोऽसौ, हतौ वैरोचक-वर्वरकौ!! [सावेगमात्मगतम्]। न एतौ उभौ हतौ, दैवेन वयमेव हताः (ग)। [प्रकाशम्]। अथ स सूत्रधारो दारुवर्मा क्व?

विरा। वैरोचकपुरःसरैः पदातिलोकैर्लोष्टघातं हतः। (घ)

राक्ष। [साश्रम्]। कष्टं भोः कष्टम्! अहो! वत्सलेन सुहृदा दारुवर्मणा वियुक्ताः स्मः। अथ तेन तत्र भिषजा अभयदत्तेन किमनुष्ठितम्?

विरा। अमात्य! सर्वमनुष्ठितम्।

---

(स) प्रथमगत्यनुरोधप्रत्याकलितमुक्तेन—प्रथमा या गतिः,—मन्दगतिरित्यर्थः, तदनुरोधेन प्रत्याकलितं—धृतं, मुक्तञ्च तेन। भ्रष्टलक्ष्यं—भ्रष्टम्—अतिक्रान्तम् इतस्ततो यातं वा, लक्ष्यं यत्र तत् यथा स्यात् तथा।

(ह) आकृष्टकृपाणः,—गृहीतखड्गः। व्यग्रपाणिः,—प्रहारार्थमुद्यतकर इत्यर्थः।

(क) उत्तुङ्गतोरणस्थानम्—उच्चैस्तरवहिर्द्वारस्थानम्। आरूढ़ेन—प्राप्तवता सतेत्यर्थः। यन्त्रघटनबीजलोहकीलकं—यन्त्रसंस्थापनहेतुभूतं लोहकीलकम्।

(ख) तपस्वी—वराकः, दीन इत्यर्थः, "वेचारा" इति भाषा।

(ग) दैवेन—नियत्या। अनयोरुभयोर्हतत्वेऽपि तयोर्विनाशस्य अस्मद्विनाश-नियामकत्वात् दैवकृतः तयोर्नाशः अस्मद्विनाश एवेति समुदितार्थः।

(घ) लोष्टघातमिति।—लोष्टैर्हत्वा इति लोष्टघातं, ["करणे हनः" (३।४।३७ पा०) इति हन्तेः णमुल्]। हतः,—नाशितः। ["कषादिषु यथाविध्यनुप्रयोगः" (३।४।४६ पा०) इत्यनुशासनात् द्विर्हन्तेः प्रयोगः]।

राक्ष। [सहर्षम्]। अपि नाम सखे! हतः चन्द्रगुप्तहतकः?

विरा। अमात्य! दैवात् न हतः।

राक्ष। [सविषादम्]। तत् किमिदानीं कथयसि परितुष्टः 'सर्वम् अनुष्ठितम्' इति?

विरा। अमात्य! कल्पितम् अनेन विषचूर्णमिश्रम् औषधं चन्द्रगुप्ताय। तच्च प्रत्यक्षीकुर्वता चाणक्यहतकेन कनकभाजने वर्णान्तरम् उपगतम् उपलभ्य अभिहितः चन्द्रगुप्तः,—'वृषल! वृषल! सविषम् औषधं, न पातव्यम्' इति।

राक्ष। शठः खलु असौ वटुः। अथ स वैद्यः कथम्? (ङ)

विरा। स खलु वैद्यः तदेव औषधं पायितो उपरतश्च। (च)

राक्ष। [सविषादम्]। अहह! महान् विज्ञानराशिः उपरतः!! भद्र! अथ तस्य शयनाधिकृतस्य प्रमोदकस्य (छ) किं वृत्तम्?

विरा। आत्मविनाशः।

राक्ष। [सोद्वेगम्]। कथमिव?

विरा। स खलु मूर्खः तं युष्माभिः अतिसृष्टं (ज) महान्तम् अर्थराशिम् अवाप्य महता व्ययेन उपभोक्तुम् आरब्धवान्। ततः 'कुतोऽयं भूयान् धनागमः तव' इति पृच्छ्यमानोऽयं यदा वाक्यभेदान् (झ) बहून् अकथयत्, तदा चाणक्यहतकादेशात् विचित्रेण वधेन व्यापादितः (ञ)।

---

(ङ) कथं—किंव्यापारः, किमवस्थ इत्यर्थः; अभवत् इति शेषः।

(च) पायितः, राज्ञा चाणक्येन वा इति शेषः। उपरतः,—मृतः।

(छ) शयनाधिकृतस्य—शय्यारचणे तद्रचनायां वा प्राप्ताधिकारस्य, शयनगृहे नियुक्तस्य इत्यर्थः। प्रमोदकस्य—राक्षसेन वशीकृतस्य चन्द्रगुप्तभृत्यविशेषस्य।

(ज) अतिसृष्ट—दत्तम्।

(झ) वाक्यभेदान्—परस्परविरोधीनि वचनानि इत्यर्थः।

(ञ) विचित्रेण वधेन—पशुमारणवत् विविधप्रकारेण हननेन, नितरां क्लेशयित्वा

राच। [सोद्वेगम्]। कथम्, अत्रापि वयमेव उपहता दैवेन !! अथ शयितस्य चन्द्रगुप्तस्य शरीरे प्रहर्त्तुमस्मत्प्रयुक्तानां नरपतिशयनगृहस्य अन्तःसुरङ्गायां निवसतां बीभत्सकादीनां को वृत्तान्तः ?

विरा। अमात्य ! दारुणो वृत्तान्तः।

राच। [सावेगम्]। कथं, दारुणो वृत्तान्तः !! न खलु विदिताः (ट) ते तत्र निवसन्तः चाणक्यहतकेन ?

विरा। अथ किम्।

राच। कथमिव ?

विरा। प्राक् चन्द्रगुप्तप्रवेशात् प्रविष्टमात्रेण एव शयनगृहे चाणक्येन दुरात्मना समन्तात् अवलोकिते, ततस्तु एकस्मात् भित्तिच्छिद्रात् गृहीतभक्तावयवां (ठ) निष्क्रामन्तीं पिपीलिकापङ्क्तिम् अवलोक्य पुरुषगर्भमेतद्गृहमिति गृहीतार्थेन दाहितं तदन्तःशयनगृहम्। तस्मिंश्च दह्यमाने धूमावरुद्धदृष्टिविषयाः प्रथममपिहितनिर्गममार्गम् (ड) अनधिगम्य सर्व एव बीभत्सादयः तत्रैव ज्वलनम् उपगता उपरताश्च।

राच। [सास्रम्]। सखे ! पश्य, चन्द्रगुप्तस्य दैवसम्पदा सर्व एव उपरताः। [सचिन्तम्]। सखे ! दैवसम्पदं पश्य दुरात्मनः चन्द्रगुप्तहतकस्य ; कुतः ?—

---

विनाशनेन इति यावत्, ("दग्धिया दग्धिया मारा" इति भाषा)। व्यापादितः,—मारितः।

(ट) खलु इति—प्रश्नार्थमव्ययं, विदिताः किम् ? इत्यर्थः।

(ठ) गृहीतेति।—गृहीता भक्तानाम्—अन्नानां, अवयवाः,—कणाः यया ताम्, अन्नकणवाहिनीम् इत्यर्थः।

(ड) अपिहितेत्यादि।—अपिहितः,—निरुद्धः, निर्गममार्गः तम्।

कन्या तस्य बधाय या विषमयी गूढं प्रयुक्ता मया,
दैवात् पर्वतकस्तया विनिहतो यस्तस्य राज्यार्द्धभाक्।
ये यन्त्रेषु रसेषु च प्रणिहितास्तैरेव ते घातिताः,
मौर्य्यस्यैव फलन्ति पश्य विविधश्रेयांसि मन्नीतयः ॥१६॥

विरा। अमात्य! तथाऽपि प्रारब्धम् अपरित्याज्यमेव। (ढ)
पश्यतु अमात्यः,—

प्रारभ्यते न खलु विघ्नभयेन नीचैः,
प्रारभ्य विघ्नविहता विरमन्ति मध्याः।
विघ्नैः पुनःपुनरपि प्रतिहन्यमानाः,
प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति ॥ १७ ॥

---

स्वाभीष्टसिद्ध्यै कृतमपि पौरुषं न स्वोपकाराय जातम्, अपि तु तेन दुर्दैववशेन रिपोरेव श्रेयः समुत्पादितमित्याक्षेपपुरःसरं दैवोत्कर्षं दर्शयन्नाह, कन्येति।—मया तस्य चन्द्रगुप्तस्य, बधाय या विषमयी कन्या गूढं प्रयुक्ता प्रेषिता, दैवात् दुर्भाग्यवशात्, तया कन्यया, यः तस्य राज्यार्द्धभाक् परिपणितार्द्धराज्याधिकारी, पर्वतकः स एव विनिहतः व्यापादितः; ये दारुवर्मादयः, यन्त्रेषु मारणसाधनपदार्थेषु च, रसेषु विषेषु च, (अत्र रसशब्दो विषवाचकः, "शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः" इत्यमरोक्तेः) प्रणिहिताः व्यापारिताः, मया इति शेषः, तैः यन्त्रविषादिभिरेव, मदीयपुरुषप्रणीतैरेवेति भावः, ते घातिताः विनाशिताः, पश्य, अतः कारणात् मे नीतयः उपायाः, मौर्य्यस्य एव विविधश्रेयांसि प्रभूतानि मङ्गलानि, फलन्ति जनयन्ति, मत्कृतोपायैः विषकन्यादिभिस्तदीयानिष्टनिवारणात् प्रत्युत मदीयानिष्टकरणाच्चेत्यर्थः। [अत्र चन्द्रगुप्तविनाशाय विषकन्यादिप्रेषणरूपनीतिप्रयोगेऽपि तत्फलानवाप्तेः प्रत्युत मौर्य्यस्यैव श्रेयःप्राप्त्या स्वानिष्टस्योत्पत्तेश्च विषमालङ्कारः,—"यदाऽऽरब्धस्य वैफल्यमनर्थस्य च सम्भवः" इति दर्पणलक्षणात्]। शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

(ढ) प्रारब्धं—प्रक्रान्तम्। अपरित्याज्य—परित्यक्तुमयोग्यम्। [त्यजधातोः ण्यत्, "ण्यत्प्रकरणे त्यजेरुपसङ्ख्यानम्" इति भाष्यवचनात् जकारस्य कुत्वाभावः]।

धीमन्तो हि कदाचिदपि न प्रारब्धं परित्यजेयुरिति नीतिवाक्येन अमात्यमुत्साहयन्नाह, प्रारभ्यते इति।—नीचैः क्षुद्रैः, जनैरिति शेषः, विघ्नभयेन करिष्यमाणकार्य्ये भविष्यद्विघ्नसम्भावनया, न खलु नैव, प्रारभ्यते प्रक्रम्यते, कार्य्यमिति शेषः, मध्याः

अपि च—

किं शेषस्य भरव्यथा न वपुषि ? क्ष्मां न क्षिपत्येष यत्,
किं वा नास्ति परिश्रमो दिनपतेः ? आस्ते न यन्निश्चलः।
किन्त्वङ्गीकृतमुत्सृजन् कृपणवत् श्लाघ्यो जनो लज्जते,
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ १८ ॥

राक्ष। सखे! प्रारब्धम् अपरित्याज्यम् इति प्रत्यक्षम् एतद्भवतः। ततस्ततः ?

विरा। ततः प्रभृति (चाणक्यहतकः) चन्द्रगुप्तस्य शरीरे सहस्रगुणम् अप्रमत्तः (एभ्य एव ईदृशं भविष्यतीति) अन्विष्य अन्विष्य निगृहीतवान् कुसुमपुरनिवासिनो नन्दामात्यपुरुषान्।

---

प्रारभ्य विघ्नेन विहताः सन्तः विरमन्ति, आरब्धकार्य्यादिति शेषः, प्रारब्धं त्यजन्तीत्यर्थः; [ "व्याङ्परिभ्यो रमः" (१।३।८३ पा०) इति परस्मैपदम् ] उत्तमगुणाः महान्तः, त्वमिव विघ्नैः अन्तरायैः, पुनः पुनः वारं वार, प्रतिहन्यमाना विफलीक्रियमाणा अपि, प्रारब्धम् उपक्रान्तम्, उद्वहन्ति समापयन्तीत्यर्थः। [ अत्र उपमाऽलङ्कारः। "न परित्यजन्ति" इति पाठे—अप्रस्तुतप्रशंसा ]। वसन्ततिलकं वृत्तम् ॥ १७ ॥

पूर्वोक्तमर्थं समर्थयितुमाह, किं शेषस्येति।—शेषस्य अनन्तनागस्य, वपुषि देहे, भरव्यथा भूभारवहनजनितक्लेशः, किं न भवति ? अपि तु भवत्येव; तथाऽपि एष शेषः, क्ष्मां पृथिवीं, न क्षिपति न त्यजति, तादृशभारसत्त्वेऽपि न तेन तस्याः क्षेपः क्रियते इति यत्; वा अथवा, दिनपतेः सूर्य्यस्य, परिश्रमः किं नास्ति ? अपि तु अस्ति एव, तथाऽपि निश्चलः क्रियाशून्यः, न आस्ते न तिष्ठतीति यत्; तत्र अङ्गीकृतापरित्याग एव कारणम् इति भावः। भारे परिश्रमे च सत्यपि तत्तत् कार्य्यं यन्न परित्यजति, तत्र हेतुं वर्णयन् अर्थान्तरं न्यस्यति, किन्त्विति।—किन्तु परन्तु, श्लाघ्यः महान्, जनः कृपणवत् क्षुद्रेण तुल्यम, अङ्गीकृतम् उरहतम् त्यजन्, लज्जते; यतः प्रतिपन्नवस्तुषु अङ्गीकृतविषयेषु, निर्वाहः यथापूर्वं समापनं, प्रतिपालनम् इति यावत, एतत् सतां साधूनां, गोत्रव्रतं कुलाचारः, साधवः कथमपि अङ्गीकृतं न त्यजन्तीत्यर्थः; तथा चोक्तम्—"अङ्गीकृतं सुकृतिनः परिपालयन्ति" इति। [ अत्र पूर्वार्द्धगता प्रतिवस्तूपमा उत्तरार्द्धगतेन उपमाऽनुप्राणितेनार्थान्तरन्यासेन सङ्कीर्णा ]। शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

राक्ष। [ सावेगम् ]। वयस्य! अथ के के निगृहीताः?

विरा। अमात्य! आदौ एव तावत् क्षपणको जीवसिद्धिः सनिकारं नगरात् निर्वासितः।

राक्ष। [ आत्मगतम् ]। एतावत् सह्यं, न निष्परिग्रहं स्थान-परिभ्रंशः पीड़यिष्यति। (थ) [ प्रकाशम् ]। सखे! कमपराधम् उद्दिश्य निर्वासित एषः?

विरा। एष दुरात्मा राक्षसप्रयुक्तया विषकन्यया पर्वतेश्वरं घातितवानिति।

राक्ष। [ स्वगतम् ]। साधु कौटिल्य! साधु।—

परिहृतमयशः पातितमस्मासु च घातितोऽर्द्धराज्यहरः।
एकमपि नीतिबीजं बहुफलतामेति यस्य तव॥ १९॥

[ प्रकाशम् ]। ततस्ततः?

विरा। ततः चन्द्रगुप्तशरीरम् अभिद्रोग्धुम् अनेन व्यापारिताः (द) दारुवर्मादय इति नगरे प्रख्याप्य शकटदासः शूल-मारोपितः।

---

(थ) सह्यं—सहनीयम्। [ "शक्तिसहोश्च" ( ३।१।९९ पा० ) इति यत् ]। निष्परिग्रहं—संसारत्यागिनं, विषयासक्तिरहितमित्यर्थः। स्थानपरिभ्रंशः,—गृहच्युतिः। पीड़यिष्यति—दुःखाकरिष्यतीत्यर्थः।

गुणपक्षपातिनः पण्डिता हि शत्रोर्गुणम् ईर्ष्यया लोकसमक्षं वक्तुमनिच्छन्तोऽपि मनसा सम्यगेव आद्रियन्ते इति राक्षसोऽपि कौटिल्यनीतेरसाधारणत्वं प्रतिपदमनुभवन् तमेव प्रशंसन्नाह, परिहृतमिति।—अयशः अकीर्त्तिः, पर्वतेश्वरवधजनितमित्यर्थः, परिहृतम् आत्मनः त्याजितम्, अस्मासु पातितञ्च सङ्क्रामितञ्च, तथा अर्द्धराज्यहरः परिपणितराज्यार्द्धभागी, पर्वतेश्वर इति शेषः, घातितः नाशितः, यस्य तव एकमपि एकप्रयत्नसाध्यमपि, नीतिबीजं उपायविन्यासरूपम्, [ इदमेकं बीजाभिधानम् ] बहुफलतां पूर्वोक्तफलत्रयाधायकताम्, एति प्राप्नोति, त्रिविधं फलं जनयतीत्यर्थः। [ अत्र णिजन्तक्रियाप्रक्रमे "परिहृतम्" इति अणिजन्तक्रियायोगकं भग्नप्रक्रमतादोष-मावहति, स च "त्याजितम्" इति पठित्वा भञ्जनीयः ]। आर्य्या वृत्तम्॥ १९॥

(द) अनेन—शकटदासेन, व्यापारिताः,—नियोजिताः।

राच। [ सास्रम् ]। हा सखे ! शकटदास ! अयुक्तः तव अयमीदृशो मृत्युः !! अथवा, स्वाम्यर्थम् उपरतो न शोच्यस्त्वमसि ; वयमेव अत्र शोच्याः, ये नन्दकुलविनाशेऽपि जीवितुमिच्छामः ।

विरा। अमात्य ! न एतदेवं, स्वाम्यर्थ एव साधयितव्यः इति प्रयतसे ।

राच। सखे !—

अस्माकममुमेवार्थमवलम्ब्य जिजीविषा ।
परलोकगतो देवः कृतघ्नैर्नानुगम्यते ॥ २० ॥

विरा। अमात्य ! न एतत् एवम् । [ अस्माकममुमेवार्थम् इत्यादि पुनः पठति ]। (घ)

---

स्वामिभक्तस्य हि तन्मरणमनु मरणेन भक्तिप्रदर्शनमपेक्ष्य जीवतः तत्कार्य्यसाधनमेव साधीयः इति प्रागुक्तविराधसिद्धान्तं सर्वथा समर्थयमान आह, अस्माकमिति।—अमुमेव उक्तरूपमेव, अर्थं स्वामिकार्य्यं, वैरनिर्य्यातनरूपप्रयोजनमेव इत्यर्थः, अवलम्ब्य आश्रित्य, अस्माकं जिजीविषा जीवनेच्छा, [ जीवतेः सन्नन्तात् अप्रत्ययः ]। सैषाऽपि न श्रेयसी प्रवृत्तिः इत्याशयेनाह, परलोकेति।—कृतघ्नैः तन्मरणाननुगामित्वेन कृतोपकारानभिज्ञैः सद्भिः, [ कृतं घ्नन्ति इति व्युत्पत्त्या कृतघ्नाः "कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम्" ( वा० ) इति मूलविभुजादित्वात् कः ] परलोकगतः देवः न अनुगम्यते न अनुम्रियते इत्यर्थः। ["अस्माभिरमुमेवार्थमालम्ब्य न जिजीविषाम" इति पाठे—अमुमेवार्थमालम्ब्य अस्माभिः कृतघ्नैः सद्भिः परलोकगतो देवः नानुगम्यते, न जिजीविषामालम्ब्येत्यन्वयः। पाठेऽस्मिन् परिसङ्ख्याऽलङ्कारो बोध्यः ]। पथ्यावक्त्रं वृत्तम् ॥ २० ॥

(घ) राक्षसप्रयुक्तवाक्यस्य अर्थान्तरत्वं दर्शयितुं विराधगुप्त आह, नैतदेवम् इति।—एतत्—भवत्प्रयुक्तं श्लोकात्मकं वाक्यम्। एवं न—एतदर्थकं न, किन्तु अन्यार्थकम् इत्यर्थः। अतः तत् पद्यं पुनः पठन् अर्थान्तरपरतां द्योतयति, स च अर्थः इत्थं—पूर्वार्द्धं प्राग्वत्। कृतघ्नैः तत्कृतोपकारविस्मारकैः इव, देवो नानुगम्यते, ये उपकारिणो प्रयोजनम् अनभिसम्पाद्य म्रियन्ते, ते कृतघ्ना एव, अतः कृतघ्नैरिव अस्माभिः नानुगम्यते इत्यर्थः। [ केचित् तु विराधोक्तौ "कृतघ्नैः" इत्यत्र "कृतज्ञैः" इति परिवर्त्त्य पठन्ति, तत्रायमर्थः,—कृतज्ञाः तत्कार्य्यसाधनेनैव तत्परितोषो भवेत् इत्याशयेन तथा तदनुगमनम् इति मन्यन्ते इति ]।

राक्ष। सखे! कथ्यताम्, अपरस्यापि सुहृद्व्यसनगतस्य श्रवणे सज्जा वयम्।

विरा। तत एतत् उपलभ्य चन्दनदासेन उपारूढ़साध्वसेन अपवाहितम् (द) अमात्यकलत्रम्।

राक्ष। सखे! क्रूरस्य चाणक्यबटोः विरुद्धम् अयुक्तम् अनुष्ठितं चन्दनदासेन।

विरा। अमात्य! ननु अयुक्ततरः सुहृद्द्रोहः। (ध)

राक्ष। ततस्ततः?

विरा। ततो याच्यमानेनापि यदा न समर्पितम् अनेन अमात्यकलत्रं, ततः कुपितेन चाणक्यबटुना—"।

राक्ष। [सोद्वेगम्]। स खलु व्यापादितः? (न)

विरा। "—अमात्य! न खलु व्यापादितः,—किन्तु गृहीतगृहसारः सपुत्रकलत्रः संयम्य बन्धनागारे निक्षिप्तः।

राक्ष। ततः किं परितुष्टः कथयसि—'अपवाहितम् अनेन राक्षसकलत्रम्' इति? ननु वक्तव्यं "संयतः सकलत्रो राक्षसः" इति। (प)

[प्रविश्य पटाक्षेपेण (फ) पुरुषः]। जअदु जअदु अज्जो। अज्ज! एसो क्खु सअडदासो पडिहारभूमिमुवत्थिदो। * (ब)

* जयति जयति आर्य्यः। आर्य्य! एष खलु शकटदासः प्रतीहारभूमिमुपस्थितः।

(द) उपारूढ़साध्वसेन—सञ्जातत्रासेन। अपवाहितं—स्थानान्तरं प्रापितम्।

(ध) सर्वद्रोहात् मित्रद्रोहोऽतिगर्हित इति भावः।

(न) [अपकारिजनात् भयम् उद्वेगः]।

(प) तद्बन्धनेनैव सकलत्रोऽहं बद्धः, सुहृदोरुभयोरभिन्नहृदयत्वादित्यर्थः।

(फ) पटाक्षेपेण—पटस्य—जवनिकारूपस्य, अक्षेपेण—कार्य्यस्य शीघ्रतार्थम् इतरजनैरुत्थापनीयजवनिकापटक्षेपमन्तरेणैव, स्वयमेव पटाक्षेपं कृत्वेव; तत्पार्श्वदेशेन इत्यर्थः। "पटक्षेपो न कर्त्तव्य आर्त्तराजप्रवेशने" इति वचनात्।

(ब) प्रतीहारभूमिं—द्वारदेशम्। ("स्त्री द्वार्द्वारं प्रतीहारः" इत्यमरः।)

राज। प्रियंवदक! अपि सत्यम्?

प्रियं। अलीअं किं अमच्चपादोपजीविणो मंतिदुं जाणंति? *

राज। सखे! विराधगुप्त! किम् एतत्?

विरा। अमात्य! रक्षति खलु भव्यं भवितव्यता।

राज। प्रियंवदक! यदि एवं, तत् किं चिरयसि? क्षिप्रं प्रवेशय तम्।

प्रियं। जं अमच्चो आणवेदि त्ति। † [निष्क्रान्तः]।

[ततः प्रविशति सिद्धार्थकेन अनुगम्यमानः शकटदासः]।

शक। [दृष्ट्वा आत्मगतम्]।—

दृष्ट्वा मौर्य्यमिव प्रतिष्ठितपदं शूलं धरित्र्यास्तले
तल्लक्ष्मीमिव चेतसः प्रमथिनीमुन्मुच्य वध्यस्रजम्।
श्रुत्वा स्वाम्युपरोधरौद्रविषमानाघाततूर्य्यस्वनान्
न ध्वस्तं प्रथमाभिघातकठिनं मन्ये मदीयं मनः॥ २१॥

---

* अलीकं किम् अमात्यपादोपजीविनो मन्त्रयितुं जानन्ति?

† यदमात्य आज्ञापयति इति।

---

पुनः पुनरन्तरायसहस्रमुत्तीर्य्य दुःसहमपि क्लेशजातम् अनुभूयापि मदीयं चित्तं यन्न भग्नं, तत्र पुनः पुनराघातजन्यकाठिन्यमेव हेतुरित्याह, दृष्ट्वेति।—धरित्र्याः पृथिव्याः, तले भूमावित्यर्थः, मौर्य्यं चन्द्रगुप्तमिव, प्रतिष्ठितपदं लब्धप्रतिष्ठं, स्थापितमूलञ्च, शूलं मारणार्थकीलकविशेषं, मदर्थमिति शेषः, दृष्ट्वा तल्लक्ष्मीं तस्य चन्द्रगुप्तस्य, लक्ष्मीं श्रियमिव, चेतसः प्रमथिनीं चित्तविदारिणीं, ["प्रमथिनीम्" इत्यसाधुः पाठः, "प्रे लपसृद्रुमथवदवसः" (३।२।१४५ पा०) इति सूत्रेण प्र-पूर्वक-मथ-धातोः घिनुणि "प्रमाथी" इत्येव पदं भवति। "सरूपः प्रत्ययो भेदः" इति नियमात् न णिनिः; तथा मन्थधातोरपि णिनि-प्रत्यये नकारलोपाभावः। अतः "प्रमथिनीम्" इत्यत्र "प्रमाथिनीम्" इत्येव पठनीयम्। "चेतनाप्रमथिनीम्" इति पाठान्तरे—चेतनायाः बुद्धेः प्रमथिनीं] वध्यस्रजं वध्यचिह्नभूतां मालाम्, उन्मुच्य (धातूनामनेकार्थत्वात्) परिधाय, स्वाम्युपरोधरौद्रविषमान् स्वामिनः नन्दस्य, उपरोधो हिंसनं, तद्वत् रौद्रान् घोरान्, विषमान् अप्राव्यान् च, आघाततूर्य्यस्वनान् घोषणावाद्यशब्दान्, श्रुत्वा मदीयं मनः [जीव-

[नाट्येन अवलोक्य सहर्षम्]। अयम् अमात्यराक्षसः तिष्ठति। य एषः,—

अक्षीणभक्तिः क्षीणेऽपि नन्दे स्वाम्यर्थमुद्वहन्।
पृथिव्यां स्वामिभक्तानां प्रमाणे परमे स्थितः॥ २२॥

[उपसृत्य]। जयतु जयतु अमात्यः।

राक्ष। [नाट्येन अवलोक्य सहर्षम्]। सखे शकटदास! दिष्ट्या कौटिल्यगोचरगतोऽपि दृष्टोऽसि, तत् परिष्वजस्व माम्।

[शकटदासः तथा करोति]।

राक्ष। [तं परिष्वज्य]। इदम् आसनम्, आस्यताम्।

शक। यत् आज्ञापयति अमात्यः।

[इति नाट्येन उपविष्टः]।

---

कर्मेन्द्रियवृत्तीनां मनोऽध्यधीनतया प्रकृते दर्शनश्रवणध्वंसनक्रियाणां मन एव कर्तृ, अतो ध्वंसनक्रियैककर्तृत्वात् क्त्वा-प्रत्ययः] प्रथमाभिघातकठिनं प्रथमाभिघातेन स्वामिवधरूपताड़नेन, कठिनम् अत एव न ध्वस्तं न आहतं, मन्ये। लोके हि किञ्चित् वस्तु भूयो भूय आहतं सत् कठिनं भवतीति प्रसिद्धम्, अतः काठिन्यान्न ध्वस्तमिति भावः। [प्रथमाभिघातकठिनमतो न ध्वस्तमित्यत्र ध्वस्तमित्यस्य प्रथमाभिघातकठिनमिति हेतुतया काव्यलिङ्गेनानुप्राणिता मन्ये-शब्दप्रयोगनिबन्धनोत्प्रेक्षा नाम अलङ्कारः; स च मौर्य्य-श्मशानशूलयोः राज्यश्री-वध्यस्त्रीणोश्चोपमानोपमेयभावात् प्रतिष्ठितपदमिति श्लिष्टपदेनोत्थापितत्वाच्च श्लेषानुप्राणितोपमाऽलङ्कारेण संसृष्टः। अत्र अयोग्यैः श्मशानशूलादिभिरुपमानैः नरनाथचन्द्रगुप्तादैः सन्तुलनेन चाण्डाल इव राजाऽसौ इति पूर्वोक्तालङ्कारसमुत्थः वस्तुध्वनिः शकटदासस्य असूयां द्योतयतीति बोध्यम्]। शार्दूलविक्रीडितं वृत्तम्॥ २१॥

स्वाम्युपरमेऽपि तस्मिन् अकृत्रिमभक्तिमन्तं तत्कार्य्यसंसाधनार्थमिदानीमपि सततं यतमानं राक्षसं प्रत्यक्षतो दृष्ट्वा आह, अक्षीणभक्तिरिति।—नन्दे क्षीणेऽपि विनष्टेऽपि, अक्षीणभक्तिः [अत्र पुंवद्भावप्रसक्तिस्तु "नेदं विस्मृतभक्तिना" (६६ पृ०) इत्यत्र विचारिता इति द्रष्टव्यम्]। स्वाम्यर्थं स्वामिकार्य्यं वैरनिर्य्यातनरूपम्, उद्वहन् साधयन्, पृथिव्यां स्वामिभक्तानां स्वामिभक्तिपरायणानां, परमे अनुपमे, प्रमाणे दृष्टान्ते, स्थितः। पथ्यावक्त्रं वृत्तम्॥ २२॥

राक्ष। सखे! शकटदास! अथ कोऽयम् अस्य मे हृदयानन्दस्य (भ) हेतुः?

शक। [सिद्धार्थकं निर्दिश्य]। अमात्य! प्रियसुहृदा सिद्धार्थकेन घातकान् विद्राव्य बध्यस्थानात् अपवाहितोऽस्मि (म)।

राक्ष। [सहर्षम्]। भद्र सिद्धार्थक! कामम् अपर्य्याप्तम् इदम् अस्य प्रियस्य, तथाऽपि गृह्यताम्। [इति स्वगात्रात् अवतार्य्य भूषणानि (य) प्रयच्छति]।

सिद्धा। [गृहीत्वा पादयोर्निपत्य स्वगतम्]। एदं क्खु अज्जोवदेसेण करिस्सं। [प्रकाशम्]। अमच्च! एत्थ मे पढमप्पविट्ठस्स णत्थि कोवि परिचिदो, जहिं एदं अमच्चस्स प्पसादं णिक्खिविअ णिव्वुदो भविस्सं; ता इच्छामि अहं इमाए मुद्दिआए मुद्दिदं अमच्चस्स ज्जेव भांडागारे णिक्खिविदुं। जदा मे एदिणा प्पओअणं भविस्सदि, तदा गेण्हिस्सं। * (र)

---

* इदं खलु आर्य्योपदेशेन करिष्यामि। अमात्य! अत्र मे प्रथमप्रविष्टस्य नास्ति कोऽपि परिचितः, यत्र इमम् अमात्यस्य प्रसादं निक्षिप्य निर्वृतो भविष्यामि; तदिच्छामि अहम् एतया मुद्रया मुद्रितम् अमात्यस्य एव भाण्डागारे निक्षेप्तुम्। यदा मम एतेन प्रयोजनं भविष्यति, तदा ग्रहीष्यामि।

---

(भ) हृदयानन्दस्य—चित्ताह्लादस्य, जीवतः भवतः यत् दर्शनं तस्य इत्यर्थः।

(म) विद्राव्य—ताडयित्वा। अपवाहितः,—अपसारितः, समानीतः इत्यर्थः।

(य) भूषणानि—मलयकेतुना प्राग्दत्तानि, तेन तद्भूषणानां लेख्यपत्रसह-भावेन सिद्धार्थकेन स्थापनादुत्तरत्र लेख्यस्य सत्यतायाः प्रचुरकारणसम्पत्तिर्भवि-ष्यतीत्यनुसन्धेयम्।

(र) आर्य्येत्यादि।—आर्य्योपदेशेन—आर्य्यस्य—चाणक्यस्य, उपदेशेन—आदेशेन, प्राक्प्रदर्शितेन इत्यर्थः। इदं—पारितोषिकभूषणम्। [इदमपरं बीजान्वेषणम्]। एतया—समपटदर्शिनः सकाशात् चाणक्येन अधिगतया मह्यं दत्तया। मुद्रया—राक्षसनामाङ्कितया, अङ्गुरीयस्यचिह्नविशेषेण इत्यर्थः। ग्रहीष्यामि—तव प्रतारणार्थं यदा कटकान्निर्य्यास्यामि तदा ग्रहीष्यामि इति गूढोऽर्थः।

राक्ष। भद्र! भवतु, को दोषः? शकटदास! एवं क्रियताम्।

शक। यत् आज्ञापयति अमात्य इति। [मुद्रां विलोक्य जनान्तिकम् (क)]। अमात्य! भवन्नामाङ्किता इयं मुद्रा।

राक्ष। [विलोक्य सविषादं सवितर्कञ्च आत्मगतम्]। कष्टम्! मदुत्कण्ठाविनोदार्थं नगरात् निष्क्रामतो मम हस्तात् ब्राह्मण्या (ख) गृहीता, तत् कथम् अस्य हस्तम् उपगता? [प्रकाशम्]। भद्र! सिद्धार्थक! कुतः त्वया इयम् अधिगता?

सिद्धा। अमच्च! अत्थि कुसुमपुरणिवासी मणिआरसेट्ठी चंदणदासो णाम। तस्स गेहदुआरे भूमिए पड़िदा, मए समासादिदा। *

राक्ष। युज्यते।

सिद्धा। अमच्च! किं एत्थ जुज्जदि? † (ग)

---

* अमात्य! अस्ति कुसुमपुरनिवासी मणिकारश्रेष्ठी चन्दनदासो नाम, तस्य गेहद्वारे भूमौ पतिता, मया समासादिता। ["समासादिदा" इत्यत्र "लद्धा" इति पाठे—"लब्धा" इति सं]।

† अमात्य! किमत्र युज्यते?

---

(क) जनान्तिकं—"जनान्तिकन्तु तत् प्रोक्तं यत् तृतीयाद्यगोचरम्" इति, तथा—"त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम्। अन्योऽन्यामन्त्रणं यत् स्याज्जनान्ते तज्जनान्तिकम्॥" इत्युक्तलक्षणकं जनान्तराणामश्राव्यरूपेण भाषणम्।

(ख) निष्क्रामतः,—बहिर्गच्छतः। [अत्र अप्रथमासमानाधिकरणत्वात् शतृप्रत्ययः, तस्मिंश्च "वा भ्राशभ्लाशभ्रमु—" (३।१।७० पा०) इति श्यनो वैकल्पिकत्वात् शप्, ततश्च "क्रमः परस्मैपदेषु" (७।३।७६ पा०) इति दीर्घः]। ब्राह्मण्या—मत्पत्न्या।

(ग) "युज्यते" इति राक्षसवाक्यं श्रुत्वा संशयानः, अनेन मुद्रायाः कौशल्येन किञ्चित् क्रियते इति विदन्नपि अज्ञ इव पृच्छति—अमात्येति।

राच। भद्र! यतो महाधनानां द्वारि पतितस्य एवंविधस्य उपलब्धिरिति। (ष)

शक। सखे सिद्धार्थक! अमात्यनामाङ्किता इयं मुद्रा, तदितो बहुतरेण अर्थेन (स) भवन्तम् अमात्यः तोषयिष्यति, तत् दीयताम् एषा मुद्रा।

सिद्धा। अज्ज! एसो मे परितोसो जं, अमच्चो इमाए मुद्दाए परिग्गहप्पसादं (ह) करेदि त्ति। * [इति मुद्रां समर्पयति]।

राच। सखे शकटदास! अनया एव मुद्रया स्वाधिकारे व्यवहर्त्तव्यं भवता।

शक। यत् आज्ञापयति अमात्यः।

सिद्धा। अमच्च! विण्णवेमि किं पि। †

राच। भद्र! विस्रब्धं ब्रूहि।

सिद्धा। जाणादि ज्जेव अमच्चो, जधा चाणक्कहदअस्स विप्पिअं कदुअ णत्थि मे पुणो पाडलिउत्ते प्पवेसो त्ति, ता इच्छामि अहं अज्जस्स ज्जेव सुप्पसण्णे पादे सेविदुं। ‡

---

* आर्य्य! एष मे परितोषो यत्, अमात्यः अस्याः मुद्रायाः परिग्रहप्रसादं करोतीति।

† अमात्य! विज्ञापयामि किमपि।

‡ जानात्येव अमात्यः, यथा चाणक्यहतकस्य विप्रियं कृत्वा नास्ति मे पुनः पाटलिपुत्रे प्रवेश इति, तदिच्छामि अहम् अमात्यस्य एव सुप्रसन्नौ पादौ सेवितुम्।

---

(ष) स्वकलत्रस्य तत्र स्थितिकाले चन्दनदासगृहद्वारे मुद्रिकापतनं भवितुमर्हतीत्यभिप्रायेण शकटदासं प्रति उक्तमपि "युज्यते" इति वाक्यं सिद्धार्थकं प्रति निगूढमार्थमन्यथाऽर्थपरतया कथयन्नाह, यतो महाधनानामिति।

(स) इतः,—मुद्रामूल्यात्। बहुतरेण—अत्यधिकेन। मुद्रा—अङ्गुरीयकम्: चिह्नविशेषः।

(ह) यदर्थं नियमानीता तत् सिद्धमिति गूढार्थः।

राच। भद्र ! प्रियं नः, किन्तु त्वदभिप्रायपरिज्ञानेन अन्तरितोऽस्माकम् अनुनयः। (क) तत एवं क्रियताम्।

सिद्धा। [ सहर्षम् ]। अणुग्गहिदोम्हि। *

राच। सखे शकटदास ! विश्रामय सिद्धार्थकम्।

शक। यत् आज्ञापयति अमात्यः।

[ इति सिद्धार्थकेन सह निष्क्रान्तः ]।

राच। सखे विराधगुप्त ! वर्णय इदानीं कुसुमपुरवृत्तान्तशेषम्। अपि क्षमन्ते कुसुमपुरनिवासिनोऽस्मदुपजापं (ख) चन्द्रगुप्तप्रकृतयः ?

विरा। अमात्य ! वाढं क्षमन्ते, ननु यथाप्रधानम् अनुगच्छन्ति एव। (ग)

राच। सखे ! किं तत्र कारणम् ? (घ)

---

* अनुगृहीतोऽस्मि।

---

(क) त्वदभिप्रायपरिज्ञानेन—तवाभिप्रायं परिज्ञाय इत्यर्थः। अन्तरितः,—तिरोहितः; अस्माभिर्भवादृशं मित्रमनुनीय स्वनिकटे रक्षितुं यत्नः कर्त्तव्य आसीत्, स तु भवद्वचनेन एव अनायासलब्धः संवृत्त इति भावः। [ "त्वदभिप्रायापरिज्ञानेन" इति पाठे—अन्तरितः,—विलम्बितः ]।

(ख) अपि क्षमन्ते ?—सहन्ते किम् ? अस्मदुपजापम्—अस्माभिः कृतं परस्परभेदं, तत्र न विरक्ताः ? इत्यर्थः।

(ग) वाढमित्युक्ताङ्गीकारद्योतकमव्ययम्। "क्षमन्ते" इत्यत्र प्रागुक्तवाक्यस्थमुपजापमिति पदं कर्मतयाऽन्वेति; न केवलं क्षमन्ते, ननु मन्ये इत्यर्थः, तमुपजापमनुगच्छन्ति—अनुसरन्त्येव, परस्परभेदरूपं तत्कार्य्यमनुभवन्त्येव इत्यर्थः। न केवलं प्रकृतय एव, किन्तु प्रधानादयो राजामात्यादयोऽपीत्याह, यथाप्रधानमिति।—प्रधानं—राजा चन्द्रगुप्तः तन्मन्त्री चाणक्यश्च, तमनतिक्रम्य तौ अपि परस्परभेदं प्राप्नुतः, किं पुनः अपरे तदनुवर्त्तिनः राजपुरुषा इत्यर्थः। अनुगच्छन्ति—परस्परभेदरूपं कार्य्यमनुसरन्तीत्यर्थः; वक्ष्यति चैतत् पञ्चमाङ्के—"प्राक्परिगृहीतोपजापैः" इत्यादि।

(घ) प्रधानयोः राजामात्ययोः भेदे कारणं पृच्छति, किं तत्रेति।—तत्र—परस्परभेदे।

विरा। अमात्य ! इदं तत्र कारणं—मलयकेतोः अपक्रमणात् प्रभृति पीड़ितः चन्द्रगुप्तेन चाणक्य इति। चाणक्योऽपि जितकाशितयाऽसहमानः तैः तैः आज्ञाभङ्गैः चन्द्रगुप्तस्य चेतसः पीड़ाम् उपचिनोति, अयमपि मम अनुभवः। (ङ)

राक्ष। [ सहर्षम् ]। सखे विराधगुप्त ! तद्गच्छ त्वम् अनेन आहितुण्डिकच्छद्मना पुनः कुसुमपुरमेव। तत्र हि मे सुहृत् वैतालिकव्यञ्जनः (च) स्तनकलसो नाम प्रतिवसति। स त्वया मद्वचनात् वाच्यः, यथा "चाणक्येन क्रियमाणेषु आज्ञाभङ्गेषु चन्द्रगुप्तः त्वया समुत्तेजनसमर्थैः श्लोकैः उपश्लोकयितव्यः" (छ) इति। कार्य्यञ्च अतिनिभृतं करभकहस्तेन सन्देष्टव्यम् इति।

विरा। यत् आज्ञापयति अमात्यः।

[ इति निष्क्रान्तः ]।

पुरुषः। [ प्रविश्य ]। जेदु जेदु अमच्चो। अमच्च ! सअड़दासो विण्णवेदि, 'एदे क्खु तिण्णि अलंकारविसेसा विक्कीअंति, ता पच्चक्खीकरेदु अमच्चो'। * (ज)

---

* जयति जयति अमात्यः। अमात्य ! शकटदासो विज्ञापयति, 'एते खलु त्रयोऽलङ्कारविशेषा विक्रीयन्ते, तत् प्रत्यक्षीकरोतु अमात्यः'।

---

(ङ) पीड़ितः,—विरक्तीकृतः। जितकाशितया—जितेन—विपक्षपराजयेन, काशते—स्फुरते इति जितकाशी—गर्वितः, तस्य भावः जितकाशिता तया। उपचिनोति—वर्द्धयति। अयमपीति।—इत्थं तद्वृत्तान्तं मया अनुभूतैव आगतमित्यर्थः। [ इदमपि बीजान्वेषणम् ]।

(च) वैतालिकव्यञ्जनः,—छद्मना राज्ञां निद्राभङ्गकारकवेशधारी उदयोत्साहकाभिनववाक्यपाठकश्च, यः निद्रितान् जाग्रतोऽपि भूपतिप्रभृतीन् स्तुतिपाठादिना प्रातः प्रबोधयति, समयान्तरे कर्त्तव्याभिनिवेशे उत्साहयति च, स इत्यर्थः।

(छ) उपश्लोकयितव्यः,—श्लोकेन उपस्तोतव्य इत्यर्थः।

(ज) एतदलङ्कारविक्रेतारश्च चाणक्यप्रणिधयः, ते च चाणक्योपदेशेन मत-

राक्ष। [विलोक्य आत्मगतम्]। अहो! महार्हाणि आभरणानि। [प्रकाशम्]। भद्र! उच्यतां शकटदासः, "परितोष्य विक्रेतारं गृह्यन्ताम्" इति।

पुरु। जं अमच्चो आणवेदि। *

[इति निष्क्रान्तः]।

राक्ष। [स्वगतम्]। यावत् अहमपि कुसुमपुराय करभकं प्रेषयामि। [उत्थाय]। अपि नाम दुरात्मनः चाणक्यहतकात् चन्द्रगुप्तो भिद्येत? (भ) अथवा सिद्धमेव समीहितं पश्यामि। कुतः?—

मौर्य्यस्तेजसि सर्वभूतलभुजामाज्ञापको वर्त्तते,
चाणक्योऽपि मदाश्रयादयमभूत् राजेति जातस्मयः।

---

* यदमात्य आज्ञापयति।

---

पर्वतेश्वराङ्गधृतालङ्कारत्रयं राक्षससमीपे विक्रेतुमागताः; तच्च क्रीत्वा स्वशरीरे राक्षसेन धृत्वा मलयकेतोः समीपे यास्यते, तद्दृष्ट्वा चाग्रे दर्शयिष्यमाणः राक्षसेन मलयकेतोर्भेदो भविष्यति, तथा लेख्यपत्रे लिखितस्य पत्रस्याशून्यतार्थमित्यादिकभागस्य एतदलङ्कारत्रयेण सुसंवादिता भविष्यतीत्यतः राक्षससमीपे तद्विक्रयणमिति द्रष्टव्यम्। [इदमपि बीजान्वेषणम्]।

(भ) ततः प्रभृति चन्द्रगुप्तदृष्टे स्वहस्तगृहणमप्रमत्तः चाणक्य इति श्रुत्वा तद्वधोपाये निराशः सन् राक्षसः "आशा बलवती राजन्! शल्यो जेष्यति पाण्डवान्" इति न्यायेन अतः परं स्तनकलशद्वारा मौर्य्य-चाणक्ययोर्मिथो विरोधोत्पादनेन स्वेष्टसिद्धिं समाशंसते—अपि नामेति।

स्वस्वप्रयोजनमुद्दिश्यैव सर्वे इतरानपेक्षन्ते, एतौ च चाणक्य-चन्द्रगुप्तौ प्रतिज्ञा-पूरणेन राज्यप्राप्त्या च कृतकृत्याविति न तयोरितरेतरापेक्षाऽस्तीति भेदः सुखेन भवितुमर्हतीत्याह, मौर्य्य इति।—मौर्य्यश्चन्द्रगुप्तः, सर्वभूतलभुजां सर्वेषां राज्ञाम्, आज्ञापकः शासिता, सम्राडित्यर्थः, अत एव तेजसि गर्वे, वर्त्तते, तेजस्वी सम्पन्न इत्यर्थः। चाणक्योऽपि अयं चन्द्रगुप्तः, मदाश्रयात् राजा अभूत् इति जातस्मयः सञ्जात-

राज्यप्राप्तिकृतार्थमेकमपरं तीर्णप्रतिज्ञाऽर्णवं,
सौहार्दात् कृतकृत्यतैव नियतं लब्धान्तरा भेत्स्यति ॥ २२ ॥

[ इति निष्क्रान्ताः सर्वे ]।

इति द्वितीयोऽङ्कः ॥ २ ॥

---

गर्वः, यतः लब्धान्तरा प्राप्तावसरा, कृतकृत्यता कृतार्थता एव, राज्यप्राप्त्या कृतार्थं सिद्धकामम्, एकं चन्द्रगुप्तं, तीर्णप्रतिज्ञाऽर्णवम् अपरं चाणक्यञ्च, सौहार्दात् नियतं निश्चितं, भेत्स्यति पृथक् कारिष्यतीत्यर्थः ; एतौ कृतकृत्यतया अन्योऽन्यं निरपेक्षौ केनचित् कारणेन विरोधे सति पुनर्न सन्धास्येते इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

इत्थं पताका प्राप्त्याशाऽऽनुगुण्येन गर्भसन्धेर्द्वादशाङ्गानि निरूपितानि, गर्भसन्धिश्च समाप्तः।

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन कुलपतिकल्प-"बि, ए" इत्युपनामक-
श्रीमज्जीवानन्दविद्यासागर-भट्टाचार्य्यविरचितायां, तदात्मजाभ्यां
श्रीमदाशुबोधविद्याभूषण श्रीमन्नित्यबोधविद्यारत्नाभ्यां
परिवर्त्तित परिवर्द्धितायां सुखबोधिनी-
समाख्यायां मुद्राराक्षसव्याख्यायां
द्वितीयोऽङ्कः।

## तृतीयोऽङ्कः।

[ ततः प्रविशति कञ्चुकी ]।

कञ्चु।—

रूपादीन् विषयान् निरूप्य करणैः येरात्मलाभस्त्वया
लब्धस्तेष्वपि चक्षुरादिषु हताः स्वार्थावबोधक्रियाः।

---

अथ राक्षसेन अभिलष्यमाणं चाणक्य-चन्द्रगुप्तयोः विरोधं कथयितुं विमर्शसन्धिः आरभ्यते।—तृतीयचतुर्थौ अङ्कौ विमर्शसन्धिः, "गर्भसन्धौ प्रभिन्नस्य बीजार्थस्याव-मर्शनम्। हेतुना येन केनापि विमर्शः सन्धिरुच्यते॥" इति लक्षणात्। गर्भसन्धौ प्रभिन्नस्य मुहुरन्विष्टस्य चाणक्यनीतिरूपस्य बीजस्य कौमुदीमहोत्सवप्रतिषेधादिना प्रकारेणान्यथा कथया च अवमर्शनात् अनुसन्धानात् नियताप्ति-प्रकर्य्योः सम्बन्धस्य चात्र सत्त्वात् तृतीयेऽङ्के नियताप्तिः, चतुर्थे अङ्के राक्षस-चारसंवादरूपा कथा प्रकरी वर्त्तते। नियताप्ति-प्रकर्य्यानुगुण्येनास्य सन्धेस्त्रयोदशाङ्गानि—"तत्राप-वादसम्फेटौ विद्रवद्रवशक्तयः। द्युतिः प्रसङ्गश्छलनं व्यवसायो विरोधनम्। प्ररोचना विचलनमादानञ्च त्रयोदश॥" इति। तत्र तावत् प्रथमं कञ्चुकिवाक्येन चाणक्य-चन्द्रगुप्त कृतक-कलहनिदानस्य कौमुदीमहोत्सवव्यापारवर्णनस्य प्रच्छन्नविष्कम्भकत्वेन कथामुपक्षिपति कविरिति।

महाराज-मौर्य्यादिष्टस्यापि कौमुदीमहोत्सवस्य एकचाणक्यनामधेय द्विजप्रति-षिद्धत्वे एव सर्वेषां तदङ्गीकरणमनुचिन्तयन् स्वस्य जरया जनितामवस्थां वर्णयन्नाह, रूपादीनिति।—हे तृष्णे! त्वया यैः करणैरिन्द्रियैः, रूपादीन् रूपप्रभृतीन्, विषयान् इन्द्रियग्राह्यपदार्थानित्यर्थः, (अत्र "रूपं शब्दो गन्ध-रस स्पर्शाश्च विषया अमी" इत्यमरोक्तेः विषयशब्देनैव रूपादीनां प्राप्तावपि पुनः "रूपादीन्" इति कथनं गोबलीवर्दन्यायेन न दोषावहम्) निरूप्य परिच्छिद्य, अनुभूयेत्यर्थः, [आत्मकर्तृक-स्याप्यवबोधस्य तृष्णाकर्तृकत्वमिहोपचर्य्यते] आत्मलाभः स्वरूपलाभः, सत्तया स्थितिरिति यावत्, लब्धः प्राप्तः, [विषयध्यानेनैव तृष्णाया उत्पत्तेः शास्त्रे भूरिशो दर्शितत्वात् "ग्रामं वसति" इत्यादिवत् एकस्य लभेः इह व्यापारार्थकत्व-चात्मर्थपरता, तेन नानन्वयः]। सम्प्रति जरायां तेषु आत्मलाभोपायेषु, चक्षुरादिषु चक्षुःप्रभृतिषु,

अङ्गानि प्रसभं त्यजन्ति पटुतामाज्ञाविधेयानि मे
न्यस्तं मूर्ध्नि पदं तवैव जरया तृष्णे! मुधा माद्यसि ॥१॥

[परिक्रम्य आकाशे]। भो भोः सुगाङ्गप्रासादाधिकृताः पुरुषाः! सुगृहीतनामा देवः चन्द्रगुप्तो वः समाज्ञापयति, यथा— 'प्रवृत्तकौमुदीमहोत्सवरमणीयतरं (क) कुसुमपुरम् अवलोकयितुम् इच्छामि, तत् संस्क्रियन्ताम् अस्मद्दर्शनयोग्याः सुगाङ्गप्रासादस्य उपरि भूमयः' इति। तत् किं चिरयन्ति भवन्तः? [आकाशे आकर्ण्य]। किं ब्रूथ "आर्य्य! किम् अविदित एवायं

---

इन्द्रियेषु अपि स्वार्थावबोधक्रियाः स्वस्वविषयग्रहणरूपव्यापाराः, हताः नष्टाः, जरायाम् इन्द्रियाणां सम्यग्बोधाभावस्य लोकसिद्धत्वादिति भावः। एवं ज्ञानेन्द्रियाणामपाटवमुक्त्वा तत्प्रयोज्यानां कर्मेन्द्रियाणामपि अपाटवमाह, अङ्गानीति।—मे मम, आज्ञाविधेयानि पूर्वम् आदेशानुवर्त्तीनि, वशीभूतानीत्यर्थः, ["अद्याविधेयानि" इति पाठे—अद्य अधुना, अविधेयानि अवशीभूतानि इति विशेषः] अङ्गानि हस्तपदादीनि, प्रसभं हठात्, सहसेति यावत्, पटुतां स्वस्वकार्य्यादानगतिभोजनादिषु सामर्थ्यं, त्यजन्ति जहति, किमु वक्तव्यं तव, तव एव मूर्द्धि शिरसि, जरया वार्द्धकेन, पदं न्यस्तं दत्तं, तव सर्वं स्वातन्त्र्यं नाशितमित्यर्थः, तथा च, सर्वथैव तव कामाभावात् त्वं मुधा वृथा, माद्यसि फलं विना एव वर्द्धिष्यसे, विषयभोगार्थमेव तृष्णा जायते, विषयभोगश्च इन्द्रियपाटवमन्तरेण दुर्घटः, इत्यतो जरायां तृष्णा विफलैव इति भावः। [एतेन श्लोकेन कौमुदीमहोत्सवः मौर्य्यादिष्टोऽपि चाणक्यनिषिद्धतया जरायां तृष्णोद्गम इव विफलतां भजते इति ध्वन्यते। एवमत्र लिङ्गसाम्यात् प्रस्तुतायां जरायां प्रबलपराक्रमवत्याः अप्रस्तुतायाः नायिकायाः अभ्युदयव्यवहारस्य तथा प्रस्तुतायां तृष्णायाम् अप्रस्तुतायाः कस्याश्चित् व्यर्थमादनव्यवहारस्य समारोपात् समासोक्तिः मत्तताकारणाभावेन तत्कार्य्योत्पत्तेरुपजायमानया विभावनया सङ्कीर्य्यते। कञ्चुकिनिर्वेदो हि नाटके वर्णनीयः इति साम्प्रदायिकाः]। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

(क) सुगृहीतनामेति।—"स सुगृहीतनामा स्यात् यः प्रातरनुचिन्त्यते" इत्युक्तेः प्रातःस्मरणीयनामेत्यर्थः। प्रवृत्तकौमुदीमहोत्सवरमणीयतरं—प्रवृत्तः,—प्रारब्धः, यः कौमुदीमहोत्सवः,—शारदपौर्णमास्यां करणीयः महाऽऽनन्दजनकव्यापारविशेषः, तेन रमणीयतरं—सुतरांरमणीयम्।

देवस्य चन्द्रगुप्तस्य कौमुदीमहोत्सवप्रतिषेधः" इति ? आः दैवोपहताः ! किम् अनेन वः प्राणहरेण कथोद्घातेन ? (ख) शीघ्रम् इदानीम्—

आलिङ्गन्तु गृहीतधूपसुरभीन् स्तम्भान् पिनद्धस्रजः
सम्पूर्णेन्दुमयूखसंहतिरुचां सच्चामराणां श्रियः ।
सिंहाङ्कासनधारणाच्च सुचिरं सञ्जातमूर्च्छामिव
क्षिप्रं चन्दनवारिणा सकुसुमः सेकोऽनुगृह्णातु गाम् ॥२॥

[आकाशे]। किं कथयन्ति भवन्तः "एते त्वरामहे" इति ? भद्राः ! त्वरध्वम्, अयमागत एव देवः चन्द्रगुप्तः । य एषः,—

सुविश्रब्धैरङ्गैः पथिषु विषमेष्वप्यचलता
चिरं धुर्य्योणोढा गुरुरपि भुवो याऽस्य गुरुणा ।

---

(ख) अयं—चाणक्येन क्रियमाण इत्यर्थः। [इदन्तु वीजस्य चाणक्यनीतेरवमर्शनम्]। प्राणहरेण इति।—राज्ञामनभिमतविषयत्वेन तस्य प्राणदण्डफलकत्वात् प्राणहरत्वम्। कथोद्घातेन—कथाप्रसङ्गेन।

केन रूपेण कौमुदीमहोत्सवः करणीय इति आह, आलिङ्गन्त्विति।—सम्पूर्णेन्दुमयूखसंहतिरुचां पूर्णचन्द्रकिरणसमूहतुल्यकान्तीनां, सच्चामराणां सुशुभ्रबालव्यजनानां, श्रियः शोभाः, पिनद्धस्रजः माल्यवेष्टितान्, गृहीतधूपसुरभीन् धृतधूपसौरभान्, स्तम्भान्, प्रासादस्थेति शेषः, आलिङ्गन्तु आश्रयन्तु ; तथा च, स्तम्भान् धूपसौरभान्वितान् विधाय माल्यभूषितान् कृत्वा शोभार्थं शुभ्रचामरान्वितान् कुरुत इति नियोगः। सुचिरं सन्ततं, सिंहाङ्कासनधारणात् सिंहाङ्कासनस्य सिंहचिह्नितस्य राजासनस्य, धारणात्, अथ च सिंहेन स्वक्रोडरूपासने धारणात्, सञ्जातमूर्च्छां बहुभारधारणात् सिंहभयाच्च मूर्च्छितामिव, गां भूमिं सौरभेयीञ्च, सकुसुमः पुष्पसहितः, चन्दनवारिणा मलयजसम्पृक्तसलिलेन, सेकः क्षिप्रं शीघ्रम्, अनुगृह्णातु ; यथा सिंहक्रोडपतिता अत एव मूर्च्छिता काचित् गौः जलादिसेकादाश्वास्यते, तथा गुरुभारसिंहासनधारणात् श्रान्ता भूमिः चन्दनवारिणा आश्वास्यतामिति भावः। [अत्र आलिङ्गनादिकार्य्यसाम्यात् लिङ्गसाम्याच्च समासोक्तिः संहतिरुचामित्युपमया, सिंहाङ्केति गामिति च श्लेषेण, मूर्च्छामिव इत्युत्प्रेक्षया च संसृष्टा]। शार्दूलविक्रीडितं वृत्तम् ॥ २ ॥

"अयमागत एव" इति प्रत्यक्षस्य चन्द्रगुप्तस्य तदानीन्तनीमवस्थां वर्णयन्नाह,

धुरं तामेवोच्चैर्नववयसि वोढुं व्यवसितो
मनस्वी दम्यत्वात् स्खलति न च दुःखं वहति च ॥ ३ ॥

[ नेपथ्ये ] । इत इतो देव : । (ग)

[ ततः प्रविशति राजा प्रतीहारी च ] ।

राजा । [ स्वगतम् ] । राज्यं हि नाम राजधर्मानुवृत्तिपरतन्त्रस्य (घ) भूपतेः महदप्रीतिस्थानम् । यतः,—

परार्थानुष्ठाने जडयति नृपं स्वार्थपरता,
परित्यक्तान्यार्थो नियतमयथार्थः क्षितिपतिः ।

---

सुविश्रब्धैरिति ।—विषमेषु उच्चावचेषु दुरवगाह्येषु च अपि, अतः सर्वथा स्खलनसम्भावना इति भावः, पथिषु मार्गेषु राजनीत्यादिषु च, अचलता अस्खलता, धैर्य्यमासेदुषा इत्यर्थः, धुर्य्येण भारवहनक्षमेण प्राप्तदम्यावस्थेन च, यस्य चन्द्रगुप्तस्य, गुरुणा जनकेन प्रकृतनन्देन, ( चन्द्रगुप्तस्य मुरायां प्रकृतनन्देनैव उत्पादात् ) भुवः पृथिव्याः, या गुरुरपि धूः भारश्चिन्ता च, सुविश्रब्धैः सुविश्वस्तैः सुदृढैश्च, अङ्गैः अमात्यादिभिः स्कन्धादिभिश्च उह, चिरम् ऊढा धृता, नववयसि यौवने, मनस्वी प्रशस्तमनाः, महानुभावः इत्यर्थः, तामेव उच्चैः महतीं, धुरं भारं चिन्तां च, वोढुं व्यवसितः उद्यतः, दम्यत्वात् विनेयत्वात्, अनतिप्रौढत्वादित्यर्थः, स्खलति किञ्चित् खिद्यते, मनस्वित्वात् उत्साहवत्त्वाच्च दुःखं न वहति च । [ गुरुभारस्य वहने खेदाद्यवश्यम्भावेऽपि नास्य दुःखमिति आधिक्यकथनात् व्यतिरेकालङ्कारः सुविश्रब्धैः अङ्गैः पथिषु विषमेषु इत्यादिश्लिष्टपदन्यासप्रतिभोत्थापितः समेन कार्य्येण भारवहनरूपेण प्रस्तुते नवनरेन्द्रे अन्यस्य अप्रस्तुतस्य बालवृषभस्य व्यवहारसमारोपात् समासोक्तिनिर्व्यूढः ] । शिखरिणी वृत्तम् ॥ ३ ॥

(ग) इत इत इति ।—[ इयं चूलिका—"अन्तर्जवनिकासंस्थैः चूलिकार्थस्य सूचना" इति लक्षणात् ] ।

(घ) राजधर्मानुवृत्तिपरतन्त्रस्य—राजधर्मस्य शास्त्रविहितस्य अनुवृत्तिः,—अनुसरणं, तत्र परतन्त्रः,—पराधीनः तस्य ।

प्रजापालनरूपराजधर्मानुवृत्तौ तदायत्तस्य नृपतेर्न सुखं "सर्वं परवशं दुःखम्" इति मनूक्तेरित्याह, परार्थेति ।—परार्थानुष्ठाने परेषां कार्य्यदर्शनादिव्यापारे, स्वार्थपरता स्वकार्य्यसाधनप्रवृत्तिः, नृप जडयति स्तब्धीकरोति, किं स्वार्थं परार्थं वा सम्पाद-

परार्थश्चेत् स्वार्थादभिमततरो हन्त परवान्,
परायत्तः प्रीतेः कथमिव रसं वेत्तु पुरुषः ? ॥ ४ ॥

अपि च, दुराराध्या हि राजलक्ष्मीः आत्मवद्भिः अपि (ङ) राजभिः। कुतः ?—

तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न सन्तिष्ठते,
मूर्खान् द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि।
शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो !
श्रीर्लब्धप्रसरेव वेश्यवनिता दुःखोपचर्य्या भृशम् ॥ ५ ॥

---

यामि इत्यत्र सन्देहात् निश्चलमिव करोतीत्यर्थः। ["जडयति" इत्यत्र "रहयति" इति पाठे—त्यजति]। "सर्वः स्वार्थं समीहते" इत्युक्तेः स्वार्थपरः सन् प्रवर्त्ततां, किं परार्थानुष्ठानेन ? इत्यत आह, परित्यक्तेति।—परित्यक्तान्यार्थः अनादृतपरार्थः, ["परित्यक्तस्वार्थः" इति पाठान्तरे—क्षितिपतिः क्षितिपतिशब्दः, परित्यक्तः स्वार्थः क्षितिपालनकर्तृत्वरूपः अवयवार्थो येन तादृशः, त्यक्तनिजकार्य्यः; तेन न उद्देश्यविधेययोरैक्यदोषः] क्षितिपतिः पृथिवीपतिः, नियतं निश्चितम्, अयथार्थः अननुगतनामा, अयथार्थनामा इत्यर्थः, परकार्य्यकरणेन एवास्य क्षितिपतित्वम्, अन्यथा विफलमिति भावः, तथा च, क्षितिपतिना स्वार्थं परित्यज्य परार्थे एव प्रवर्त्तितव्यम् इत्याशयः। एवञ्च परार्थः परकार्य्यं, स्वार्थात् स्वकार्य्यात्, अभिमततरः प्रियतरश्चेत्, तर्हि परवान् परार्थप्रवृत्तिमत्त्वेन पराधीनः, भवेदिति शेषः; हन्तेति खेदद्योतनार्थमव्ययम्। एवञ्च परायत्तः पराधीनः, पुरुषः कथमिव केन प्रकारेण, प्रीतेः सुखस्य, रसम् आस्वादं, वेत्तु ? अनुभवतु ? रस-वेदनयोस्तुल्यार्थत्वेनैकस्य वेदनस्येह व्यर्थता। शिखरिणी वृत्तम् ॥ ४ ॥

(ङ) आत्मवद्भिः अपि—समाहितचित्तैरपि, वशीकृतेन्द्रियैरपि इति यावत्, किं पुनरजितेन्द्रियैः इति भावः।

लक्ष्म्याः दुराराध्यत्वमेव इदानीं विवृणोति, तीक्ष्णादिति।—अहो !! इति आश्चर्यसूचकमव्ययम्। श्रीः लक्ष्मीः, तीक्ष्णात् उग्रात् जनात्, उद्विजते कदाचित् क्रुद्धो मां नाशयेदिति उद्विग्ना भवति, परिभवत्रासात् अवज्ञातावमानभयात्, मृदौ शान्तस्वभावे, अविक्रान्ते इति यावत्, न सन्तिष्ठते, ["समवप्रविभ्यः स्थः" (१।३।२२ पा०) इति तङ्] मूर्खान् अज्ञान्, अविवेकिन इत्यर्थः, सुविचारणाभावादिति भावः, द्वेष्टि,

अन्यच्च—"कृतककलहं कृत्वा स्वतन्त्रेण त्वया कञ्चित् कालं व्यवहर्त्तव्यम्" इत्यार्य्योपदेशः, स च कथमपि मया पातकम् इवाभ्युपगतः । (च) अथवा शश्वत् आर्य्योपदेशसंस्क्रियमाणमतयः सदा एव अस्वतन्त्रा वयम् ; कुतः ?—

इह हि रचयन् साध्वीं शिष्यः क्रियां न निवार्य्यते,
त्यजति तु यदा मार्गं मोहात् तदा गुरुरङ्कुशः ।
विनयरुचयस्तस्मात् सन्तः सदैव निरङ्कुशाः,
परतरमतः स्वातन्त्र्येभ्यो वयं हि पराङ्मुखाः ॥ ६ ॥

---

अत्यन्तविरक्ता विशिष्टविद्यावत्सु अपि, प्रणयिताम् अनुरागं, न गच्छति, विद्यायामेव तेषामनुरागो विरागकारणमिति भावः ; शूरेभ्यः वीरेभ्यः अपि, अधिकं बिभेति, प्रबलेभ्यः पराभूय कदा मां शत्रुहस्तं नेष्यतीति सम्भावनयेति भावः ; एकान्तभीरून् अतिभयशीलान्, उपहसति ; भीरुरयं भयेन कदा परहस्तमर्पयिष्यतीति शङ्कया इति भावः ; लब्धप्रसरा क्रमशः प्राप्तप्रतिष्ठा, कामुकवशीकरणेन लब्धप्रागल्भ्या इति यावत्, वेश्यवनितेव वाराङ्गनेव, भृशम् अत्यर्थं, दुःखोपचर्य्या दुःखेन सेव्या । ["गद-मदचरयमश्चानुपसर्गे" (३।१।१०० पा०) इति सूत्रे अनुपसर्गादेव चरतेः यद्-विधानात् "उपचर्य्या" इत्यादि प्रयोगः कवीनां निरङ्कुशत्वात् सहनीयः ; चर्य्येति साधयित्वा पश्चात् प्रादिसमासः इति वा ]। यथा तीक्ष्णतादयो दोषा एकान्त-विरक्तादयश्च गुणा न भवेयुः, राज्ञा लक्ष्मीस्थैर्य्याय तथा यतितव्यम् इति भावः। [अत्रैकस्या राज्यश्रियः कर्त्तृत्वेनानेकक्रियासम्बन्धनिबन्धना पादत्रय्यां दीपकालङ्कृतिः चतुर्थपादे श्लिष्टया उपमया संसृष्टा ]। शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

(च) अभ्युपगतः,—अङ्गीकृतः ।

आर्य्योपदेशग्रस्तानां सततमस्वातन्त्र्यमुपपादयितुम् आह, इहेति ।—इह अस्मिन् जगति, साध्वीं क्रियां सत्कार्य्यं, रचयन् कुर्वन्, शिष्यः न निवार्य्यते न निरुध्यते, गुरुणेति शेषः, अपि त्वनुमोद्यते इत्यर्थः ; यदा तु मोहात् अज्ञानात्, मार्गं पन्थानं, सदाचाररूपमिति यावत्, त्यजति, तदा गुरुः अङ्कुशः तत्र गमननिवारकाङ्कुशविशेषतुल्यः, भवतीति शेषः ; तस्मात् विनयरुचयः विनये गुरुकृतशिक्षणे, रुचिर्येषां ते विनीताः इत्यर्थः, सन्तः साधुशीलाश्च, सदा एव निरङ्कुशाः निरोधशून्याः, स्वतन्त्रा एव इति यावत्, गुरवस्तान् न निवारयन्तीत्यर्थः ; अतः कारणात्, वयं हि नियतं, स्वातन्त्र्येभ्यः

[प्रकाशम्]। आर्य्य वैहीनरे! सुगाङ्गप्रासादमार्गम् (छ) आदेशय।

कञ्चु। इत इतो देवः।

राजा। [परिक्रामति]।

कञ्चु। [परिक्रम्य]। अयं सुगाङ्गप्रासादः, शनैः आरोढु-मर्हति (ज) देवः।

राजा। [नाट्येन आरुह्य दिशोऽवलोक्य]। अहो! शरत्समय-सम्भृतशोभाविभूतीनां दिशाम् अतिरमणीयता!! कुतः?—

शनैः शान्ता भूताः सितजलधरच्छेदपुलिनाः,
समन्तादाकीर्णाः कलविरुतिभिः सारसकुलैः।
चिताः चित्राकारैर्निशि विकचनक्षत्रकुमुदैः
नभस्तः स्यन्दन्ते सरित इव दीर्घा दश दिशः॥ ७॥

---

स्वाधीनतायाः, परतरम् अत्यन्तं यथा तथा, पराङ्मुखाः, भवेम इति शेषः। यद्वा—अतः परतरम् अत उत्तरकाले, ["कालाध्वनोरत्यन्तसंयोगे" (२।३।५ पा०) इति द्वितीया] अतः परं कदाऽपि स्वातन्त्र्यं नेच्छामः, आर्य्याधीना एव सर्वदा वर्त्तामहे इति भावः। हरिणी वृत्तं—"नसमरसला गः षड्वेदैः हयैर्हरिणी मता" इति लक्षणात्। एतच्छन्दसः प्रस्तारस्य ४६११२ सङ्ख्यकः॥ ६॥

(छ) सुगाङ्गेत्यादि।—सु—सुलभं, गाङ्गं यत्र तादृशस्य तन्नामकस्य वा, प्रासादस्य मार्गं—गमनपथम्। प्राक् "सुगाङ्गे हेमाङ्गम" इत्यत्र सुगाङ्गशब्दस्य प्रासादनामपरत्वेन तन्नामके प्रासादे इत्यर्थो द्रष्टव्यः इति केचित्।

(ज) आरोढुम्—उपरि उत्थातुम्। ["शकधृष······सहार्हास्त्यर्थेषु तुमुन्" (३।४।६५ पा०) इति अर्होपपदे तुमुन्]।

उक्तां शारदीयां रमणीयतामेव क्रमशः श्लोकत्रयेण वर्णयति, शनैरिति।—सित-जलधरच्छेदपुलिनाः सितजलधरच्छेदाः जलाभावात् धवलमेघखण्डाः, पुलिनानीव यासां ताः, शनैः क्रमेण, वर्षापगमात् शान्ताः निर्मलाः, विगतकालुष्याः, भूताः जाताः, कलविरुतिभिः मधुराव्यक्तनिनादैः, सारसकुलैः (दिक्सरितोरुभयत्र समावेशसम्भवेन नोपमानान्तरापेक्षा) समन्तात् चतुर्दिक्षु, आकीर्णाः व्याप्ताः; निशि रात्रौ, चित्राकारैः विचित्ररूपैः, विकचानि प्रफुल्लानि, नक्षत्राणि कुमुदानीव कुमुदपुष्पाणीव, तैः चिताः

अपि च—

अपामुद्वृत्तानां निजमुपदिशन्त्या स्थितिपदं,
दधत्या शालीनामवनतिमुदारे सति फले।
मयूराणामुग्रं विषमिव हरन्त्या मदमहो!
कृतः कृत्स्नस्यायं विनय इव लोकस्य शरदा ॥ ८ ॥

अपि च—

भर्त्तुस्तथा कलुषितां बहुवल्लभस्य
मार्गे कथञ्चिदवतार्य्य तनूभवन्तीम्।
सर्वात्मना रतिकथाचतुरेव दूती
गङ्गां शरन्नयति सिन्धुपतिं प्रसन्नाम् ॥ ९ ॥

---

व्याप्ताः, दीर्घाः घनान्ताः, मेघावरणराहित्यात् दीर्घतायुक्ता इव प्रतीयमाना इत्यर्थः, दश दिशः सरित इव नभसः आकाशात् श्रावयमाणाश्च, ("—नभः, क्लीबं व्योम्नि पुमान् घने। घ्राणश्रावणवर्षासु—" इति मेदिनी) स्यन्दन्ते प्रादुर्भवन्ति, निःसरन्ति चेत्यर्थः। [अत्र शरदि दिशां सरिताञ्च वर्णत्वात् इवशब्दमाहात्म्ये दिशः सरित इव सरितश्च दिश इव इत्यन्योऽन्यमुपमानोपमेयभावात् उपमेयोपमाऽलङ्कारः। अनेन शरद्गुणवर्णनेन स्वच्छ जैवयात्राबन्धाद्यसमयः इति ध्वनितम्]। शिखरिणी वृत्तम् ॥ ७ ॥

अपामिति।—उद्वृत्तानां प्रवृद्धानां, प्रमाणवर्त्तीनाम्, [अतिक्रान्तमर्य्यादानामिति ध्वनिः] अपां जलानां, निजं स्वाभाविकं, स्थितिपदं स्वस्थानस्थितिमार्गं मर्य्यादाञ्च, [स्वाभाविकस्थानमिति ध्वनिः] उपदिशन्त्या नियोजयन्त्या, उदारे महति, फले शस्य विद्यादिफले च सति, शालीनां धान्यानाम्, अवनतिं नम्रतां विनीतताञ्च, दधत्या जनयन्त्या, उग्रं तीक्ष्णं, विषं गरलमिव, मयूराणां शिखिनां, मदं गर्वं, हरन्त्या अपनयन्त्या, शरदा शरत्कालेन, कृत्स्नस्य समग्रस्य, लोकस्य भुवनस्य, अयम् उक्तप्रकारः, विनय इव कृतः, अहो! इति आश्चर्य्यद्योतकमव्ययम्। [अचेतनानामपि जलानाम्, अल्पचेतनानामपि शालीनां, सचेतनानां मयूराणाञ्च तत्तद्दोषापकरणात् सर्वेषामेव विनय इव शरदा कालेन कृत इत्युत्प्रेक्षा, विषमिवेत्युपमा च। अनेन पद्येन उद्वृत्तस्य मलयकेतोर्विनियमः राक्षसस्य विषवदुपविक्रमादिमदापहरणं, चन्द्रगुप्तस्य विनयश्च सूचितः]। शिखरिणी वृत्तम् ॥ ८ ॥

भर्त्तुरिति।—शरत् रतिकथायां सम्भोगालापे, चतुरा निपुणा, दूतीव बहुवल्लभस्य

[ समन्तात् गवाक्षेण अवलोक्य )। अये! कथम् अप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरं पश्यामि? आर्य्य वैहीनरे! अथ (क) त्वया अस्मद्वचनात् आघोषितः कुसुमपुरे कौमुदीमहोत्सवः?

कञ्चु। देव! अथ किम्। आघोषितो देवस्य आज्ञया कुसुमपुरे कौमुदीमहोत्सवः।

राजा। आर्य्य! तदेवं किं न परिगृहीतम् अस्मद्वचनं पौरजनेन?

कञ्चु। [ कर्णौ पिधाय ]। देव! शान्तं पापं, शान्तं पापं, पृथिव्याम् अस्खलितपूर्वं देवस्य शासनं कथं पौरेषु स्खलितुम् अर्हति?

राजा। आर्य्य वैहीनरे! तत् कथम् अप्रवृत्तकौमुदीमहोत्सवम् अधुनाऽपि कुसुमपुरं पश्यामि? पश्य—

धूर्त्तैरन्वीयमानाः स्फुटचतुरकथाकोविदैर्वेशनार्य्यो
नालङ्कुर्वन्ति रथ्याः पृथुजघनभराक्रान्तिमन्दैः प्रयातैः।

---

बहुनदीस्वामित्वात् अनेककान्तस्य बहुपत्नीकस्य च, भर्तुः स्वामिनः पत्युश्च, दृष्टेन चरितेन च, तुल्यं कलुषिताम् आविलाम् अप्रसन्नाञ्च, खण्डितात्वात् ईर्ष्यान्वितामित्यर्थः, अत एव तनूभवन्तीं वर्षाऽवसानेन विरहदुःखेन च तनीयसीं कृशाङ्गीञ्च, गङ्गां [ नारीमिति ध्वनिः ] मार्गे अवतारप्रदेशे मर्य्यादायाञ्च, कथञ्चित् कष्टेन, सर्वात्मना सर्वप्रकारेण, तत्तत्प्रबोधवाक्यैरित्यर्थः, अवतार्य्य स्थापयित्वा, प्रसन्नां स्वच्छां विमत्सराञ्च कृत्वा, सिन्धुपतिं सरित्पतिं, सिन्धुं समुद्रमिव पतिं समुद्रतुल्यगम्भीरं पतिञ्च, नयति आभिमुख्येन प्रापयति, अनुकूलयति च। [ अत्र अर्थश्लेषानुप्राणितोपमाऽलङ्कारः, तेन च राक्षसमतिपरिगृहीततया कलुषितां संश्रयितामिव नन्दकुललक्ष्मीं चतुरदूतीव मतिगभीरा चाणक्यनीतिः समुद्रवदतिगभीरं चन्द्रगुप्तं प्रापयतीति ध्वन्यते। अयमपि श्लोकावसरार्थः ]। वसन्ततिलकं वृत्तम् ॥ ६ ॥

(क) अयीति—प्रश्नार्थमव्ययं, किमित्यर्थः।

तत्रैव कौमुदीमहोत्सवाभावं वर्णयन्नाह, धूर्त्तैरिति।—वेशनार्य्यः वारविलासिन्यः, स्फुटचतुरकथाकोविदैः स्पष्टमधुरालापसुपण्डितैः, धूर्त्तैः लम्पटैः, अन्वीयमाना अनु-

अन्योऽन्यं स्पर्द्धमाना न च गृहविभवैः स्वामिनो मुक्तशङ्काः,
साकं स्त्रीभिर्भजन्ते विधिमभिलषितं पार्व्वणं पौरमुख्याः ॥ १० ॥

कञ्चु। देव ! एवमेतत्। (ञ)

राजा। किमेतत् ? (ट)

कञ्चु। देव ! अत इदम्—"। (ठ)

राजा। आर्य्य ! स्फुटमभिधीयताम्।

कञ्चु। "—देव ! प्रतिषिद्धः कौमुदीमहोत्सवः।

राजा। [सक्रोधम्]। आः !! केन ?

कञ्चु। न अतः परम् अस्माभिर्देवो विज्ञापयितुं शक्यते।

राजा। न खलु आर्य्येण चाणक्येन अपहृतः प्रेक्षकाणाम् (ड) अतिशयरमणीयः चक्षुषो विषयः ?

कञ्चु। देव ! कोऽन्यो जीवितुकामो (ढ) देवस्य शासनम् उल्लङ्घयिष्यति ?

---

गम्यमानाः सत्यः, पृथुजघनभराक्रान्तिमन्दैः नितम्बजघनभरालसैः, प्रयातैः गतिभिः, रथ्याः राजमार्गान्, न अलङ्कुर्वन्ति नैव शोभयन्ति। स्त्रियेति शेषः, पौरमुख्याः पुरवासिनां श्रेष्ठाः, स्वामिनः गृहस्वामिनः, गृहविभवैः गृहैश्वर्य्यैः, अन्योऽन्यं परस्परं, स्पर्द्धमानाः अन्योऽन्याद्आधिक्येन मिथो दर्शयन्त इत्यर्थः, मुक्तशङ्काः नरनाथानुमतत्वात् निर्भीकाश्च सन्तः, यतो हि कुलाङ्गनाभिः बहिःक्रीड़नं विगीतमपि राजानुमत्या प्रशस्तमित्याशयः; अतः स्त्रीभिः साकं सह, अभिलषितं वाञ्छितं, पार्व्वणं पर्व्वसमयोचितं कार्त्तिकपौर्ण-मासीसम्भूतं, विधिं महोत्सवयोग्यमित्यर्थः, न भजन्ते न सेवन्ते। स्रग्धरा वृत्तम् ॥ १० ॥

(ञ) एतत्—कौमुदीमहोत्सवानुष्ठानं यथावर्णितं महाराजेन, तत् एवमेव—तथैव इत्यर्थः।

(ट) एतत्—कौमुदीमहोत्सवानुष्ठानं, किम् ?—कस्मात् ? किंहेतुकम् ? इत्यर्थः। यद्वा—भवता यत् 'एवमेतत्' उक्तं, तत्र एतत् किम् ? किमर्थकमित्यर्थः।

(ठ) अतः,—वक्ष्यमाणात् चाणक्येन प्रतिषेधरूपात् हेतोः. इदं—तदननुष्ठानम्।

(ड) अपहृतः,—प्रतिषिद्धः। प्रेक्षकाणां—दर्शकानाम्।

(ढ) "तुमर्थेदमुमन: कामे मनसोरपि" इति कारिकावचनात् जीवितुम् इत्यस्य मकारलोपः।

राजा। शोणोत्तरे! उपवेष्टुम् इच्छामि।

प्रती। देव! एदं सिंहासणं, उपविसदु देवो। *

राजा। [नाट्येन उपविश्य]। आर्य्यवैहीनरे! आर्य्यचाणक्यं द्रष्टुम् इच्छामि।

कञ्चु। यत् आज्ञापयति देवः। [इति निष्क्रान्तः]।

[ततः प्रविशति आसनस्थः स्वभवनगतः कोपानुविद्धां चिन्तां नाटयन् चाणक्यः]।

चाण। [आत्मगतम्]। कथं, स्पर्द्धते मया सह दुरात्मा राक्षसहतकः!! (ख) कुतः?—

कृतागाः कौटिल्यो भुजग इव निर्य्याय नगरात्,
यथा नन्दं हत्वा नृपतिमकरोत् मौर्य्यवृषलम्।
तथाऽहं मौर्य्येन्दोः श्रियमपहरामीति कृतधीः,
प्रभावं मद्बुद्धेरतिशयितुमेष व्यवसितः॥ ११॥

* देव! एतत् सिंहासनम्, उपविशतु देवः।

(ख) महात्मत्वात् चाणक्योऽपि स्वमनुपपन्नमाश्रित इति रोषावेशात् दुरात्मेति भर्त्सनम्।

"बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम्?" इति राक्षसानुशीयमानां स्वाभिभवसरणिं प्रकटयितुमाह, कृतागा इति।—कृतागाः कृतं, नन्देरिति शेषः, आगः अग्रासनात् निष्कासनरूपः अपराधः येन सः, कौटिल्यः भुजग इव नगरात् निर्य्याय निर्गत्य, नन्दं हत्वा यथा मौर्य्यवृषलं चन्द्रगुप्तं, नृपतिम् अकरोत्, (भुजगो हि कश्चित् दष्ट्वा विनाशयति, कमपि शिरसि फणां विधाय नृपतिं करोति इति प्रसिद्धिः) तथा अहं मौर्य्येन्दोः चन्द्रगुप्तस्य, श्रियम् अपहरामि इति कृतधीः कृतबुद्धिः, एषः राक्षसः, मद्बुद्धेः प्रभावं महिमानम्, अतिशयितुम् अतिक्रमितुं, व्यवसितः प्रवृत्तः। अत्र दृष्टान्तानुरोधेन "तथाऽहं मौर्य्यं हत्वा मलयकेतुं राज्ये स्थापयिष्यामि" इति वक्तव्ये 'श्रियमपहरामि' इत्येतावन्मात्रं राक्षसवाक्यस्य अनुवदतश्चाणक्यस्य अयमभिसन्धिः,—ममैव नास्य बुद्धिः, परन्तु मत्सरेणैव "असक्तोऽहं गृहारम्भे शक्तोऽहं गृहभञ्जने" इति न्यायेन मौर्य्यापकारमात्राय प्रयतमानः सन् केवलं पौरुषमाश्रित्य मद्बुद्धेः प्रकर्ष-

[ प्रत्यक्षवत् आकाशे लक्ष्यं बद्ध्वा ]। राक्षस ! राक्षस ! विरम्यताम् अस्मात् दुर्व्यवसितात्। (त)—

उत्सिक्तः कुसचिवदृष्टराज्यतन्त्रो
नन्दोऽसौ न भवति चन्द्रगुप्त एषः।
चाणक्यस्त्वमपि च नैव केवलं ते,
साधर्म्यं मदनुकृतेः प्रधानवैरम् ॥ १२ ॥

---

मतिशयितुमीहते इत्यहो!! अत्र दुर्व्यवसितम् इति भावः। [ अत्रोपमा-नामालङ्कारः ]। शिखरिणी वृत्तम् ॥ ११ ॥

(त) दुर्व्यवसितात्—दुश्चेष्टितात्, मौर्येन्दोः श्रियोऽपहरणरूपादसद्व्यापारात् इत्यर्थः।

चन्द्रगुप्तस्योद्धरणस्य दुःसाध्यत्वं दर्शयितुं नन्दस्य राज्यभ्रंशे कारणं दर्शयन्नाह, उत्सिक्त इति।—असौ नन्दः यथा उत्सिक्तः गर्वितः, कुसचिवदृष्टराज्यतन्त्रः कुसचिवैः कुमन्त्रिभिः भवादृशैः, दृष्टं राज्यतन्त्रं राज्यपदं यस्य तादृशश्च, एष चन्द्रगुप्तः न भवति, अस्मादृशसुसचिवदृष्टराज्यतन्त्रोऽगर्वितश्चैष इत्यर्थः; गर्व-कुसचिवदृष्टराज्यतन्त्रत्वयोः राज्यभ्रंशकारणत्वात् नन्दस्य तत्सत्त्वेऽपि चन्द्रगुप्तस्य तदभावात् न भ्रंशसम्भवः इति भवदुद्यमः दुःसाध्यत्वेन दुष्ट एवेति भावः। किञ्च, सङ्कल्पितविषयनिष्पादनं महाप्रभावान्वितेनैव कर्तुं शक्यं, तव तु तत्त्वाभावात् न तत्सिद्धिः इत्याह, चाणक्य इत्यादि।—त्वमपि चाणक्यः नैव, [ चाणक्य इत्यात्मनामकथनेन आत्मनो महामहिमत्वं सूचितम् ] तथा च, चाणक्यः सङ्कल्पितविषयं साधयितुं शक्तः महा-प्रभावत्वात्, न त्वमिति भावः। उभयोः सौसादृश्यं नास्ति इति दर्शयन्नाह, साधर्म्य-मिति।—प्रधानवैरं महावैरिभावः, केवलं ते तव, मदनुकृतेः [ मदनुकृताविति विषयसप्तम्यन्तः पाठः साधुः ] मदनुकरणस्य, साधर्म्यं [ समानो धर्मः सधर्मः, ततः स्वार्थे ष्यञ्; बहुव्रीहेर्भावे वा ] सौसादृश्यं, नापरम्, इत्यात्मनो महामहिमत्वज्ञापनाय एव इतरसौसादृश्याभावः दर्शितः। अनेन यथा नन्दा उन्मूलिताः, तथाऽहमपि मौर्यमुन्मूलयिष्यामि इति वैरमात्रेण मया सह सादृश्य, न तु बुद्धिप्रकर्षेण इति भावः। [ अत्र नन्दस्य गर्व-कुसचिवदृष्टराज्ययुक्तत्वात् चन्द्रगुप्तस्य च तदभावतया, तथा राक्षसस्य चाणक्यवन्नन्दवंशध्वंसादिसामर्थ्याभावात् न्यूनतया वर्णनात् न्यूनत्वरूपो व्यतिरेकः ]। प्रहर्षिणी वृत्तं—"म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" इति लक्ष-णात् ॥ १२ ॥

[विचिन्त्य]। अथवा, न अतिमात्रम् अस्मिन् वस्तुनि मया मनः खेदयितव्यम्। कुतः ?—

मद्भृत्यैः किल नाम पर्वतसुतो व्याप्तः प्रतिष्ठान्तरैः,
उद्युक्ताश्च नियोगसाधनविधौ सिद्धार्थकाद्याः स्पशाः।
कृत्वा सम्प्रति कैतवेन कलहं मौर्य्येन्दुना राक्षसं
भेत्स्यामि स्वमतेन भेदकुशलो ह्येष प्रतीपं द्विषः॥ १२॥

कञ्चुकी। [प्रविश्य]। कष्टा खलु सेवा नाम! कुतः ?—

भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभात्,
अन्येभ्यश्च वसन्ति येऽस्य भवने लब्धप्रसादा विटाः।

---

स्वस्य अमोघनीतिकौशलं दर्शयन्नाह, मद्भृत्यैरिति।—मद्भृत्यैः भागुरायणादिभिः, प्रतिष्ठान्तरैः प्रतिष्ठा सत्कृताख्या, अन्तरे येषां तथाभूतैः, प्रतिष्ठा नामख्यातिः, अन्तरा अन्तर्हिता येषां तैः गुप्तवेशैः इति वा, तथाभूतैः सद्भिः, पर्वतसुतो मलयकेतुः, व्याप्तः विशेषव्याप्तः, यथा यथा आप्तं तथाश्रितैः तैः परिवृत इत्यर्थः, किलेति निश्चयार्थमव्ययं, नाम सम्भावनायाम् अव्ययम्। सिद्धार्थकाद्याः स्पशाः चराः, ("अपसर्पश्चरः स्पशः" इत्यमरः) नियोगसाधनविधौ मदादिष्टविषयस्य, साधनविधौ निष्पादनविषये, उद्युक्ताः प्रवृत्ताः; नियोगश्च मलयकेतोः राक्षसस्य च भेदनं, तच्चोपरिष्टात् व्यक्तीभविष्यति। सम्प्रति भेदकुशलः अहं कैतवेन छलेन, मौर्य्येन्दुना चन्द्रगुप्तेन, [सहार्थे तृतीया] कलहं विवादं, कृत्वा स्वमतेन हि स्वबुद्ध्या एव, प्रतीपम् अस्मासु प्रतिकूलं, राक्षसं द्विषः शत्रोः, मलयकेतोः सकाशात् इत्यर्थः, यद्वा—प्रतीपमिति विधेयं विशेषणं, द्विष इति षष्ठी; राक्षसं द्विषः प्रतीपं सन्तं प्रतिकूलत्वेन आपाद्येत्यर्थः, भेत्स्यामि पृथक् करिष्यामि। [इयं नियताप्तिः,—"अपायाभावतः कार्य्यनिश्चयो नियताप्तिका" इति लक्षणात्]। शार्दूलविक्रीडितं वृत्तम्॥ १२॥

राज-राजसचिवादीनां भयोत्पादकत्वेन क्लेशबहुलं सेवाधर्मं कुक्कुरवृत्तितुल्यतया निन्दति, भेतव्यमिति।—प्रकृते च राजसचिवात् चाणक्यात् कौमुदीमहोत्सवप्रतिषेधस्य राजसमीपे मद्द्वारा स्वयं कथनात् तच्छ्रवणे तस्य कोपो भविष्यति इत्याशङ्कया इयं खेदोक्तिः इति द्रष्टव्यम्। प्रथमं नृपतेः, ततः सचिवतः प्रधानमन्त्रिणः, ततः राज्ञः वल्लभात् प्रियजनात्, ततः अस्य राज्ञः, भवने लब्धप्रसादाः प्राप्तानुग्रहाः, ये विटाः धूर्त्ताः, वसन्ति वर्त्तन्ते, तेभ्यः अन्येभ्योऽपि भेतव्यं शङ्कितव्यम्।

दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायस्यतः,
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥ १४ ॥

[ परिक्रम्य अवलोक्य च ]। इदम् आर्य्यचाणक्यस्य गृहं यावत् प्रविशामि। [ नाट्येन प्रविश्य अवलोक्य च ]। अहो ! राजाधिराजमन्त्रिणो गृहभूतिः !! (थ) कुतः ?—

उपलशकलमेतत् भेदकं गोमयानां,
वटुभिरुपहृतानां बर्हिषां स्तोम एषः।
शरणमपि समिद्भिः शुष्यमाणाभिराभिः,
विनमितपटलान्तं दृश्यते जीर्णकुड्यम् ॥ १५ ॥

---

अतः कृतधियः शिक्षितबुद्धयः पण्डिताः, दैन्यात् ( दारिद्र्यात् ) दीनभावात्, नीचप्रकृतिकत्वात्, पिण्डार्थम् अन्नार्थम्, उन्मुखदर्शनापलपनैः उन्मुखानि ऊर्द्ध्वमुखानि, दर्शनानि अपलपनानि चाकूतयः ( अपलपनानि राजरहस्यगोपनानि, स्वपक्षे— ताड़नभीत्या देहसङ्कोचादीनि इति ढुण्ढिराजः ) तानि तैः आयस्यतः प्रयतमानस्य जनस्य, सेवां लाघवकारिणीं नीचत्वविधायिनीं, श्ववृत्तिं कुक्कुरजीविकां, विदुः जानन्ति, स्थाने युक्तमेव, ( "युक्ते द्वे साम्प्रतं स्थाने" इत्यमरः )। [ सिद्धार्थविदितकार्य्यानुरोधात् चाणक्य-मौर्य्ययोः कपटवैमत्यं तथ्यत्वेनैव गृह्णतः कञ्चुकिनोऽयं निर्वेदः ]। शार्दूलविक्रीड़ितं वृत्तम् ॥ १४ ॥

( थ ) गृहभूतिः,—गृहैश्वर्य्यं, [ सोपहासोक्तिरियं, राजाधिराजमन्त्रिणो वक्ष्यमाणगृहसंस्थानानौचित्यात् ]।

राजसचिवस्य चाणक्यस्य व्यस्ततन्त्रं राज्यतन्त्रपर्य्यालोचनं धननिस्पृहत्वञ्च प्रतिपादयन्नाह, उपलशकलमिति।—एतत् उपलशकलं प्रस्तरखण्डं, गोमयानां करीषाणां, शुष्काणामिति शेषः, भेदकं विदारकम्; वेताग्निसमिन्धनाय शुष्कगोमयचूर्णनार्थमिति भावः, उपलोऽपि शकलो न पूर्णः इत्यनेन विभूतिनैरपेक्ष्यमुक्तम्; प्राकारोपरि शोषणार्थं विस्तीर्णानि गोमयानि निर्भिद्योपलखण्डं प्रकाशते इति वा। एषः वटुभिः ब्राह्मणबालकैः, शिष्यभूतैरित्यर्थः, उपहृतानाम् आनीतानां, बर्हिषां दर्भाणां, स्तोमः संघातः। शरणं गृहमपि, आभिः शुष्यमाणाभिः समिद्भिः विनमितपटलान्तम् अतिनमितच्छदिप्रान्तं, जीर्णकुड्यं दृश्यते; अनेनास्य धनानपेक्षत्वादयः श्रोत्रियगुणा उक्ताः; तथोक्तं—"वंशे विशालवंशानामृषीणामिव भूयसाम्। अप्रतिग्राहकाणां

ततः स्थाने खलु चस्य वृषलो देवचन्द्रगुप्त इति । (द) कुतः ?—

स्तुवन्त्यश्रान्तास्याः क्षितिपतिमभूतैरपि गुणैः,
प्रवाचः कार्पण्यात् यदवितथवाचोऽपि कृतिनः ।
प्रभावस्तृष्णायाः स खलु सकलः स्यादितरथा
निरीहाणामीशस्तृणमिव तिरस्कारविषयः ॥ १६ ॥

[विलोक्य सभयम् ]। तदयम् (ध) आर्य्यचाणक्यस्तिष्ठति ।—

यो नन्द-मौर्य्यनृपयोः परिभूय लोकम्,
अस्तोदयौ प्रतिदिशन्नविभिन्नकालम् ।

---

यो बभूव भुवि विश्रुतः॥" इति। मालिनी वृत्तं—"ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥ १५ ॥

(द) देवः अस्माकं महाराजः, चन्द्रगुप्तः चस्य उक्तगृढविभूतिमतः चाणक्यस्य, वृषल इति शूद्रवर्णपर्य्यायोक्तिः, स्थाने युक्तं, मुरागर्भजोऽयं वृषल एव, किन्तु जातिगत-पदोल्लेखेनामन्त्रणम् अप्रीतिकरमपि निस्पृहतया चाणक्यः प्रयुङ्क्ते इति भावः। ["वृषलोऽयः" इति पाठे—वृषलशब्देन वदितुमर्हः। निस्पृहत्वाद्राजानमपि तृणीकृत्य भृत्यवत् व्यपदिशतीति भावः ]।

राजसेवनं तृष्णाहेतुकमेव प्रायः, सन्तोऽपि तृष्णयैव हि राज्ञोऽसतो गुणस्य कीर्त्तनाय प्रवर्त्तन्ते, चाणक्यस्तु न तथा इति दर्शयन् सेवाधर्मं निन्दति, स्तुवन्तीति।—प्रवाचः मिष्टभाषिणः, अवितथवाचः सत्यवादरताः, कृतिनः साधवः अपि, कार्पण्यात् दैन्यात्, अश्रान्तास्याः अनवरतगुणवर्णने श्रमरहितमुखाः सन्तः, निरन्तरं प्रवक्तारः इत्यर्थः, अभूतैरपि अविद्यमानैरपि, गुणैः क्षितिपतिं प्रभुं, स्तुवन्ति इति यत् स खलु तृष्णायाः धनाशायाः, सकलः सम्पूर्णः, आरोपितगुणकीर्त्तनमिथ्यावचनादिरूपः, प्रभावः महिमा, स्यात्, इतरथा अन्यथा, धनाशाविरहे इत्यर्थः, निरीहाणां तुच्छीकृत-धनाशानाम्, ईशः प्रभुः, धनी इति यावत्, तृणमिव तिरस्कारविषयः अनादरास्पदम् इत्यर्थः। [ अत्रोपमाऽलङ्कारः ]। शिखरिणी वृत्तम् ॥ १६ ॥

(ध) तदयमिति कर्मधारयसमासः सोऽयमित्यर्थः।

सर्वजनासाधारणमौर्य्यं विजयजनकञ्च चाणक्यतेजोमहत्त्वमुपदर्शयन्नाह, य इति।—यः चाणक्यः, लोकं राजसैन्यं, परिभूय तिरस्कृत्य, आक्रम्य मोहयित्वा वा, नन्द-मौर्य्यनृपयोः ("राजानौ रविशीतगू" इति ज्योतिषोक्तेः ग्रहराजयोः सूर्य्याचन्द्रमसोः

पर्य्यायपातितहिमोष्णिम सर्वगामि
धाम्नाऽतिशाययति धाम सहस्रधाम्नः॥ १७॥

[ जानुभ्यां भूमौ निपत्य ]। जयति जयति आर्य्यः।

चाण। [ चाणक्येन अवलोक्य ]। वैहीनरे! किम् आगमन-प्रयोजनम्?

कञ्चु। आर्य्य! प्रणतिसम्भ्रमसमुच्चलितभूमिपालमौलि-मणिशकलशिखापिशङ्गीकृतपादपद्मयुगलः पादपद्मयोः आर्य्यं प्रणिपत्य देवः चन्द्रगुप्तो विज्ञापयति, क्रियान्तरम् अन्तरायम् अन्तरेण आर्य्यं (ग) द्रष्टुम् इच्छामि इति।

चाण। वृषलो मां द्रष्टुम् इच्छति? वैहीनरे! न खलु वृषलस्य श्रवणमुपगतोऽयं मया कृतः कौमुदीमहोत्सवप्रतिषेधः?

कञ्चु। आर्य्य! अथ किम्?

चाण [ सक्रोधम् ]। आः! केन कथितम्?

कञ्चु। [ भयं नाटयित्वा ]। प्रसीदतु आर्य्यः। स्वयमेव सुगाङ्ग-

---

इति च ) अविभिन्नकालं समकालम्, अस्तोदयौ विनाशाभ्युदयौ, प्रतिदिशम् वितरन्, पक्षे—लोकं भुवनं लोकालोकमचलं वा, [ लोकशब्देन लोकालोकपर्वतो लक्षितः ] परिभूय सन्ताप्य, अतिक्रम्य वा, विभिन्नकालम् अस्तोदयौ अदर्शनदर्शने, प्रतिदिशम् धाम्ना तेजसा, पर्य्यायपातितहिमोष्णिम पर्य्यायेण क्रमेण, न तु समकालमित्यर्थः, पातितं दत्तं, हिमम् उष्णिमा उष्णत्वञ्च येन तथोक्तं सत्, [ "हिमोष्णमसर्वगामि" इति च पाठः; तत्र—असर्वगामि सर्वकालाव्याप्ति, हिममुष्णञ्च; अन्यत् समानम् ] सर्वगामि सहस्रधाम्नः सूर्य्यस्य, धाम तेजः, न अतिशाययति? न अतिशय्य वर्त्तते किम्? इति काकुः, अपि तु अतिशाययत्येव। [ सार्थे णिच्। एकदा अस्तोदय-करणात् विभिन्नकालमुदयास्तौ प्रतिपादयतः रवितोऽस्याधिक्यात् अत्र व्यतिरेकालङ्कारः लोकशब्दस्य श्लिष्टतया श्लेषानुप्राणितः ]। वसन्ततिलकं वृत्तम्॥ १७॥

( ग ) क्रियान्तरं—क्रियाविशेषः, कार्य्यान्तरम्, अन्तरायं—विघ्नम्, अन्तरेण—विना, यदि कार्य्यविघ्नो न स्यात् तदेत्यर्थः। "न चेदन्यकार्य्यातिपातः" इति क्वाचित्कः।

प्रासादशिखरगतेन देवेन अवलोकितम् अप्रवृत्तकौमुदीमहोत्सवं कुसुमपुरम्।

चाण। आः!! ज्ञातं, तिष्ठ तावत्, भवद्भिः एव मदन्तरेण प्रोत्साह्य (प) रोषितो वृषलः, किम् अन्यत्?

कञ्चु। [ सभयं तूष्णीम् अधोमुखस्तिष्ठति ]।

चाण। अहो! राजपरिजनस्य चाणक्यस्य उपरि विद्वेषपक्षपातः। अथ क्व वृषलः तिष्ठति?

कञ्चु। [ भयं नाटयन् ]। आर्य्य! सुगाङ्गप्रासादगतेन देवेन अहम् आर्य्यपादमूलं प्रेषितः।

चाण। [ उत्थाय ]। कञ्चुकिन्! सुगाङ्गप्रासादमार्गमादेशय!

कञ्चु। इत इत आर्य्यः। [ इति उभौ परिक्रामतः ]।

कञ्चु। अयं सुगाङ्गप्रासादः, शनैः आरोढुमर्हति आर्य्यः।

चाण। [ नाट्येन आरुह्य अवलोक्य च सहर्षम् आत्मगतम् ]। अये! सिंहासनमध्यास्ते (फ) वृषलः। साधु साधु।—

नन्दैर्वियुक्तमनपेक्षितराजवृत्तैः,
अध्यासितञ्च वृषलेन वृषेण राज्ञाम्।
सिंहासनं सदृशपार्थिवसङ्गतञ्च,
प्रीतिं परां प्रगुणयन्ति गुणा ममैते॥ १८॥

---

(प) मदन्तरेण—मां विना, मम असन्निधिं प्राप्य इत्यर्थः। प्रोत्साह्य—भेदवचनैः उद्दीप्य इत्यर्थः।

(फ) सिंहासनं—सिंहलाञ्छितम् आसनम् ( इति शाकपार्थिवादित्वात् उत्तरपदलोपी समासः। "अधिशीङ्स्थासां कर्म" ( १।४।४६ पा० ) इति आधारस्य कर्मता ]।

नन्दराजसिंहासने चन्द्रगुप्तप्रतिष्ठितत्वेन सञ्जातानन्दश्चाणक्यः स्वगुणोत्कर्षं दर्शयन्नाह, नन्दैरिति।—अनपेक्षितराजवृत्तैः अनादृतराजव्यवहारैः, [ "अनपेक्षितराजराजैः" इति पाठे—तृणीकृतकुबेरैः, "राजराजो धनाधिपः" इत्यमरः ] नन्दैः वियुक्तं पुत्राष्टकसहितयोगानन्देन विरहितं, चिरशून्यमिति यावत्, सिंहासनं राज्ञां वृषेण

[उपसृत्य]। विजयतां वृषलः। (ब)

राजा। [सिंहासनादुत्थाय चाणक्यस्य पादौ गृहीत्वा]। आर्य्य!

चन्द्रगुप्तः प्रणमति।

चाण। [पाणौ गृहीत्वा]। उत्तिष्ठोत्तिष्ठ वत्स!—

आ शैलेन्द्राच्छिलान्तस्खलितसुरधुनीशीकरासारशीतात्,
आ तीरान्नैकरागस्फुरितमणिरुचो दक्षिणस्यार्णवस्य।
आगत्यागत्य भीतिप्रणतनृपशतैः शश्वदेव क्रियन्तां,
चूडारत्नांशुगर्भास्तव चरणयुगस्याङ्गुलीरन्ध्रभागाः॥ १९॥

---

श्रेष्ठेन, वृषलेन चन्द्रगुप्तेन, अध्यासितं, तत्र सदृशपार्थिवसङ्गतं दृष्टीकृतसकलराजगुणान् कुबेरवदतिधनाढ्यान् वा नव नन्दान् हत्वा तत्पदे यः कश्चिदयोग्यो न स्थापितः, किन्तु नन्देभ्योऽतिशयितः धीरोदात्तत्वादिमहाराजगुणोत्तरश्चन्द्रगुप्तोऽभिषेचितः, अतः सिंहासनं योग्यपार्थिवसङ्गतं जातम्, इत्यतः एते मम गुणाः नन्दोद्धारणादिसाधका इत्यर्थः, मम परां प्रीतिं प्रगुणयन्ति वर्द्धयन्ति। [अत्र समालङ्कारः,—"समं योग्यतया योगो यदि सम्भावितः क्वचित" इति लक्षणात्]। वसन्ततिलकं वृत्तम्॥ १८॥

(ब) विजयतां—सर्वोत्कर्षेण वर्त्तताम्। ["विपराभ्यां जेः" (१।३।१९ पा०) इति तङ्]।

अतिविनयाधारं प्रणत्यर्थं गृहीतात्मचरणयुगलं राजानं पाणिभ्यां गृह्णन् चाणक्यः स्वाभिमतेन च आशिषा अभिनन्दयन्नाह, आ-शैलेन्द्रादिति।—शिलान्तस्खलितसुरधुनीशीकरासारशीतात् शिलान्तात् पर्वतावयवभूतप्रस्तरप्रान्तभागात्, स्खलितायाः पतितायाः, सुरधुन्याः गङ्गायाः, शीकरा जलकणाः एव, आसाराः धारासम्पाताः, ("शीकरोऽम्बुकणाः स्मृताः" "धारासम्पात आसारः" इत्युभयत्राप्यमरः) तैः शीतात् सकलशीतादपि गङ्गाजलस्पर्शादतिशीतादित्यर्थः, आ-शैलेन्द्रात् आ-हिमालयात्, [गङ्गाजलक्षरणकथनात् शैलेन्द्रो हिमवान् गम्यते] तथा नैकरागस्फुरितमणिरुचः अनेकविधभास्वरमणिकान्तियुतात्, दक्षिणस्य अर्णवस्य समुद्रस्य, आ-तीरात् आ-कूलात्, आगत्य आगत्य भीतिप्रणतनृपशतैः भीत्या प्रणतानां नृपाणां शतैः, बहुभिर्नृपैरित्यर्थः, शश्वदेव सततमेव, तव चरणयुगस्य पादद्वयस्य, अङ्गुलीरन्ध्रभागाः अङ्गुलिच्छिद्रप्रदेशाः, चूडारत्नांशुगर्भाः मुकुटस्थरत्नकिरणोद्भासितान्तरालाः, क्रियन्ताम् इत्याशीः। स्रग्धरा वृत्तम्॥ १९॥

राजा। आर्य्यप्रसादात् अनुभूयते एवैतत्, नाऽऽज्ञाप्यते। उपविशतु आर्य्यः। [इति उभौ यथासनम् उपविष्टौ]।

चाण। वृषल! किमर्थं वयम् आहूताः?

राजा। आर्य्यस्य दर्शनेन आत्मानम् अनुग्राहयितुम्। (भ)

चाण। [स्मितं कृत्वा]। वृषल! अलम् अनेन प्रश्रयेण, न निष्प्रयोजनम् अधिकारवन्तः प्रभुभिः आहूयन्ते; (म) तत् प्रयोजनम् अभिधीयताम्।

राजा। आर्य्य! कौमुदीमहोत्सवप्रतिषेधस्य किं फलम् आर्य्यः पश्यति?

चाण। [स्मितं कृत्वा]। वृषल! उपालब्धुं (य) तर्हि वयम् आहूताः?

राजा। आर्य्य! न उपालब्धुम्।

चाण। किं तर्हि?

राजा। विज्ञापयितुम्। (र)

चाण। वृषल! यदि एवं, तर्हि विज्ञापनीयानाम् अवश्यं शिष्येण रुचयोऽनुरोद्धव्याः। (ल)

---

(भ) अनुग्राहयितुम्—अनुग्रहवन्तं कर्त्तुम्। ["आहूताः" इति पूर्वोक्त-क्रियाऽन्वयित्वात् "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" (३।३।१० पा०) इति भावे भविष्यति काले च तुमुन्]।

(म) प्रश्रयेण—विनयेन। अधिकारवन्तः,—अधिकृताः, कार्य्येषु नियुक्ताः अमात्यादयः, निष्प्रयोजनं नाहूयन्ते इत्यन्वयः।

(य) उपालब्धुं—तिरस्कर्त्तुम्।

(र) विज्ञापयितुम्—माम् अवबोधयितुम् इत्यर्थः। [सर्वत्र पूर्ववत् तुमुन्]।

(ल) विज्ञापनीयानां—गुरूणाम्। रुचयः,—अभिप्रायाः। अनुरोद्धव्याः,—अनुसरणीयाः, प्रतिपाल्याः इत्यर्थः। ["स्वैररुचयो न निरोद्धव्याः" इति पाठे—स्वैररुचयः,—स्वतन्त्रा गुरवः, न निर्बन्धनीयाः, स्वच्छन्दमनुयोज्या इति]।

राजा। आर्य्य ! कः सन्देहः? किन्तु न कदाचिदपि आर्य्यस्य निष्प्रयोजना प्रवृत्तिः, इति अस्ति नः प्रश्नावकाशः।

चाण। वृषल ! सम्यक् गृहीतवानसि मदाशयम्। न हि प्रयोजनम् अनपेक्षमाणः स्वप्नेऽपि चाणक्यः चेष्टते।

राजा। आर्य्य ! अत एव मां प्रयोजनशुश्रूषा मुखरयति। (व)

चाण। वृषल ! श्रूयताम्—इह खलु अर्थशास्त्रकाराः त्रिविधां सिद्धिम् उपवर्णयन्ति। तद्यथा—राजायत्तां, सचिवायत्ताम्, उभयायत्ताञ्च इति। तत् सचिवायत्तसिद्धेर्भवतः किं फलान्वेषणेन ? (श) यतो वयमेव अत्र नियुक्ता वेत्स्यामः(ष)।

राजा। [ सकोप इव (स) मुखं परिवर्त्तयति ]।

[ ततो नेपथ्ये वैतालिकौ पठतः ]।

एकः।—

आकाशं काशपुष्पच्छविमभिभवता भस्मना शुक्लयन्ती,
शीतांशोरंशुजालैर्जलधरमलिनां क्लिश्नती कृत्तिमैभीम्।

---

(व) मुखरयति—वाचालयति, कथनाय प्रवर्त्तयति इत्यर्थः।

(श) इतः परं क्वचित् "वाङ्मनसयोः खेदम् उत्पादयितुम्" इत्यधिकपाठे—वाक्—वागिन्द्रियञ्च, मनश्च "अचतुर-विचतुर—" (५।४।७७ पा०) इति निपातनात् अच्। वाङ्मनसयोः—वाक्यचित्तयोः, खेदं—स्वस्वक्रियायां व्यापारकरणरूपमायासम्, उत्पादयितुं यत् फलस्य—उद्देश्यस्य, अन्वेषणम—अनुधावनं तेन, किम्? तत्साध्यं नास्तीत्यर्थः। अत्र फलान्वेषणेन सहैककर्त्तृकत्वात् तुमुन् समर्थनीयः।

(ष) "वेत्स्यामः" इत्यत्र "वत्स्यामः" इति पाठे—वसधातोर्भविष्यति लृटि उत्तमपुरुषबहुवचनम्; "न वृद्भ्यश्चतुर्भ्यः" (७।२।५९ पा०) इति इट्-निषेधः, "वृद्भ्यः स्यसनोः" (१।३।९२ पा०) इति परस्मैपदम्; तत्कार्य्यानुगुण्येन वर्त्तिष्यामहे इत्यर्थः।

(स) चाणक्यस्यैवोपदेशेन कृत्रिमकोपस्य कर्त्तव्यतया अनेनैव हेतुना कृतकः कोपो जात इति सूचयन्नाह—सकोप इवेति; वास्तविककोपराहित्यसूचनाय इव-शब्दः।

राज्ञः श्रेयःप्राप्तिनिमित्तम् शरदृतुवर्णनप्रसङ्गेन तं स्तुवन्नाह, आकाशमिति।—काशपुष्पच्छविं काशपुष्पस्य छविं कान्तिं, यद्वा—काशपुष्पेण छविः कान्तिर्यस्य

कापालीमुद्वहन्ती स्रजमिव धवलां कौमुदीमित्यपूर्वा,
हासश्रीराजहंसा हरतु तनुरिव क्लेशमैशी शरद्वः ॥ २० ॥

अपि च—

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणाम्,
आत्मव्यापारगुर्वी जनितजललवा जृम्भितैः साङ्गभङ्गैः।

तमित्याकाशविशेषणम्। [ "—वा तु पुंस्याकाशविहायसी" इत्यमरोक्तेः आकाशशब्दे पुंस्त्वस्यापि सम्भवात् तद्विशेषणेऽपि पुंस्त्वम्; अत्र पक्षे भस्मना इत्युपलक्षणे तृतीया ] अभिभवता तिरस्कुर्वता, तत्तुल्येन इत्यर्थः, भस्मना आकाशं शुक्लयन्ती धवलयन्ती, शीतांशोश्चन्द्रस्य, हरशिरःस्थितस्य इति शेषः, अंशुजालैः किरणसमूहैः, जलधरमलिनां मेघश्यामाम्, ऐशीं गजासुरसम्बन्धिनीं, कृत्तिं चर्म, ईशस्य परिधानभूतामित्यर्थः, क्लिन्दती छिन्दती, [ "क्लिश्नती" इति पाठे—क्लिष्टां कुर्वती, तद्वैवर्ण्यमभिभवन्तीत्यर्थः, "क्लिन्दतीम्" इति पाठे तु—काश······भवता भस्मना उपलक्षिता,······क्लिन्दतीम् आर्द्राम्, ऐशीं कृत्तिं······शुक्लयन्ती" इत्यन्वयः ] तथा कौमुदीं कुमुदानामिमां तत्सम्बन्धिनीमिव, धवलां शुभ्रां, कापालीं नरकपालनिर्मितां, स्रजं मुण्डमालाम् इत्यर्थः, उद्वहन्ती धारयन्ती, हासश्रीराजहंसा हासस्य श्रीः हास्यसम्पत्, प्रसादहेतुकहास्यविभव इति यावत्, ( "—श्च सम्पदि। सम्पत्तिः श्रीश्च लक्ष्मीश्च" इत्यमरः ) राजहंस इव यस्यां तथो तादृशी; अत एव अपूर्वा काऽपि लोकोत्तरगुणाभिरामा, ऐशी तनुः शिवमूर्त्तिरिव, भस्म अभिभवन्त्या काशपुष्पच्छव्या आकाशं शुक्लयन्ती [ इति विभक्तिविपरिणामेन अन्वयः ] शीतांशोश्चन्द्रस्य, अंशुजालैः विमलकिरणैः, शरदि तस्य निर्मलत्वादिति भावः; ऐशीं कृत्तिमिव जलधरस्य मेघस्य, मलिनां मलिनतां, [ मलिनशब्दोऽत्र पक्षे मालिन्ये लक्षितः ] क्लिन्दती अपसारयन्ती, धवलां कापालीं स्रजमिव कौमुदीमुद्वहन्ती तथा हासश्रीरिव राजहंसो यस्यां तादृशी, शरत् वो युष्माकं, क्लेशम् आध्यात्मिकादिदुःखत्रयं, पक्षे—मलयकेतु-राक्षसाभियोगजनितं कष्टं, हरतु। [ अत्र ऐशीतन्वा शरदः सादृश्यात् तथा तत्तद्विशेषणानां भस्मादीनाञ्च परस्परसादृश्यप्रतीतेः उपमाऽलङ्कारः। "तनुरिव" इत्यत्र "तनुरिह" इति पाठे—शरदि ईशत्वारोपविवक्षायां तद्विशेषणे भस्मादौ काशपुष्पादिसादृश्योक्तेरुपमासमुत्थापितो रूपकालङ्कारः इति बोध्यम् ]। स्रग्धरा वृत्तम् ॥ २१ ॥

"शेते विष्णुः सदाऽऽषाढे कार्त्तिके च विबुध्यते" इति स्मरणात् शरदि विष्णुनिद्राभङ्गस्य शास्त्रसम्मतत्वात् हरेर्निद्रावसानावस्थां वर्णयन् शरद्गुणमेव स्तुवन्नाह,

नागाङ्कं मोक्तुमिच्छोः शयनमुरु फणाचक्रवालोपधानं,
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥ २१ ॥

द्वितीयः ।—

सत्त्वोत्कर्षस्य धात्रा निधय इव कृताः केऽपि कस्यापि हेतोः,
जेतारः स्वेन धाम्ना मदसलिलमुचां नागयूथेश्वराणाम् ।
दंष्ट्राभङ्गं मृगाणामधिपतय इव व्यक्तमानावलेपाः,
नाज्ञाभङ्गं सहन्ते नृवर ! नृपतयस्त्वादृशाः सार्वभौमाः ॥ २२ ॥

---

प्रत्यग्रेति ।—प्रत्यग्रेण अभिनवेन, उन्मेषेण उन्मीलनेन, जिह्मा कुञ्चितप्रान्ता, क्षणं व्याप्य उन्मीलनक्षणे इत्यर्थः, रत्नदीपप्रभाणां शेषशिरःस्थानि रत्नान्येव दीपाः तेषां प्रभाणाम्, अनभिमुखी असम्मुखी, एतच्च झटित्युन्मिषतः चक्षुषः तदभिमुखत्वं न सम्भवति तत्प्रभाभिः प्रतिहतत्वात् इति स्वभावोक्तिम् अनुरुध्याह, न पुनः भगवतो दृष्टेः कश्चिदपि प्रतिघातोऽस्ति इति बोध्यम् ; साङ्गभङ्गैः अङ्गभङ्गसहितैः, देहमोटनान्वितैः इत्यर्थः, जृम्भितैः आस्यविदारणहेतुकवायुविशेषव्यापारैः,जनितजललवा सञ्जातास्रुकणा, जृम्भाकाले चक्षुषोर्जलनिर्गमनस्य प्रसिद्धेः ; अत एव आत्मव्यापारे दर्शनक्रियायां, गुर्वी गुरुत्वात् चाञ्चल्यरहिता, मन्थरा इति यावत्, उरु महत्, फणाचक्रवालं फणामण्डलं, ( "चक्रवालन्तु मण्डलम्" इत्यमरः ) उपधानं यस्य तादृशं, नागाङ्कम् अनन्तक्रोडरूपं, शयनं शय्यां, मोक्तुं त्यक्तुम्, इच्छोः हरेः नारायणस्य, निद्राच्छेदेन अभिताम्रा अतिरक्ता, आकेकरा ईषत्सङ्कुचिता, ("दृष्टिराकेकरा किञ्चित् स्फुटापाङ्गे प्रसारिता । मीलितार्द्ध-पुटा लोके ताराव्यावर्त्तनोत्तरा ॥" इति नृत्यविलासोक्तेः) दृष्टिः वः युष्मान्, चिरम् अवतु रक्षतु । तादृशदृष्टिकालत्वात् शरदि तस्याः रोप इति द्रष्टव्यम् । एतौ श्लोकौ चन्द्र-गुप्तवैतालिकेन पठितौ । [ अत्र स्वभावोक्तिरूपकयोः संसृष्टिः ] । स्रग्धरा वृत्तम् ॥ २१ ॥

चाणक्यं प्रति चन्द्रगुप्तस्य कोपमुद्दीपयितुं स्तुवन् आह, सत्त्वोत्कर्षस्येति ।—नृवर ! हे नरनाथ ! स्वेन धाम्ना तेजसा, मदसलिलमुचां मदस्राविणां गर्वितानाञ्च, नागयूथेश्वराणां हस्तियूथपतीनां तत्सदृशानां राज्ञाञ्च, जेतारः जयिनः, [ "कर्तृकर्मणोः कृति" (२।३।६५ पा० ) इति कर्तृयोगलक्षणा कर्मणि षष्ठी ] कस्यापि हेतोः कस्मै-चिदपि प्रयोजनाय, [ "षष्ठी हेतुप्रयोगे" ( २।३।२६ पा० ) इति षष्ठी ] निर्वचनाय इत्यर्थः, धात्रा विधिना, सत्त्वोत्कर्षस्य शौर्यातिशयस्य प्राणिश्रेष्ठतायाश्च, ("सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मनि व्यवसाये च चित्ते प्राणिषु जन्तुषु ॥" इति विश्वः ) निधयः आधारा इव, [ निधीयन्ते स्थाप्यन्ते एषु "कर्मण्यधिकरणे

अपि च—भूषणाद्युपभोगेन प्रभुर्भवति न प्रभुः ।
परैरपरिभूताज्ञस्त्वमिव प्रभुरुच्यते ॥ २३ ॥

चाण । [आकर्ण्य आत्मगतम्] । प्रथमं तावद्विशिष्टदेवतास्तुतिरूपेण प्रवृत्तशरद्गुणप्रख्यापनम् आशीर्वचनम्, इदम् अपरं किमिति न अवधारयामि । [विचिन्त्य] । आः !! ज्ञातम्; राक्षसस्य अयं प्रयोगः । आः !! दुरात्मन् राक्षसहतक ! दृश्यसे, जागर्त्ति खलु कौटिल्यः । (छ)

---

च" (३।३।९३ पा०) इति निपूर्वकधाधातोः किः ] कृताः सृष्टाः, व्यक्तमानावलेपाः व्यक्तौ प्रकटौ, मानावलेपौ अभिमानगर्वौ येषां ते, [ त्वम् इव दृश्यन्ते "त्यदादिषु दृशोऽनालोचने कञ् च" (३।२।६० पा०) इति कञ् ] त्वादृशाः भवादृशाः, सार्वभौमाः सर्वभूमीश्वराः, सम्राज इत्यर्थः, नृपतयः नरेन्द्राः, मृगाणाम् अधिपतयः सिंहाः, दंष्ट्राभङ्गं दन्तोत्पाटनम् इव, आज्ञाभङ्गम् आदेशलङ्घनं, न सहन्ते । राक्षसोपदेशात् चाणक्य-चन्द्रगुप्तयोर्भेदं जनयितुं सर्वतोऽभिमानिनः प्रभोः आज्ञाभङ्गरूपापराधस्य असह्यत्व-बोधनाय राक्षसगूढप्रणिधिना वैतालिकवेशधारिणा स्तनकलसेन स्तुतिव्याजेन "सत्त्वोत्कर्षस्य" इति "भूषणाद्युपभोगेन" इति च श्लोकद्वयं पठितम् । नरेन्द्राणाम् आज्ञाभङ्गासहने प्रमाणं स्मृतिः,—"आज्ञाभङ्गो नरेन्द्राणां विप्राणां मानखण्डनम् । पृथक् शय्या कुलस्त्रीणामशस्त्रविहितो वधः ॥" इति । [ उपमाऽलङ्कारः, निश्चय इव लुप्तोत्प्रेक्षा च ] । स्रग्धरा वृत्तम् ॥ २२ ॥

इदानीम् आज्ञाभङ्गे प्रभोः प्रभुत्वमेव न भवतीति वर्णयन्नाह, भूषणाद्युपभोगेनेति ।—भूषणाद्युपभोगेन अलङ्कारादिरूपश्रेष्ठवस्तूपभोगेन, प्रभुः निग्रहानुग्रहसमर्थो राजा, प्रभुर्न प्रभुशब्दवाच्यः न, भवति, तस्य तत्पदशक्यताऽनवच्छेदकत्वात् प्रभवति स्वाज्ञया इतरान् प्रवर्त्तयितुं स्वतन्त्रो भवति [ इति डुः ] इति । आज्ञायां स्वतन्त्रत्व-रूपार्थमेव प्रभुशब्दम् आचष्टे इत्याह, परैरिति ।—परैः अन्यैः, अपरिभूता अनवज्ञाता, अभग्ना इति यावत्, आज्ञा यस्य तादृशः अपरिभूताज्ञः अस्खलितादेशः, त्वमिव तथाभूतधर्मवत्त्वेनैव अपरोऽपि, प्रभुः उच्यते कथ्यते; विषयोपभोगः न प्रभुशब्द-प्रवृत्तिनिमित्तं, किन्तु अव्याहताज्ञत्वमेव इति भावः । अत्र उपमाऽलङ्कारः ] । पथ्यावक्त्रं वृत्तम् ॥ २३ ॥

(छ) विशिष्टदेवतास्तुतिरूपेण—विशेषणयुक्तदेवतास्तुत्या । प्रवृत्तेत्यादि ।—

राजा। आर्य्य वैहीनरे! दीयताम् आभ्यां वैतालिकाभ्यां सुवर्णशतसहस्रम्।

कञ्चु। यत् आज्ञापयति देवः। [इति उत्थाय परिक्रामति]।

चाण। [सक्रोधम् (क)]। वैहीनरे! तिष्ठ तिष्ठ, न गन्तव्यम्। वृषल! किम् अयमस्थाने एव महान् अर्थोत्सर्गः (ख) क्रियते?

राजा। आर्य्येण एवं सर्वतो निरुद्धचेष्टाप्रसरस्य मम बन्धनम् इव राज्यं, न राज्यमिव।

चाण। वृषल! स्वयम् अनभियुक्तानां राज्ञाम् एते दोषा भवन्ति। तत् यदि न सहसे, तदा स्वयमेव अभियुज्यस्व। (ग)

राजा। एते वयं स्वकर्मणि अभियुज्यामहे। (घ)

चाण। प्रियं नः, वयमपि स्वकर्मणि अभियुज्यामहे। (ङ)

---

प्रवृत्तायाः उपस्थितायाः शरदः गुणानां प्रख्यापनं वर्णनं यत्र तादृशं—गुणकीर्त्तनरूपम्। आशीर्वचनम्—आशीर्वादः इत्यर्थः। यतः कौटिल्यो जागर्त्ति—स्वकार्य्येऽप्रमत्तो भवति, ततो जागरूकस्य गृहे न चौर्य्यं भवति इति अभिप्रायमाह, दृश्यसे इति।—राक्षसव्यापारे तत्त्वारोपात् दृश्यसे इत्युक्तम्, दर्शनन्तु तद्व्यापारस्यैव इत्यवधेयम्; तथा च, त्वया यः कश्चित् व्यापारः प्रणिधिना सम्पाद्यते तत् तत्राहं जागर्मि, त्वत्प्रयासो वृथा इति सूचयितुं राक्षसहतक! इति सम्बोधनम्; विफलप्रयासत्वात् हतभाग्यत्वाच्च हतक इति। [स्वार्थे कन् बोध्यम्]।

(क) एतदादि राज-चाणक्ययोः रोषसम्भाषणं सम्फेटः।

(ख) अर्थोत्सर्गः,—अर्थानां—धनानाम्, उत्सर्गः,—व्ययः।

(ग) स्वयम् अनभियुक्तानां—स्वातन्त्र्यमलभमानानाम्, एते दोषाः,—गुरुजनगौरवासहनरूपाः विकाराः। अभियुज्यस्व—राजतन्त्रावेक्षणेऽभिनिविष्टो भव, उद्युक्तो भव इत्यर्थः। [अभिपूर्वस्य दैवादिकस्य युज्यतेः प्रेरणार्थे लोटि रूपम्]।

(घ) एते स्वकर्मणीति।—[इदं गुरोरवमानना छलम्]।

(ङ) स्वकर्मणि—अमात्यकर्मणि, राजनियोगानुसारेणैव कार्य्यादिकरणे, अभियोगादौ वा। अभियुज्यामहे—उद्युक्ता भवामः। [भविष्यत्सामीप्ये लट्]।

राजा। यदि एवं, तर्हि कौमुदीमहोत्सवप्रतिषेधस्य प्रयोजनं श्रोतुम् इच्छामि।

चाण। वृषल! कौमुदीमहोत्सवानुष्ठानस्य किं प्रयोजनम् इति अहमपि श्रोतुम् इच्छामि।

राजा। प्रथमं तावत् ममाज्ञाव्याघातः। (च)

चाण। वृषल! ममापि खलु त्वदाज्ञाव्याघात एव कौमुदीमहोत्सवप्रतिषेधस्य प्रथमं प्रयोजनमिति। (छ) कुतः?—

अम्भोधीनां तमालप्रभवकिसलयश्यामवेलावनानाम्,
आ पारेभ्यश्चतुर्णां चटुलतिमिकुलक्षोभितान्तर्जलानाम्।

---

अग्निहोत्रादौ इति वह्निः, अनेन कपटकलहेन राक्षसवशीकरणकर्मणि व्यापृियामहे इति गूढोऽर्थः]।

(च) आज्ञाव्याघातः,—आज्ञाभङ्गः; (ममाज्ञाव्याघातजनितो मनस्ताप एव प्रथमफलत्वेन पर्यवसित इति सोल्लुण्ठनोक्तिः)। ["आज्ञाविधानम्" इति पाठे—आज्ञायाः,—आदेशस्य, विधानं—प्रचारणं, यथा आज्ञायते तथा लोकैः क्रियते न वा? इति जिज्ञासार्थमेव प्रथममाज्ञाप्रचार इत्यर्थः। "आज्ञाऽव्याघातः" इति पाठे—आज्ञाया अव्याघातः भवति न वा? इत्यर्थः]।

(छ) प्रथमम—आद्यं, त्वं मया शिक्षितोऽपि राज्यमवाप्य ऐश्वर्य्यमदमत्तः सञ्जातः न वेति परीक्षा इत्यर्थः।

इदमेव मुख्यप्रयोजनत्वेन श्लाघ्यतया त्वयाऽनुमन्तव्यम् इति समाधत्ते, अम्भोधीनामिति।—तमालप्रभवकिसलयश्यामवेलावनानां तमालजातनवपल्लवैः श्यामानि कृष्णानि, वेलावनानि तीरवनानि येषां तथोक्तानाम्, (अत्र प्रभवपदस्य आधिक्यं दोषः) चटुलतिमिकुलक्षोभितान्तर्जलानां चटुलानाम् इतस्ततः सञ्चरतां, तिमिकुलानां राजमत्स्यविशेषाणां, कुलैः समूहैः, क्षोभितं विलोडितम्, अन्तर्जलं जलमध्यं [जलस्य अन्तः, विभक्त्यर्थे अव्ययीभावः] येषां तादृशानाम्, (एतेन अम्भोधीनां दुस्तरत्वमुक्तम्) चतुर्णाम् अम्भोधीनां समुद्राणाम्, आ पारेभ्यः, आ तटेभ्य इति शेषः; [कुतो भवानित्यादिवत् अपेक्षितक्रियाऽपादानतया पञ्चमी। अथवा "आङ्मर्य्यादावचने" (१।४।८९ पा०) इति सूत्रे वचनग्रहणात् अत्र अभिविध्यर्थे आङः कर्मप्रवचनीयतया "पञ्चम्यपाङ्परिभिः" (२।३।१० पा०) इति आङ्योगे पञ्चमी,

मालेवाज्ञा सपुष्पा नतनृपतिशतैरुह्यते या शिरोभिः,
सा मय्येव स्खलन्ती प्रथयति विनयालङ्कृतं ते प्रभुत्वम् ॥ २४ ॥

राजा । अथ अपरमपि (ज) प्रयोजनं यत् तच्छ्रोतुम् इच्छामि ।

चाण । तदपि कथयामि ?

राजा । कथ्यताम् ।

चाण । शोणोत्तरे ! शोणोत्तरे ! मद्वचनात् कायस्थम् अचलदत्तं ब्रूहि, "यत् भद्रभटप्रभृतीनां लेख्यपत्रं तत्तावत् (झ) दीयताम्" इति ।

---

तवश्चेरपीत्यर्थः, नतनृपतिशतैः नतानां नृपतीनां शतैः कर्तृभिः, शिरोभिः करणेन सपुष्पा मालेव या तव आज्ञा उह्यते अचिरेण धारयिष्यते, [ वर्त्तमानसामीप्ये लट् ; मदाशिषा मन्नीतिबलेन च अम्भोधिपारगतानपि द्वीपाधिपान् आज्ञाविधेयान् करिष्यसि इत्यर्थः । उह्यते इति वर्त्तमानप्रयोगेण अचिरेणैव मदीयनीतिप्रभावेण त्वमासमुद्रक्षितीशो भविष्यसि इति व्यज्यते ] सा मयि एव न अन्यत्रेत्यर्थः, स्खलन्ती प्रतिघातमापद्यमाना सती, ते तव, प्रभुत्वं विनयालङ्कृतम् इति प्रथयति प्रकटयति ; तवाज्ञाविघातके मयि दण्डापातनात् तव विनयातिशय्यं प्रभुत्वस्य अलङ्करणाय एव इति भावः । यस्य तावदाज्ञा कुत्रापि न प्रतिहता, तस्याज्ञा मयि स्खलन्ती तव प्रभुत्वं विनयालङ्कृततया प्रथयति इति समुदितार्थः । [ अत्र उपमाऽलङ्कारः ] । स्रग्धरा वृत्तम् ॥ २४ ॥

(ज) अथापरमिति ।—प्रथममित्यनेन सूचितं प्रयोजनान्तरमस्तीति, तत् पृच्छति इत्यर्थः ।

(झ) भद्रभटप्रभृतीनां—भद्रभटादीनाम् । तत्प्रयोजनन्तु—ते हि इतोऽपक्रम्य मलयकेतुम् आश्रिताः, तेषां सङ्ख्याविज्ञापनार्थम् अग्रे प्रमाणलेख्यम् इत्युक्तेः इहापि तथाऽर्थकता बोध्या । तथाकथनञ्च चन्द्रगुप्तसमीपेऽपि मन्त्रगुप्त्यर्थम्, अथवा जनकलहावसरे तथाकथनं यथार्थतयाऽन्येषामवबोधार्थम् । [ वस्तुतः तेषामिति कर्मणि षष्ठी, तैरेव तत् पत्रं लिखितं, राज्ञः समीपे तु अन्येन लिखितमिति ध्वनितार्थे कर्मणि षष्ठीपरत्वमुक्तं, तथा च, प्रमाणरूपलिपियां षष्ठ्या अन्वयः ] । भद्रभटादयश्च चाणक्योपदेशेन चन्द्रगुप्ते अपरागमुद्भाव्य इतोऽपक्रम्य मलयकेतु-

प्रती। जं अज्जो आणवेदि त्ति। [निष्क्रम्य पुनः प्रविश्य]। अज्ज! एदं पत्तं। *

चाण। [गृहीत्वा]। वृषल! श्रूयताम्।

राजा। दत्तावधानोऽस्मि।

चाण। [वाचयति]। स्वस्ति, (ञ) सुगृहीतनामधेयस्य देवस्य चन्द्रगुप्तस्य सहोत्थायिनां प्रधानपुरुषाणाम् इतोऽपक्रम्य मलयकेतुम् आश्रितानां परिमाणलेख्यपत्रम्। (ट) तत्र प्रथमं तावत् गजाध्यक्षो भद्रभटः, अश्वाध्यक्षः पुरुषदत्तः, महाप्रतीहारस्य (ठ) चन्द्रभानोर्भागिनेयो हिङ्गुरातः, देवस्य स्वजनगन्धो (ड) महाराजो बलगुप्तः, देवस्यैव कुमारसेवको (ढ) राजसेनः, सेनापतेः सिंहबलदत्तस्य कनीयान् भ्राता भागुरायणः, (ण) मालव-

---

* यदार्य्य आज्ञापयति इति। आर्य्य! इदं पत्रम्।

---

माश्रिताः, तत्राये षष्ठाङ्के स्फुटीभविष्यति इति। दत्तावत्—यावदस्ति तत्समस्तम् इत्यर्थः।

(ञ) स्वस्तीति प्रथमं मङ्गलसूचनार्थम्।

(ट) परिमाणलेख्यपत्रं—सङ्ख्यापत्रमिति यावत्।

(ठ) गजाध्यक्षः,—हस्तिनां नियोगे रक्षणावेक्षणादौ च अधिकृतः। [एतदपकारेण राज्ञः बलक्षतिसम्भावना प्रकटिता]। महाप्रतीहारस्य—प्रधानदौवारिकस्य। [एतेन स्वपुररक्षकस्याविश्वस्तत्वं, तेन च पराक्रमणस्य सुलभत्वञ्च प्रकटितम्]।

(ड) स्वजनगन्धी—स्वजनसम्बन्धीत्यर्थः, असन्निकृष्टज्ञातिरिति यावत्। [स्वजनः,—आत्मीयजनः, तस्य गन्धः,—लेशः, सम्बन्ध इति यावत् अस्त्यस्य इति "अल्पाख्यायाम्" (५।४।१३६ पा०) इति बहुव्रीहौ गन्धशब्दात् इन्। "गन्धो गन्धक आमोदे लेशे सम्बन्धगर्व्वयोः" इति विश्वः। एतेन स्वजनविरोधाद्राज्यनाशसम्भावना प्रकटिता]।

(ढ) कुमारसेवकः,—कुमारे—शैशवे, सेवकः, अथवा—आ-कुमारसेवकः। [एतेन रहस्यप्रकाशनादपायशङ्का द्योतिता]।

(ण) सेनापतेः,—सैन्याध्यक्षस्य, कनीयान्—कनिष्ठः, भ्राता—सोदरः, अनुज इत्यर्थः, [एतेन सेनापतिं प्रति सन्देहः, सैन्यदौर्बल्येन च परेषां हीनशक्तित्वेऽपि सुखमराज्याक्रमणं दर्शितम्]।

राजपुत्त्रो रोहिताक्षः, क्षत्रगणमुख्यतमो विजयवर्म्मा इति (त)। [आत्मगतम्]। (थ) एते वयं देवस्य कार्य्ये अवहिताः स्म इति। [प्रकाशम्]। एतावत् एतत् पत्रम्। (द)

राजा। आर्य्य! एतेषाम् अपरागहेतून् (ध) श्रोतुम् इच्छामि।

चाण। वृषल! श्रूयताम्, अत्र यौ एतौ गजाध्यक्षाश्वाध्यक्षौ भद्रभट-पुरुषदत्तनामानौ, एतौ खलु स्त्रीमद्यमृगयाशीलौ हस्त्यश्वावेक्षणे अनभियुक्तौ इति स्वाधिकाराभ्याम् अवरोप्य (न) मया स्वजीवनमात्रेणैव स्थापितौ इति अपरक्तौ गत्वा स्वेन स्वेन च अधिकारेण व्यवस्थाप्य

(त) क्षत्रगणमुख्यतमः,—क्षत्रियसमूहप्रधानः, [एतेन सहायहीनत्वं ततः प्रकृष्टामुत्साहशक्तिश्च प्रकाश्यते]। सर्व्वमेतत् बहिःप्रकाशनार्थं, तेन च सकोषबलवाहनो मलयकेतुः अस्मदायत्तो भविष्यतीति चाणक्याभिप्रायः।

(थ) एतत्पर्य्यन्तं राजश्रवणयोग्यम् उच्चैः पठित्वा गोप्यांशम् उपांशु उच्चार्य्येम इत्याह, आत्मगतम् इति। गोप्यांशमेवाह, एते वयमिति।—एते इत्यादिकं भद्रभटादीनामुक्तिः। एते—भवदुपदेशेन तत्तन्निमित्तानि घोषयित्वा चन्द्रगुप्तादपरक्ततां ख्यापयन्तः अत्रागताः, वयं—भद्रभटादयः, देवस्य—चन्द्रगुप्तस्य, कार्य्ये—भवदुपदिष्ट-सुहृद्भेदादिके व्यापारे, अवहिताः,—अप्रमत्ताः स्मः। पत्रस्थितस्य एतदंशस्य चन्द्रगुप्तं प्रत्यपि गोपनीयतया चाणक्येनोपांशूच्चारणं कृतमिति द्रष्टव्यम्।

(द) प्रकृतपत्रस्थं रहस्यांशमप्रकाश्यतयोपांशूच्चार्य्य उपसंहरन् व्यक्तमाह, एतावदिति।

(ध) चाणक्यनीतेर्दुरवगाहतया एतावत्कालपर्य्यन्तं भद्रभटादीनाम् अपराग-हेतुतां चन्द्रगुप्तेनाज्ञानात् तज्ज्ञानाय पृच्छ्यते, एतेषामिति।—अपरागः,—विरागः, तस्य हेतून्—कारणानि, सर्व्वेषामेकविधविरागहेतुत्वसम्भवात् एकमात्रहेतुना विरागा-सम्भवाच्च हेतुबहुत्वमस्तीति द्योतयन् आह, हेतूनिति।

(न) स्वाधिकाराभ्यां—स्वस्वाधिकारात्—गजावेक्षणात् अश्वावेक्षणाच्च स्वस्व-कर्त्तव्यकर्म्मणः, अवरोप्य—प्रच्याव्य, भ्रंशयित्वा इत्यर्थः, तत्तदधिकारं ताभ्यामाच्छिद्येति यावत्।

मलयकेतुम् आश्रितौ। (प) यौ एतौ हिङ्गुरात-बलगुप्तौ, तौ अपि अत्यन्तलुब्धप्रकृती दत्तं धनम् अबहु मन्यमानौ (फ) तत्र बहु लभ्येत इति मलयकेतुम् आश्रितौ। योऽपि असौ भवतः कुमारसेवको राजसेनः, सोऽपि तव प्रसादात् अतिमात्रं कोषहस्त्यश्वं सहसा एव सुमहदैश्वर्य्यम् अवाप्य पुनरुच्छेदशङ्कया अपक्रम्य मलयकेतुम् आश्रितः। योऽयमपरः सेनापतेः सिंहबलदत्तस्य कनीयान् भ्राता भागुरायणः, असौ अपि तत्र काले पर्वतकेन सह समुत्पन्नसौहार्द्दः तत्प्रीत्या च "पिता ते चाणक्येन घातितः" इति रहसि त्रासयित्वा मलयकेतुम् अपवाहितवान्; (ब) ततो भवदपथ्यकारिषु (भ) चन्दनदासप्रभृतिषु निगृह्यमाणेषु स्वदोषाशङ्कया अपक्रम्य मलयकेतुमाश्रितः; तेनापि असौ "मम अनेन प्राणाः परिरक्षिताः" इति कृतज्ञताम् अनुरुध्यमानेन पैतृकस्य परिचयम् आत्मनोऽनन्तरम् अमात्यपदं आहितः। (म) यौ तौ रोहिताक्ष-

(प) गत्वा, मलयकेतुसमीपामिति शेषः। स्वेन स्वनाधिकारेण—गजाध्यक्षतारूपेण अश्वाध्यक्षतारूपेण च, व्यवस्थाप्य—स्थिरीकृत्य, आत्मानमिति शेषः। मलयकेतुमाश्रितौ—समाश्रित्य गजाध्यक्षोऽश्वाध्यक्षश्च अभूतामित्यर्थः।

(फ) दत्तं—पूर्वं निरूपितं, 'नन्दनरपतिजये सति युवाभ्यामेतत् दास्यामि' इति यत् प्राक् अङ्गीकृतम् इति भावः। अबहु मन्यमानौ—ततोऽधिकधनलाभेच्छया अल्पत्वेन च अपरितुष्यन्तौ।

(ब) तत्प्रीत्या—तस्मिन्—पर्वतके नृपे, या प्रीतिः,—स्नेहः तया, अपवाहितवान्—अपसारितवान्। कथङ्कारमपसारितवान्? इत्याह—त्रासयित्वा इति। त्रासप्रकारमाह, पिता ते इति।—"परिपन्थिराज्यार्द्धदानभीरुणा चाणक्येन तव पिता यथा घातितः, तथा तदुत्तराधिकारी त्वमपि परिपन्थिराज्यार्द्धभागी स्याः इत्याशयेन घातयिष्यसि" इति भीतिं प्रदर्श्य "अस्मात् स्थानात् तव पलायनमेव श्रेयस्करम्" इत्युपदिश्य अपनीतवान् इति समुदितोऽर्थः।

(भ) भवदपथ्यकारिषु—भवदनिष्टकारिषु।

(म) तेनापि—मलयकेतुनाऽपि, कृतज्ञता—कृतस्य—उपकारस्यानुरूपोप-

विजयवर्म्माणौ, तौ अत्यन्तमानित्वात् स्वदायादेभ्यः त्वया दीयमानं बहुसम्मानम् असहमानौ मलयकेतुम् आश्रितौ इत्येषाम् अपरागहेतवः।

राजा। आर्य्य! एवम् एतेषु परिज्ञातापरागहेतुषु अपि क्षिप्रमेव कस्मात् न प्रतिविहितम् आर्य्येण?

चाण। वृषल! न पारितं प्रतिविधातुम्।

राजा। किम् अकौशलात्? उत प्रयोजनापेक्षितया?

चाण। कथम् अकौशलं (य) भविष्यति, नियतं प्रयोजनापेक्षितया।

राजा। तत् अप्रतिविधानप्रयोजनम् इदानीं श्रोतुमिच्छामि।

चाण। वृषल! श्रूयताम् अवधार्य्यताञ्च।

राजा। उभयमपि क्रियते, कथ्यताम्।

चाण। वृषल! इह खलु विरक्तानां प्रकृतीनां द्विविधं प्रतिविधानम्; तत् यथा, अनुग्रहो निग्रहश्च इति। अनुग्रहः तावत् आक्षिप्ताधिकारयोः भद्रभट-पुरुषदत्तयोः पुनः अधिकारारोपणम् (र) एव। अधिकारस्य पुनः तादृशेषु व्यसनदोषात्

कारस्याभिज्ञतां, प्रत्युपकारितामित्यर्थः। पैतृकं—पितृत आगतं, परिचयं—सुहृद्भावरूपं चिरानुगुण्यञ्च, अनुरुध्यमानेन—अपेक्षमाणेन, [ "अनुवर्त्तमानेन" इति पाठान्तरम् ] आत्मनोऽनन्तरम्—अव्यवहितम्, अव्यवहितोत्तरकालवर्त्ति इत्यर्थः। अमात्यपदं—सचिवत्वं, ग्राहितः,—प्रापितः इत्यर्थः। [ अत्र णिजन्तस्य ग्रहधातोः प्राप्त्यर्थकत्वात् "गतिबुद्धि—" ( १।४।५२ पा० ) इति प्रयोज्यकर्त्तुः कर्मसंज्ञा ]।

( य ) कथमकौशलमिति।—[ कथमकौशलम् इत्यादिवचनं विरोधशमनं शक्तिः। "किमकौशलात्" इति चाणक्यविरोधे पृष्टे तस्य विरोधस्य शमनात् ]।

( र ) आक्षिप्ताधिकारयोः,—आक्षिप्तः,—आच्छिद्य गृहीतः, अधिकारः,—स्वस्वकर्त्तव्याश्वहस्तादिरूपकार्य्यकलापः ययोः तयोः, अधिकारादवरोपितयोः इत्यर्थः। अधिकारारोपणम्—अधिकारे स्थापनम्।

अनभियुक्तेषु पुनः आरोप्यमाणः सकलस्य एव राज्यस्य मूलं हस्त्यश्वम् अवसादयेत्। (ल) डिङ्गरात-बलगुप्तयोः अत्यन्त-लुब्धप्रकृतिकयोः सकलराज्यसम्प्रदानेनापि अपरितुष्यतोः अनुग्रहः कथं कर्त्तुं शक्यः? राजसेन-भागुरायणयोस्तु स्वधन-प्राणनाशभीतयोः कुतोऽनुग्रहस्य अवकाशः? रोहिताक्ष-विजयवर्मणोरपि दायादमानप्रदानपीड़ितयोः मानमपि अपमानं मन्यमानयोः अत्यन्तमानिनोः कीदृशोऽनुग्रहः प्रीतिं जनयिष्यतीति परिहृतः पूर्वः पक्षः; (व) उत्तरोऽपि (श) खलु वयम् अचिरात् अधिगतनन्दैश्वर्य्याः सहोत्थायिनं प्रधानपुरुषवर्गम् उग्रेण दण्डेन पीड़यन्तो नन्दकुलानुरक्तानां प्रकृतीनाम् अविश्वास्या भवामः (ष) इत्यतः परिहृत एव; तत्

(ल) व्यसनदोषात्—स्त्रीमद्यमृगयाद्यासक्तिदोषात्। अनभियुक्तेषु—स्वकार्य्येषु अनवहितेषु, अयोग्येषु इत्यर्थः, [सामान्येन कथनात् बहुवचनम्] तथाविधेषु पुनरारोप्यमाणोऽधिकारः,—गजाश्वादिरक्षणाध्यक्षत्वम्। हस्त्यश्वं—हस्तिनश्च अश्वाश्च इति ["द्वन्द्वश्च प्राणितूर्य्यसेनाङ्गानाम्" (२।४।२ पा०) इति सेनाङ्गत्वात् क्लीवैकत्वम्; तदधीनयुद्धसाध्यत्वेन तस्य तन्मूलत्वम्]। अवसादयेत्—क्षयं प्रापयेत्।

(व) दायादेति।—दायं—पैतृकं धनम्, आददते—गृह्णन्ति इति दायादाः,—ज्ञातयः, तेषां मानप्रदानं—सम्मानकरणं, तस्मात् (मानात् प्रदानात् वा) पीड़ितयोः,—दग्धहृदययोः, ज्ञातिसम्मानादिदर्शनात् ईर्ष्यया ज्वलितमनसोः इत्यर्थः। पूर्वः पक्षः,—प्रागुक्तयोरनुग्रहनिग्रहयोर्मध्ये पूर्वपठितः, पक्षः,—कोटिः, अनुग्रहरूपः। परिहृतः,—उक्तप्रकारेण तत्करणेऽनिष्टविशेषाशङ्कया परित्यक्तः, अनादृत इति यावत्।

(श) उत्तरोऽपि—निग्रहरूपः पक्ष इत्यर्थः, परिहृत इत्यग्रेणान्वयः।

(ष) निग्रहपक्षपरिहारे हेतुमाह, अविश्वास्या भवाम इति। [अत्र भविष्यत्सामीप्ये लट्। "मा भूम" इति क्वचित् पाठः, तत्र "माङि लुङ्" (३।३।१७५ पा०) इति लुङ्] अविश्वास्यत्वे हेतुः प्रधानपुरुषवर्गमिति, उग्रेण—तीक्ष्णेन, निग्रहरूपेण, पीड़यन्तः,—दुःखाकुर्वन्तः, तथा च, प्रधानपुरुषाणां पीड़नमेव अविश्वास्यत्वे हेतुरिति भावः।

एवमनुगृहीताभ्यन्तरभृत्यपक्षो राक्षसोपदेशश्रवणप्रवणो (अ) महीयसा म्लेच्छराजबलेन (इ) परिवृतः, पितृवधामर्षितः (क) पर्वतकपुत्त्रो मलयकेतुः अस्मान् अभियोक्तुम् उद्यत इति, सोऽयं व्यायामकालो न उत्सवकाल इति। (ख) अतो दुर्गसंस्कारे आरब्धव्ये किं कौमुदीमहोत्सवेन ? इति प्रतिषिद्धः। (ग)

राजा। आर्य्य ! बहु प्रष्टव्यमत्र।

चाण। वृषल ! विस्रब्धं पृच्छ, ममापि बह्वाख्येयम् (घ) अत्र।

राजा। एष पृच्छामि।

चाण। अहमपि एष कथयामि।

राजा। योऽयम् अस्माकमस्य सर्वस्यैव अनर्थस्य हेतुर्मलयकेतुः, स कस्मात् आर्य्येण अपक्रामन् उपेक्षितः ? (ङ)

---

(अ) अनुगृहीताभ्यन्तरभृत्यपक्षः,—अनुगृहीतः,—अनुकम्पया अवलम्बितः, अभ्यन्तरभृत्यपक्षः,—भद्रभटादिसेवकवर्गो येन तादृशः। [ एतेन अस्माकं सुहृद्बलहीनत्वं, तस्य बलादिसम्पन्नत्वं दुर्जयत्वञ्च दर्शितम् ]। राक्षसोपदेशेत्यादि।—[ युक्तपालकाभात् सुबुद्धिसचिवसान्निध्यात् तदनुसारित्वाच्च सुहृद्भेदाभावेन तस्य दुर्भेद्यत्वं द्योतितम्। एतेन दृढपक्षो निवारितः ]।

(इ) म्लेच्छेत्यादि।—[ म्लेच्छबलसहायत्वा अदम्यत्वं दुर्जयत्वञ्च प्रकटितम् ]।

(क) दुर्जयो बली चेत् शत्रुस्तर्हि सन्धीयतामित्याशङ्क्य तस्य सन्धेयत्वमपि नास्तीत्याह, पितृवधामर्षित इत्यादि।—राज्यादिलुब्धस्यैव राज्यादिदानेन सन्धेयता, न तु अपकारप्रतिचिकीर्षोः, तस्य च पितृवधप्रतिरूपस्य अपकारस्यैवेष्टत्वात् असन्धेयत्वमिति भावः। [ अत्र परिकरालङ्कारः ]।

(ख) व्यायामकालः,—व्यायामस्य—विजिगीषायाश्च सेनासङ्ग्रह-दुर्गसंस्कारादिरूपस्य, कालः,—समयः, न तु उत्सवस्य कालः, आपद्रहितकाले एव तस्य अनुष्ठेयत्वात् इति भावः।

(ग) कौमुदीमहोत्सवप्रतिषेधे यत् कारणं पृष्टं, तदभिधाय प्रकृतमनुवदति, इतीति।—पूर्वोक्तहेतुनेत्यर्थः। प्रतिषिद्धः,—प्रतिरुद्धः, कौमुदीमहोत्सव इति शेषः।

(घ) आख्येयं—वक्तव्यम्।

(ङ) अपक्रामन्—इतो बहिर्गच्छन्, उपेक्षितः,—तदपक्रमो न प्रतिरुद्धः इत्यर्थः।

चाण। वृषल! मलयकेतोः अपक्रमणानुपेक्षणे द्वयी गतिः (च) स्यात्, अनुगृह्येत निगृह्येत वा। (छ) अनुग्रहे पूर्वप्रतिश्रुतं राज्यार्द्धं प्रतिपाद्येत। निग्रहे तावत् पर्वतकोऽस्माभिः व्यापादित इति कृतघ्नतायाः स्वयं हस्तो दत्तः स्यात्। (ज) प्रतिश्रुतार्द्धराज्यप्रतिपादनेऽपि पर्वतकविनाशः केवलं कृतघ्नतामात्रफलः स्यात् इति मलयकेतुः अपक्रामन् उपेक्षितः। (झ)

राजा। अत्र तावदेवम्। राक्षसः पुनः इहैव अस्मिन्नगरे (ञ) वर्त्तमान आर्य्येण उपेक्षितः, इत्यत्र किमुत्तरम् आर्य्यस्य?

---

(च) अपक्रमणानुपेक्षणे—अपक्रमणस्य—इतः पलायनस्य, अनुपेक्षणे—उपेक्षाविरहे, उपेक्षायाम् अकृतायाम् इत्यर्थः। द्वयी—द्विविधा। गतिः,—उपायः, द्विविधयोर्गत्योरेकतरा आश्रयणीया इत्यर्थः।

(छ) एवं निग्रहानुग्रहौ च तदुपायावित्याह, अनुगृह्येतेत्यादि।

(ज) एवं निग्रहानुग्रहौ च तदुपायावित्युक्त्वा अनुग्रहेऽनिष्टं प्रदर्श्य निग्रहे दोषमाह, निग्रहे इति।—अस्य मलयकेतोः निग्रहे—दण्डने। कृतघ्नतायाः,—उपकारिणोऽपकारित्वरूपदोषस्य। हस्तः,—हस्तावलम्बनम्। स्वयम्—आत्मनैव, दत्तः स्यात्; तत्पुत्रनिग्रहे हि अस्माभिरेव पर्वतको हत इति कृतघ्नताऽपवादः अस्मासु प्रामाण्यावलम्बनतया उत्तिष्ठेदिति, अन्यथा मित्रपुत्रो मलयकेतुः कथमस्माभिः हन्येत यद्यस्माभिः पर्वतको न हतः इति लोकप्रत्ययस्स्यादिति भावः, तथा च राक्षसोपरि पातितं तदयशः परिहृतं स्यात्, तच्चानिष्टम्।

(झ) एवं निग्रहे दोषमुक्त्वा प्रतिश्रुतराज्यार्द्धप्रतिपादनरूपानुग्रहपक्षे दोषमाह, प्रतिश्रुतेत्यादि।—पर्वतकविनाशः, अस्माकम् इति भावः, पर्वतकस्य विनाशः,—विनाशनं, [विपूर्वात् नशेर्ण्यन्तात् घञ्]। राज्यार्द्धप्रदाने तव कृत्स्ननन्दराज्यलाभार्थम् उपायकृतोऽपि पर्वतकवधः व्यर्थः स्यात् इति। कृतघ्नेत्यादि।—कृतघ्नतैव इति—कृतघ्नतामात्रं, [मयूरव्यंसकादिसमासः] तदेव फलं—प्रयोजनमुद्देश्यं यस्य तथाभूतः स्यात्, प्रतिश्रुतराज्यार्द्धदाने पर्वतकहननं केवलं कृतघ्नतामात्रफलकं स्यात्, तत् सम्पूर्णनन्दराज्यप्राप्तिफलकं न स्यादिति भावः। अतो मलयकेतूपेक्षणमेव वरमनया संविधानपद्धत्या राक्षसोपकृत्स्नाशकामित्याशयः।

(ञ) राक्षसोऽपि चन्द्रगुप्तापकारीति राक्षसपक्षपातं दर्शयन्निव आह, अत्र

चाण। राक्षसोऽपि खलु निजस्वामिनि स्थिरानुरागित्वात् सुचिरमेव अत्र सहवासाच्च शीलज्ञानां नन्दानुरक्तानां प्रकृतीनाम् अत्यन्तं विश्वास्यः, प्रज्ञा-पुरुषकाराभ्याम् उपेतः, सहायसम्पदा युक्तः, कोषबलवानिहैव अन्तर्नगरे वर्त्तमानो महान्तं खलु अन्तःकोपम् उत्पादयेत्। (ट) दूरीकृतस्तु बाह्यकोपम् (ठ) उत्पादयन्नपि न दुःखसाध्यो भविष्यति इत्यतोऽपक्रामन् उपेक्षितः।

राजा। तत् किमर्थम् इहस्थ एव उपायैः न उपक्रान्तः? (ड)

चाण। अथ कथम् अपक्रान्तो भविष्यति? ननु उपायैः एव

---

तावदिति।—अत्र—मत्पृष्टविषये, मलयकेतूपेक्षणे इत्यर्थः, तावदेवम्, उत्तरमिति शेषः। अन्तर्नगरे—नगरस्य मध्ये इत्यर्थः। [नगरस्य मध्ये इति अन्तर्नगरं तस्मिन्, विभक्त्यर्थे अव्ययीभावः। ततः "तृतीयासप्तम्योः बहुलम्" (२।४।८४ पा०) इति सप्तम्या न अम्-भावः]। नगरलक्षणं यथा—"पुण्यतिथ्यादिनिपुणैः चातुर्वर्ण्यजनैर्युतम्। अनेकजातिसम्बद्धं नैकशिल्पिसमाकुलम्॥ सर्वदैवतसम्बद्धं नगरन्त्वभिधीयते॥" इति।

(ट) शीलज्ञानां—स्वभावविदाम्। प्रज्ञा-पुरुषकाराभ्यां—बुद्धि पौरुषाभ्याम्। उपेतः,—सम्पन्नः, [एतेन तस्य बलाभिघात्यत्वाभावो दर्शितः]। बलादभिघात्यत्वे हेत्वन्तरमाह—सहायेति। तत्रापि हेतुः,—प्रकृतीनां विश्वास्यः इति। तद्विश्वासे हेतुमाह, नन्दानुरक्तानाम् इति।—नन्दानुरागिण्येव प्रकृतयस्तत्सम्बन्धिनि चिरानुरक्ते चिरसहवासिनि च राक्षसेऽनुरक्ताः इति तासां राक्षसपक्षपातित्वमिति भावः। सहायवतो धी-पौरुषयुतस्यापि निर्धनस्य न कार्य्यान्तगामित्वमिति दर्शयन्नस्य तत्सम्पत्तिमप्याह, कोषबलेत्यादि।—तेनासौ सर्वथा तदानीं दुर्निवार्य्य इत्युपेक्षित इति भावः। किञ्चास्य न केवलं तदानीं दुर्दमता, अपि तु इह स्थितस्य प्रकृतिभेदकारित्वादिकमिव अमात्यादिभेदनसम्पादकत्वसम्भावनाऽपीति इतोऽपसारितवान् इत्याह, महान्तमिति।—दुर्निवार्य्यम्। अन्तःकोपम्—अमात्यादीनाम् अस्मदुपरि असन्तोषोत्पादनरूपं क्षोभमित्यर्थः।

(ठ) बाह्यकोपं—बहिर्विद्वेषम्।

(ड) इहस्थे—एतन्नगरस्थे एव राक्षसे। उपायैः,—सामादिभिः। उपक्रान्तः,—चेष्टितः, वशीकर्त्तुमिति शेषः।

असौ हृदयेशयः शङ्कुरिव उद्धृत्य दूरीकृतः। (ढ) दूरीकरणस्य च उक्तं प्रयोजनम्।

राजा। आर्य्य! कस्मात् विक्रम्य न गृहीतः?

चाण। वृषल! राक्षसः खलु असौ, विक्रम्य निगृह्यमाणः स्वयं वा विनश्येत्, युष्मद्बलानि वा विनाशयेत्। एवं सति उभयथाऽपि दोषः। पश्य—

स हि भृशमभियुक्तो यद्युपेयात् विनाशं,
ननु वृषल! वियुक्तस्तादृशेनापि पुंसा।
अथ तव बलमुख्यान् नाशयेत् साऽपि पीड़ा,
नवगज इव तस्मात् सोऽभ्युपायैर्विनेयः॥ २५॥

राजा। न शक्नुमो वयम् आर्य्यस्य वाचा वाचम् अतिशयितुं, सर्वथा अमात्यराक्षस एव अत्र प्रशस्यतरः। (ण)

---

(ढ) ननु—भोः। कथ—केनोपायेन, अपक्रान्तः,—अपक्रम्य इतो दूरस्थः, भविष्यति? अयमिति शेषः। इति—एवं मनसिकृत्याह, उपायैरिति।—उपायैरेव—सामादिभिरेव। असौ—राक्षसः। हृदयेशयः,—हृदये विद्धः। शङ्कुः,—कील इव। उद्धृत्य—उत्पाद्य, दूरीकृतः,—अपसारितः; यथा हृदयविद्धशङ्कोरन्तःस्थिति-कालेऽधिकपीड़ादायकता, तदुद्धारे च तदन्तव्रणस्य सुखरोपायसाध्यता, एव-मस्यान्तिकस्थित्या अधिकदोषकारित्वम्, अपक्रमणे च सुखसाध्यता इति तुल्यैव नावस्थयोः प्रसाधनाय यत्नः कृत इति भावः।

राक्षसस्याभियुक्तत्वे दोषं दर्शयन्नाह, स हीति।—स राक्षसः, भृशम् अतिमात्रम्, अभियुक्तः अस्मद्बलैः आक्रान्तः सन्, यदि विनाशम् उपेयात् प्राप्नुयात्, ननु वृषल! हे मौर्य्य! अत्र तर्हीति पदमूहनीयम्; तदा तादृशेन प्रभुशक्त्यतिशयशालिना, पुंसा राक्षसेन, वियुक्तः विरहितः, त्वमिति भवेरिति च अध्याहार्य्यम्; अथ पक्षान्तरे, यदि तव बलमुख्यान् प्रधानबलानि, नाशयेत, साऽपि तद्बलनाशनं, [विधेयप्राधान्यात् स्त्रीत्वम्] पीड़ा क्षतिः, तस्मात् नवगजः नवबद्धः गज इव, ["वनगजः" इति च पाठः] स राक्षसः, अभ्युपायैः सामादिभिः दमनसाधनैश्च, विनेयः दम्यः शिक्षणीयश्च। [अत्र नवबद्धगजेन राक्षसस्य सादृश्यप्रतिपादनात् उपमाऽलङ्कारः]। मालिनी वृत्तम्॥ २५॥

(ण) नेति।—मया कथित् आर्य्यविरोधे पृष्टे मतिबलेन केवलं समाधत्ते, राक्षसोपेक्षणन्तु सर्वथा अनुचितमिति भावः। प्रशस्यतरः,—श्रेष्ठः।

चाण । [ सकोपम् ] । न भवान् इति वाक्यशेषः । मा तावत् (त) एवम् । भो वृषल ! तेन किं कृतम् ?

राजा । यदि न ज्ञायते, तदा श्रूयताम् । तेन खलु महात्मना—

लब्धायां पुरि यावदिच्छमुषितं कृत्वा पदं नो गले,
व्याघातो जयघोषणादिषु बलादस्मद्बलानां कृतः ।
अत्यर्थं विपुलैः सुनीतिविभवैः सम्मोहमापादिता
विश्वास्येष्वपि विश्वसन्ति मतयो न स्वेषु वर्गेषु नः ॥२६॥

---

(त) राज्ञा "राक्षस एव" इत्येव-कारेण अन्यस्य प्रशस्यतरता नास्ति इत्युक्तम्, प्रकृते चान्यशब्दार्थोऽहमेवेति चाणक्यः सकोपमुपवर्णयन्नाह, न भवानिति वाक्यशेषो माऽस्तु नाम । तस्मिन् को गुणो दृष्टः ? इति पृच्छति, मा तावदिति ।

चाणक्यतोऽपि राक्षसस्य वीरोचितकृत्यमुपपादयन्नाह, लब्धायामिति ।—लब्धायाम् अधिकृतायाम्, अस्माभिरिति शेषः, पुरि राजधान्यां, कुसुमपुरे इत्यर्थः, नः अस्माकं, गले कण्ठे, पदं कृत्वा पादन्यासं विधाय, अस्माननादृत्य इत्यर्थः, तत्रापि न किञ्चित्कालं, किन्तु यावदिच्छम् अभिलषितकालपर्य्यन्तम्, उषितं स्थितं, न केवलं स्थितं, किन्तु अस्माकं प्रतिकूलमप्याचरितम् इत्याह, व्याघात इत्यादि ।—अस्मद्बलानां जयघोषणादिषु बलात् स्वबलमाश्रित्य, व्याघातः विघ्नः, कृतः आचरितः । तथा चोक्तं द्वितीयेऽङ्के (८० पृष्ठे ५ पङ्क्तौ द्रष्टव्यम्) विराधगुप्तेन "जयघोषणा-व्याघातादिभिः अनुमितान्तर्नगरवासिषु" इत्यादि । विपुलैः महद्भिः, सुनीतिविभवैः सुनयकौशलैः सह, अत्यर्थं सम्मोहम् "अयं दुष्टो न वा ?" इति संशयं, "दुष्ट एव" इति भ्रमं वा, आपादिताः प्रापिताः, नः अस्माकं, मतयः बुद्धयः, विश्वास्येषु अपि स्वेषु स्वकीयेषु, वर्गेषु पक्षेषु, न विश्वसन्ति ; तथा च, लब्धाधिकारा अपि वयं किञ्चित् कर्तुमसमर्था इति तस्य प्रशस्यतरत्वमिति भावः । श्लोकस्यास्य निष्कृष्टार्थस्तु—अस्माभिः निरुद्धासारप्रसारतया बलवदुपनिबद्धं पुरम् अनुरुन्धं पश्यन् अभयमस्मत्तो याचमानः इव पुरमस्मदधीनं कर्तुम् अस्मद्बलानि अन्तः प्रवेश्य यथोक्तायां पुरि अस्मदीयजयापादनघोषणाय प्रवृत्तान्यपि तानि बलानि बलात् निरुध्य बहिःस्थिताम् सञ्जातोऽपि अस्माम् अगणयन् अस्मदुपाय-वधाय विषकन्यानियोगेन कूटतोरण-शयनगृहाभिमर्दादि-स्वकार्य्यमाचरपर्य्यन्तम्

चाण। [विहस्य]। वृषल! एतत् कृतं राक्षसेन!! (थ)

राजा। अथ किम्। एतत् कृतम् अमात्यराक्षसेन।

चाण। वृषल! मया पुनर्ज्ञातं, नन्दमिव भवन्तम् उद्धृत्य, भवानिव भूतले मलयकेतुः अधिराज्यम् आरोपितः।

राजा। अलम् उपालभ्य; (द) आर्य्य! दैवेन इदम् (ध) अनुष्ठितं, किम् अत्र आर्य्यस्य?

चाण। हे मत्सरिन्! (न)—

आरुह्यारूढकोपस्फुरणविषमिताग्राङ्गुलीमुक्तचूडां,
लोकप्रत्यक्षमुग्रां सकलरिपुकुलोच्छेददीर्घां प्रतिज्ञाम्।

---

अन्तर्नगर एव कञ्चित् कालं स्वच्छन्दम उषितवान्; अनन्तरम् उपांशु सुरङ्गया सर्वार्थसिद्धिमपवाह्य स्वयमपि निर्गत्य बहिः सुहृद्बलमुत्थाप्य पुनरप्यस्मान् अभियोक्तुम उद्यतः। एवं स्वनीतिविभवैः अनेन सम्मोहिता अस्मन्मतयो विश्वास्येष्वपि भागुरायणप्रभृतिषु स्वेषु वर्गेषु न विश्वसन्ति, यतो वयं तानपि पुरात् निःसारितवन्तः; इत्यहो! मतिमान् अतिशूरः साहसी महात्मा राक्षसः इति। [ अत्र चरितोत्कर्षवर्णनादुदात्तनामालङ्कारः, तथा गर्भे पददानासम्बन्धेऽपि तत्सम्बन्धोक्तेः अतिशयोक्तिः, तदुभयोः संसृष्टिः]। शार्दूलविक्रीडितं वृत्तम्॥ २६॥

(थ) विहस्येत्यादि।—[ इदं राक्षसनीतिविभवाधिक्षेपार्थं सोत्प्रासवचनं स्वशक्तिप्रशंसनं व्यवसायः, नन्दोद्धरणमौर्य्याधिराज्यस्थापनहेतोः स्वमतेः प्रशंसनात् ]।

(द) अलमुपालभ्य—अलं तिरस्कारेण? तिरस्कारं मा कुरु इत्यर्थः। [ "अलंखल्वोः" (३।४।१८ पा०) इति क्त्वा ]।

(ध) इदमिति।—नन्दोद्धरणम् इत्यर्थः, [ इयं गुरुतिरस्कृतिः द्रवः ]।

(न) मत्सरिन्—मत्सरः,—अन्यशुभद्वेषः, सः अस्यास्तीति तत्सम्बोधने।

स्वप्रज्ञया साधितं नन्दवंशध्वंसादिव्यापारं स्वगुणविद्वेषिणा नृपतिना दैवकृतमिति व्याख्यातमाकर्ण्य सोत्कर्षेण स्वप्रतिज्ञाकर्षणाख्यापनपुरःसरं तस्य अनन्यसाध्यत्वं प्रतिपादयन्नाह, आरुह्येति।—आरूढस्य सञ्जातस्य, कोपस्य स्फुरणेन विषमितया कुटिलीभूतया, अग्राङ्गुल्या अङ्गुल्यग्रभागेन, मुक्ता बन्धनात् च्याविता, चूडा शिखा यत्र तां, सकलरिपुकुलोच्छेददीर्घां सकलानां रिपुकुलानां सपुत्रनन्दवंश्यानाम्, उच्छेदेन

केनान्येनावलिप्ता नव नवतिशतद्रव्यकोटीश्वरास्ते,
नन्दाः पर्य्यायभूताः पशव इव हताः पश्यतो राक्षसस्य ?॥ २७॥

अपि च—

गृध्रैराबद्धचक्रं वियति चलनया दीर्घनिष्कम्पपक्षैः,
धूमैर्ध्वस्तार्कभासां सघनमिव दिशां मण्डलं दर्शयन्तः।
नन्दानां नन्दयन्तः पितृवननिलयान् प्राणिनः पश्य चैतान्,
निर्वान्त्यद्यापि नैते स्रुतबहुलवसावाहिनो हव्यवाहाः॥ २८॥

राजा। अन्येनैव इदम् अनुष्ठितम्।

---

दीर्घाम् अतिमहतीम्, लोकप्रत्यक्षं साधारणसमक्षमित्यर्थः, अत एव सर्वां सर्वजनवन्द्यातमार्यत्वेन दारुणां, प्रतिज्ञां शपथम्, आरुह्य आश्रित्य, कृत्वेति यावत्, अन्येन अपरेण, मदतिरिक्तेनेत्यर्थः, केन जनेन, (इति आत्मगर्वः) पश्यतः राक्षसस्य पश्यन्तं राक्षसमनादृत्य इत्यर्थः, ["षष्ठी चानादरे" (२।३।३८ पा० इति अनादरे षष्ठी] नवतिशतद्रव्यकोटीश्वराः प्रचुरैश्वर्यशालिनः इत्यर्थः, अत एव अवलिप्ताः गर्वपूर्णाः, ते प्रसिद्धाः, नव नन्दाः पर्य्यायभूताः एकदामनिबद्धाः, पशव इव क्रमेण हताः ? नाशिताः ? न केनापीत्यर्थः। [अत्र एकदामनिबद्धाः पशवो यथा क्रमेण हन्यन्ते, तथा पर्य्यायेण नन्दा हता इति सादृश्योक्तेः उपमाऽलङ्कारः]। स्रग्धरा वृत्तम्॥ २७॥

गृध्रैरिति।—वियति आकाशे, आबद्धचक्रं रचितचक्राकारवेष्टनं यथा तथा, चलनया गत्या, दीर्घनिष्कम्पपक्षैः दीर्घा आयताः, निष्कम्पाः निश्चलाश्च, पक्षा येषां तैः, गृध्रैरेव धूमैः चिताऽग्निधूमैः, (चिताग्नीनां ज्वलदङ्गारमात्रशेषतया सम्प्रति धूमाभावात् गृध्रेषु धूमत्वारोपः) ध्वस्तार्कभासां तिरोहितसूर्य्यकिरणानां, दिशां मण्डलं सघनं घनैर्मेघैः सहितमिव, दर्शयन्तः एतान् पितृवननिलयान् श्मशानवासिनः, ("श्मशानं स्यात् पितृवनम्" इत्यमरः) प्राणिनः प्रेतशृगालादीनित्यर्थः, नन्दयन्तः हर्षयन्तः, तत्र हेतुः, नन्दानां नवानां स्रुतबहुलवसावाहिनः देहनिःसृतप्रचुरमेदधारिणः एते पुरो दृश्यमानाः, हव्यवाहाः चिताग्नयः, प्रेतकृत्यप्रज्वालितकृशानव इति यावत् अद्यापि न निर्वान्ति निर्वाणं प्राप्नुवन्ति, पश्य अवलोकय; नन्दकुलनिर्दहनक्रोधोऽद्यापि न शान्त इत्यर्थः। बहुवन्दानां बहुत्वात् तच्चितावह्नीनां बहुत्वम्। [अयं वधरूपो विद्रवः। अतीतेऽपि विषये दीप्तावेशाद्दैतानेते इति च बुद्धौ प्रत्यक्षीकृत्य निर्देशः, अत एव भाविकालङ्कारः, स च गृध्रैरेव धूमैरिति व्यस्तरूपकेण सघनमिवेत्युत्प्रेक्षया च संसृष्टः]। स्रग्धरा वृत्तम्॥ २८॥

चाण। आ: !! केन ? (प)

राजा। नन्दकुलविद्वेषिणा दैवेन। (फ)

चाण। दैवम् अविद्वांस: प्रमाणयन्ति। (ब)

राजा। विद्वांसोऽपि अविकत्थना (भ) भवन्ति।

चाण। [क्रोधं नाटयन्]। वृषल! वृषल! भृत्यमिव माम् आरोढुम् इच्छसि ? (म)—

शिखां मोक्तुं बद्धामपि पुनरयं धावति कर:,

[भूमौ पादप्रहारं कृत्वा]।

प्रतिज्ञामारोढुं पुनरपि चलत्येष चरण:।

प्रणाशान्नन्दानां प्रशममुपयातं त्वमधुना,

परीत: कालेन ज्वलयसि पुन: क्रोधदहनम् ॥ २९ ॥

---

(प) आ: !! केनेति।—[इयं तर्जनरूपा द्युति:।

(फ) नन्देत्यादि।—[एतदादिक्रोधसंरब्धयोरन्योऽन्याधिक्षेपो विरोधनम्]।

(ब) अविद्वांस:,—अपण्डिता:। दैवं—भाग्यम्। प्रमाणयन्ति—प्रमाणीकुर्वन्ति, कार्य्यसाधनतया अनुमिमते इति भाव:; तथा चोक्तं—"दैवेन देयमिति कापुरुषा वदन्ति" इति।

(भ) अविकत्थना:,—आत्मश्लाघारहिता:।

(म) आरोढुमिच्छसि—अधिक्षेप्तुं प्रवर्त्तसे इत्यर्थ:।

वृषलवचसा अतिक्रुद्ध: चाणक्य: स्वामवस्थामाह, शिखामिति।—शिखां बद्धामपि बद्धुमिष्टामपि, ["आशंसायां भूतवच्च" (३।३।१३२ पा०) इति क्त-प्रत्यय:, समनाङ्क्षे अस्या बन्धनस्य वक्ष्यमाणत्वात्; वक्ष्यति च "पूर्णप्रतिज्ञेन मया केवलं बध्यते शिखा" इति] प्रतिज्ञापारगमनादिति भाव:, मोक्तुं स्खलयितुम्, अयं कर: पुन: धावति शेषोऽस्तीति मत्वा इति भाव:; एष चरण: प्रतिज्ञाम् आरोढुं कर्त्तुं, पुन: चलति; अधुना कालेन मृत्युना, परीत: प्राप्त इव, त्वं नन्दानां प्रणाशात् दाक्ष्याभावात् इति अर्थात्, प्रशमं शान्तिम्, उपयातं मम क्रोधदहनं कोपवह्निं, पुन: ज्वलयसि उद्दीपयसि। [उपसर्गहीनो ज्वलधातु: वैकल्पिकघटादि:] (पुनरित्युक्ति: पूर्ववत् दाक्ष्यसम्पत्त्या दाहकत्वसम्भावनार्थं)। [अत्र वीरो रस: स्थायी क्रोधेन अनुभावेन पौष्कल्यं नीत:। अत्र त्वं कालेन परीत इव इति तात्पर्यात् प्रतीयमाना

राजा। [ सावेगं स्वगतम् ]। अये ! तत् कथं सत्यमेव कुपित आर्य्यः !! (य) तथा हि—

संरम्भस्पन्दिपक्ष्मक्षरदमलजलक्षालनक्षामयाऽपि
भ्रूभङ्गोद्भेदधूमं ज्वलितमिव पुरः पिङ्गया नेत्रभासा।
मन्ये रुद्रस्य रौद्रं रसमभिनयतस्ताण्डवे संस्मरन्त्या,
सञ्जातोदग्रकम्पं कथमपि धरया धारितः पादघातः ॥३०॥

चाण। [ कृतकं कोपं संहृत्य ]। वृषल ! वृषल ! अलम् उत्तरोत्तरेण ? यदि अस्मत्तो वरीयान् (र) राक्षसोऽवगम्यते, तदा

---

उत्प्रेक्षा नामालङ्कारः। पादत्रये पुनः-शब्दोपादानादनवीकृतत्वं दोषः ]। शिखरिणी वृत्तम् ॥ २९ ॥

(य) मया तदाज्ञया एवं चाणक्यगुरोः कैतवेन कोपितोऽपीति वाक्यमत्र ऊहनीयम्। सत्यमेवेत्युक्तेः चाणक्योपदेशेनैव कृतककोपस्य सम्भाव्यतया कुतस्तर्हि कथमस्य सत्यकोपता ? अतो नास्य सङ्गच्छतेति भावः।

चाणक्यकोपचिह्नमेव दर्शयन्नाह, संरम्भेति।—संरम्भात् कोपात्, ("संरम्भः सम्भ्रमे कोपे" इति कोषः) स्पन्दिनः चलतः, पक्ष्मणः नेत्रलोम्नः, क्षरतः निःसरतः, अमलजलस्य अश्रुणः, क्षालनेन क्षामया क्षीणयाऽपि, पिङ्गया अरुणया, नेत्रभासा नयनकान्त्या कर्त्र्या, भ्रूभङ्गोद्भेदधूमं भ्रुवोः भङ्गः भ्रूभङ्गः भ्रूकुटिः, तस्य उद्भेद एव धूमः यस्मिन् कर्मणि तद्यथा तथा, पुरोभागे ज्वलितमिव दीप्तमिव, [ भावे क्तः। वह्निज्वलदवस्थायां धूमः उद्गच्छतीति वस्तुस्थितिः ] ताण्डवे रौद्रनृत्यविशेषे, ("उद्धतं ताण्डवं प्रोक्तम्" इति दशरूपकलक्षणात्) रौद्रं रसम् अभिनयतः दर्शयतः, रुद्रस्य ["अधीगर्थदयेशां कर्मणि" (२।३।५२ पा० इति कर्मणि षष्ठी ] संस्मरन्त्या धरया पृथिव्या, पादघातः चाणक्यकृतः पादप्रहारः, सञ्जातोदग्रकम्पं सञ्जातः उत्पन्नः, उदग्रः महान्, कम्पो यत्र तत् यथा तथा, कथमपि धारितः इति मन्ये सम्भावयामि। [ अत्र रौद्रताण्डवकारिणो रुद्रस्य पादघात इव अतिक्रूरः चाणक्यपादघातः इति रौद्रो रसः वीररसोऽङ्गम्। इयम् उद्वेजनरूपा द्युतिः। अत्र द्वितीयपादे "भ्रूभङ्गोद्भेदधूमम्" इत्यत्र रूपकालङ्कारः ज्वलितमिवेति क्रियोत्प्रेक्षया, तथा तृतीयपादे "मन्ये" शब्दोत्थापितया च उत्प्रेक्षया संस्मरन्त्येति स्मरणालङ्कारेण च संसृष्टः ]। स्रग्धरा वृत्तम् ॥ ३० ॥

(र) वरीयान्—अतीव श्रेयान्। [ उरुशब्दात् ईयसुन्, वरादेशश्च ]।

इदं शस्त्रं तस्मै दीयताम्। [इति शस्त्रमुत्सृज्य उत्थाय च प्रत्यवेक्ष्य आकाशे लक्ष्यं बद्धा स्वगतम्]। राक्षस! राक्षस! एष एव भवतः कौटिल्यबुद्धिविजिगीषोर्बुद्धेः प्रकर्षः,—

चाणक्यतः स्खलितभक्तिमहं सुखेन,
जेष्यामि मौर्य्यमिति सम्प्रति यः प्रयुक्तः।
भेदः किलैष भवता सकलः स एव,
सम्पत्स्यते शठ! तवैव हि दूषणाय॥ २१॥

[इति निष्क्रान्तः]।

राजा। आर्य्य! वैहीनरे! अद्य प्रभृति अनादृत्य चाणक्यं चन्द्रगुप्तः स्वयमेव राज्यकार्य्याणि करिष्यतीति गृहीतार्थाः प्रकृतयः क्रियन्ताम्।

कञ्चु। [स्वगतम्]। कथं, निरुपपद (ख) एव चाणक्यः, न आर्य्यचाणक्य इति! हन्त! सत्यमेव हृतोऽधिकारः, अथवा, न खलु अत्र वस्तुनि देवं दोषेण अवगन्तुम् अर्हामि—

स दोषः सचिवस्यैव यदसत् कुरुते नृपः।
याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम्॥ २२॥

---

सम्प्रति आत्मबुद्धिप्रकर्षं दर्शयन् राक्षसः स्वयमेव स्वानिष्टं साधितवानित्याह, चाणक्यत इति।—शठ! हे धूर्त्त! अहं चाणक्यतः स्खलितभक्तिं च्युतानुरागं, [भक्तिशब्दे परे पुंवद्भावविचारस्तु "सा खलु विदितभक्तिं मां महर्षये निवेदयिष्यति" इत्यभिज्ञानशकुन्तलवाक्यस्य अस्मत्कृतटीकायां २१ पृष्ठे, तथा अस्य नाटकस्य ६६ पृष्ठे द्रष्टव्यः] मौर्य्यं चन्द्रगुप्तं, सुखेन अनायासेन, जेष्यामि इति बुद्ध्या भवता य एषः सकलः सम्पूर्णः, भेदः प्रयुक्तः प्रयोगः कृतः, स एव तवैव हि निश्चितं, दूषणाय मलयकेतोर्भेदाय, ["क्लृपि सम्पद्यमाने" (वा०) इति चतुर्थी] सम्पत्स्यते परिणंस्यति। [इदं अनुष्टुभि-प्रकरणं विचक्षणम्। चन्द्रगुप्तेन चाणक्यस्य भेदसङ्घटनार्थं कृतेन उपायेन मलयकेतुना सह भेदसाधनात् विरूपसङ्घटनरूपो विषमालङ्कारः]। वसन्ततिलकं वृत्तम्॥ २१॥

(ख) निरुपपदः,—नास्ति उपपदं—सन्निहितपदं यस्य सः, गौरवसूचक-आर्य्यादिपदशून्य इत्यर्थः।

देवस्य दोषाभावो यदुक्तं तत् समर्थयते, स दोष इति।—नृपः यत् असत्

राजा। आर्य्य! किं विचारयसि?

कञ्चु। देव! न किञ्चित् विचारयामि, किन्तु एतत् विज्ञापयामि, दिष्ट्या देव इदानीं देवः संवृत्त (व) इति।

राजा। [आत्मगतम्]। एवम् अस्मासु गृह्यमाणेषु (श) स्वकार्य्यसिद्धिकामः सकामो (ष) भवतु आर्य्यः। [प्रकाशम्]। शोणोत्तरे! अनेन शुष्ककलहेन शिरोवेदना मां बाधते, तत् शयनगृहम् आदेशय।

प्रती। एदु एदु महाराओ। *

राजा। [आसनात् उत्थाय आत्मगतम्]।

आर्य्याज्ञयैव मम लङ्घितगौरवस्य
बुद्धिः प्रवेष्टुमवनेर्विवरं प्रवृत्ता।

---

* एतु एतु महाराजः।

---

कुरुते आचरति, स नृपस्य असदाचरणं, [विधेयप्राधान्यात् पुंस्त्वम्] सचिवस्य मन्त्रिण एव, दोषः, न तु नृपस्य। तत्र दृष्टान्तयति—गजः यन्तुः निषादिनः, प्रमादेन अनवधानतया, व्यालत्ववाच्यतां दुष्टताऽपवादं, याति प्राप्नोति ; मन्त्रिणा राजा कुपथगमनात् निवारयितव्यः, तदकरणे तस्यैव दोषभागित्वं न तु राज्ञ इति भावः। [अत्र सधर्मस्य वस्तुनो गजस्य प्रतिबिम्बनात् दृष्टान्तो नामालङ्कारः]। पथ्यावक्त्रं वृत्तम् ॥ २२ ॥

(व) देवः संवृत्तः,—देवपदवाच्यः जात इत्यर्थः, पराधीनताया मुक्तत्वादिति भावः।

(श) एवम् आवयोः कृतकेऽपि विरोधे लोकैस्सत्यत्वेन गृहीते चार्य्यचिकीर्षितो मलयकेतु-राक्षसयोः भेदः सुष्ठु सम्पत्स्यते इति भावः। [इदं विवक्षाविशेषः-सूचनं प्ररोचना]।

(ष) सकामः,—सफलमनोरथः।

गुरोराज्ञयावमाननाकरणे आत्मनोऽविनयमाशङ्क्य आह, आर्य्याज्ञयैवेति।—आर्य्यस्य चाणक्यस्य, आज्ञया एव आदेशेन एव, (न तु स्वबुद्ध्या) लङ्घितगौरवस्य लङ्घितम् अतिक्रान्तं, गौरवं सम्मानं येन तादृशस्य, मम बुद्धिः अवनेः पृथिव्याः, विवरं

ये सत्यमेव न गुरून् प्रतिमानयन्ति
तेषां कथं नु हृदयं न भिनत्ति लज्जा ? ॥ ३३ ॥

[इति निष्क्रान्ताः सर्वे]।

इति तृतीयोऽङ्कः ॥ ३ ॥

छिद्रं, प्रवेष्टुं प्रवृत्ता उद्यता, लज्जेति शेषः। एवमात्मनोऽविनये आर्य्यस्यैव कारण-निरूढ़ा अन्यथा गुरोरवमाननाकरणे दोषमाह, ये इति।—ये जनाः, सत्यमेव (न तु कपटमिव मिथ्याकोपार्जनायेति भावः) गुरून् न प्रतिमानयन्ति नाद्रियन्ते, नु वितर्के, लज्जा तेषां हृदयं कथं न भिनत्ति ? न विदारयति ? अपि तु विदारणमेव उचितम् इति मन्ये इति भावः। तथा चोक्तं—"विद्युत्प्रणाशं स वरं प्रनष्टो यद्वोर्ध्वशोषं तृणवत् विशुष्कः। अर्थे दुरापे किमुत प्रवासे न मानितोऽवाञ्छित यो गुरूणाम् ॥" इति। [इत्थमत्र नियताप्तिः प्रदर्शिता। अत्र लज्जेः पृथिवीविवरप्रवेशं प्रति वाञ्छित-गौरवत्वस्य हेतुविषया उपन्यासात् पदार्थहेतुकं काव्यलिङ्गमलङ्कारः]। वसन्ततिलकं वृत्तम् ॥ ३३ ॥

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन कुलपतिना "वि,ए" इत्युपनामक-
श्रीमज्जीवानन्दविद्यासागर-भट्टाचार्य्यविरचितायां, तदात्मजाभ्यां
श्रीमदाशुबोधविद्याभूषण-श्रीमन्नित्यबोधविद्यारत्नाभ्यां
पुनर्विरचित-परिवर्द्धितायां सुखबोधिनी-
समाख्यायां मुद्राराक्षसव्याख्यायां
तृतीयोऽङ्कः ॥ ३ ॥

# चतुर्थोऽङ्कः ।

[ ततः प्रविशति अध्वगवेशः (क) पुरुषः ] ।

पुरु । हीमाणहे !! हीमाणहे !! (ख)—

जोअणसअं समधिअं को णाम गदागदं इह करेइ ।

अत्थाणगमणगुरुई पहुणो अण्णा जइ ण होइ * ॥१॥

---

* आश्चर्यम् !! आश्चर्यम् !!

योजनशतं समधिकं को नाम गतागतमिह करोति ।

अस्थानगमनगुरुका प्रभोराज्ञा यदि न भवति ॥

---

( क ) अध्वगवेशः,—अध्वनि—पथि, गच्छन्ति इति अध्वगाः,—पथिकाः, [ "अन्तात्यन्ताध्व—" ( ३।२।४८ पा० ) इति डः ] तेषां वेश इव वेशः यस्य सः, ( "अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि" इत्यमरः )। [ एतद्विस्तरस्तु उत्तररामचरितस्य अस्मत्कृतटीकाया द्वितीयाङ्कप्रारम्भे द्रष्टव्यः ] ।

(ख) अथ चतुर्थेऽङ्के राक्षस-चारसंवादरूपा अल्पा कथा प्रकटी क्रियते । राक्षसादिष्टः करभकः कुसुमपुरे स्थितं स्तनकलसाख्यवैतालिकं प्रति राक्षसोपदिष्ट-चन्द्रगुप्तप्रभुनिदिष्टकार्य्यं सम्पाद्य त्वरितमेव परावृत्तः तूर्णं सुदूरयातायातहेतुतया स्वामिनिर्देशं समर्थयमानः ब्रवीति, हीमाणहे इति ।—[अयम् आश्चर्य्यसूचको निपातः, आतिशय्यद्योतनाय द्विरुक्तिः ] ।

तदेवाश्चर्य्यं समर्थयितुमाह, योजनशतमिति ।—अस्थाने अकाण्डे, अयोग्यस्थाने वा, गमनेन गुरुका गुर्वी, अनुल्लङ्घनीया इत्यर्थः, प्रभोः स्वामिनः, आज्ञा आदेशः, यदि न भवति, तदा इह अस्मिन् जगति, समधिकं सङ्गतमधिकं यत्र [ "प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः" ( वा० ) इति उत्तरस्थ-गतपदलोपी बहुव्रीहिः ] साधिकमित्यर्थः, योजनशतं व्याप्य को नाम [ "जोअणसअं समधिअं" इत्यत्र "राअणिओओ महीअं" इति पाठे—राजनियोगो महीयानिति संस्कृतं ] गतागतं करोति ? न कोऽपीत्यर्थः, [ गतागतमिति भावे क्तः, समाहारद्वन्द्वश्च ]। प्रभो-राज्ञयैव मया इयद्दूरं गतमागतञ्च इत्याशयः। [ अत्र प्रभोरलङ्घनीयादेशसापेक्ष एव अनुजीविनां योजनशताधिकगमनागमनप्रयासस्वीकारः इति अप्रस्तुतात् सामान्यात् ममापि अस्मिन् शताधिकयोजनगमनागमनक्लेशस्वीकारे अलङ्घ्यः प्रभो-रादेश एव निदानम् इति प्रस्तुतस्य विशेषस्य अवगमात् अप्रस्तुतप्रशंसाऽलङ्कारः ] ॥ १ ॥

ता जाव अमच्चरक्खसस्स ज्जेव गेहं गच्छामि । [ परिक्रम्य ] । भो ! को एत्थ दुआरिआणं ? णिवेदेह दाव भट्टिणो अमच्चरक्खसस्स, "एसो क्खु करहको करहक विअ कज्जं तुवरंतो ( ग ) पाडलिपुत्तादो आअदो" त्ति । *

दौवारिकः । [ प्रविश्य ] । भद्द ! मा उच्चं मंतेहि ; एसो क्खु भट्टा अमच्चरक्खसो कज्जचिंताजणिदेण जाअरेण समुप्पस्स-सीसवेअणो अज्ज वि दाव ण सअणदलं मुंचदि ; ता चिट्ठ दाव मुहुत्तअं, जाव से लद्धावसरो भविअ भवदो आअमणं णिवेदेमि । †

पुरु । भद्दमुह ! जधा दे (घ) रोअदि । ‡

[ ततः प्रविशति शयनगत आसनगतेन शकटदासेन अनुगीयमानश्चिन्तितो राक्षसः ] ।

राक्ष । [ आत्मगतम् ] ।

मम विमृशतः कार्य्यारम्भे विधेरविधेयतां,
सहजकुटिलां कौटिल्यस्य प्रचिन्तयतो मतिम् ।

---

* तत् यावत् अमात्यराक्षसस्यैव गेहं गच्छामि । भोः ! कोऽत्र दौवारिकाणाम् ? निवेदय तावत् भर्त्तुः अमात्यराक्षसस्य "एष खलु करभकः करभक इव कार्य्यं त्वरयन् पाटलिपुत्रादागतः" इति ।

† भद्र ! मा उच्चैः मन्त्रय ; एष खलु भर्त्ता अमात्यराक्षसः कार्य्यचिन्ता-जनितेन जागरेण समुत्पन्नशीर्षवेदनोऽद्यापि तावत् न शयनतलं मुञ्चति ; तस्मात् तिष्ठ तावन्मुहूर्त्तं, यावत् तस्य लब्धावसरो भूत्वा भवत आगमनं निवेदयामि ।

‡ भद्रमुख ! यथा ते रोचते । ["तधा करेहि" इत्यधिकपाठे—"तथा कुरु" इति च ] ।

---

(ग) करभक इव—करिशावक इव । त्वरयन्—शीघ्रं सम्पादयन् ।

(घ) ते—तुभ्यम् । [ "रुच्यर्थानां प्रीयमाणः" ( १।४।३३ पा० ) इति सम्प्रदानत्वम् ] ।

तीतिवीयमेन आत्मनं विजीतमीहमानः राक्षसः सर्वोत्कर्षेणापि अतीतिप्रयोगस्य

अथ च विहिते मत्कृत्यानां निकाममुपग्रहे,
कथमिदमिहेत्युन्निद्रस्य प्रयान्त्यनिशं निशाः ॥ २ ॥

अपि च—

कार्य्योपक्षेपमादौ तनुमपि रचयंस्तस्य विस्तारमिच्छन्,
बीजानां गर्भितानां फलमतिगहनं गूढमुद्भेदयंश्च ।

---

प्रतिकूलदैववशेन व्यर्थताऽनुचिन्तनात् वैमनस्यमधिगच्छन् आह, ममेति।—कार्य्यारम्भे कार्य्यारम्भादारभ्य, कार्य्यसाधननिमित्तं वा, विधेः दैवस्य, अविधेयतां प्रतिकूलतां, विमृशतः सर्वं दैवस्यैवाधीनं, न तु दैवं कस्यापीति चिन्तयत इत्यर्थः, तथा सहज-कुटिलां स्वभाववक्रां, दुरधिगमामित्यर्थः, कौटिल्यस्य चाणक्यस्य, मतिं प्रचिन्तयतः तदुद्भावितान् विषयान् हृदा लक्षयतः, अथ मत्कृत्यानां मम विषकन्यादिरूपकपट-कार्य्याणाम्, उपग्रहे प्रतीकारे, निकामं सम्यक्, विहिते कृते सति, चाणक्येनेति शेषः, इदं कार्य्यं केन प्रकारेण, साधितमिति चिन्तया इति शेषः, उन्निद्रस्य निद्रारहितस्य, मम इह अनिशं निशाः रजन्यः, प्रयान्ति गच्छन्ति, तत्तद्विषयचिन्तया जाग्रतैव मया वह्व्यो निशा याप्यन्ते इत्यर्थः। [अत्र विमर्श-चिन्तयोरुन्निद्रत्वं प्रति हेतुत्वात् पदार्थ-हेतुकं काव्यलिङ्गम्]। हरिणी छन्दः ॥ २ ॥

नाटकप्रणयनसाम्येन स्वकृत्यं वर्णयन्नाह, कार्य्योपक्षेपमिति।—आदौ प्रथमं, पक्षान्तरे—आदौ मुखसन्धौ, "यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा। प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम् ॥" इत्युक्तलक्षणे नाटकारम्भे, तनुमपि स्वल्पमपि, कार्य्यस्य मलयकेतुनिग्रहादिरूपस्य, उपक्षेपम् उपायम्, [उपक्षिप्यते आरभ्यतेऽनेनेति उपक्षेपः सामान्युपायः तं] रचयन् प्रयुञ्जानः, पक्षान्तरे—कार्य्यस्य अभिनेयार्थस्य, उपक्षेपं "काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः" इत्युक्तलक्षणं प्रस्तावनारूपमित्यर्थः, रचयन् प्रणयन्, ततः तस्य कार्य्यस्य, विस्तारं बाहुल्यम्, इच्छन्, अन्यत्र—तस्य बीजस्य, विस्तारं व्यक्तिं, "समुत्पन्नार्थबाहुल्यं ज्ञेयं परिकरः पुनः" इत्युक्तलक्षणं परिकरम् इत्यर्थः, प्रति-मुखसन्धौ इच्छन् अभिलषन्, अथ गर्भितानां जातगर्भाणां, फलजननोन्मुखानामित्यर्थः, बीजानां साधनानां, गूढं प्रागनभिव्यक्तत्वात् गुप्तं, फलम् अतिगहनं दुर्बोधं यथा तथा, उद्भेदयन् प्रकटयन्, अन्यत्र—गर्भितानां जातगर्भाणां, दृष्टनष्टानामित्यर्थः, बीजानाम् "अल्पमात्रं समुद्दिष्टं बहुधा यत् विसर्पति। फलस्य प्रथमो हेतुः बीजं तदभिधीयते ॥" इत्युक्तलक्षणानां फलप्रधानहेतूनाम्, अतिगहनम् अतिदुर्बोधं, फलं गूढं यथा तथा उद्भेदयन् "फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन। गर्भो यत्र

कुर्वन् बुद्ध्या विमर्शं प्रसृतमपि पुनः संहरन् कार्य्यजातं,
कर्त्ता वा नाटकानामिममनुभवति क्लेशमस्मद्विधो वा ॥ ३ ॥

तदपि नाम दुरात्मा चाणक्यवटुः,—"

दौवारिकः। [उपसृत्य]। जेदु जेदु--" * (ङ)

राक्ष। "—अभिसन्धातुं (च) शक्यः स्यात्?—"

दौवा। "—अमच्चो।†"

राक्ष। [वामाक्षिस्पन्दं सूचयित्वा आत्मगतम्]। "दुरात्मा चाणक्य-

---

* जयति जयति।

† अमात्यः।

---

समुद्भेदो ह्रासान्वेषणवान् मुहुः॥" इत्युक्तलक्षणगर्भसन्धौ कार्य्यरूपेण प्रकाशयन्, बुद्ध्या विमर्शम् अनुसन्धानम्, इदमित्थं कर्त्तव्यं न वेति सन्दिह्य तन्निर्णयाय कर्त्तव्यताऽऽलोचनञ्च, कुर्वन्, तथा प्रसृतं विस्तृतमपि, कार्य्यजातं संहरन् प्रकाशभिया सङ्कोचयन्, अन्यत्र—तस्यैव बीजस्य, "यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः। शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः॥" इत्युक्तलक्षणे विमर्शसन्धौ बुद्ध्या विमर्शम् अनुसन्धानं, कुर्वन् सम्पादयन्, तथा प्रसृतं विस्तृतं, कार्य्यजातं मुखसन्ध्याद्यर्थजातमित्यर्थः, संहरन् "बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्। ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत्॥" इत्युक्तलक्षणनिर्वहणसन्धौ ऐकार्थ्यमुपनयन्, अस्मद्विधो वा मन्त्री वेत्यर्थः, नाटकानां कर्त्ता प्रणेता वा, इमं राजनीतिप्रयोगरूपं काव्यार्थरचनारूपञ्च, क्लेशम् अनुभवति प्राप्नोति। [एतेन कविरत्यद्भुततरनीतिविषयकस्य "मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः" इत्युक्तलक्षणपञ्चसन्धिसन्निवेशसुन्दरस्य स्वरचितनाटकस्यास्य प्रणयनक्लेशं राक्षसमुखेन वर्णितवानिति ध्वन्यते। अत्र प्रस्तुताप्रस्तुतयोः मन्त्रि-नाटककारयोः एकधर्माभिसम्बन्धरूपतया दीपकालङ्कारः, स च श्लेषानुप्राणित इत्यनयोरङ्गाङ्गिभावेन सङ्करः]। स्रग्धरा वृत्तम् ॥ ३ ॥

(ङ) इदं तृतीयं पताकास्थानम्। (एतदस्माभिः विवेचितम् उत्तररामचरित-व्याख्याने ८० पृष्ठे)।

(च) अभिसन्धातुं—प्रतारयितुम्। ["अतिसन्धातुम्" इति पाठे—वञ्चयितुम्]।

वटुर्जयति, अभिसन्धातुं शक्यः स्यात् अमात्यः” इति वामाक्षि-स्पन्दनेन प्रस्तावगतं (छ) प्रतिपादयति । तथाऽपि न उद्यमस्त्याज्यः । [प्रकाशम्] । भद्र ! किमसि वक्तुकामः ?

दौवा । अमच्च ! एसो क्खु करभओ पाडलिपुत्तादो आअदो इच्छदि अमच्चं पेक्खिदुं । *

राच । अवारितं प्रवेशयैनम् ।

दौवा । जं अमच्चो आणवेदि । [इति निष्क्राम्य पुरुषम् उपसृत्य] । भद्द ! एसो क्खु अमच्चो चिट्ठदि, ता उवसप्प णं †

[इति निष्क्रान्तो दौवारिकः] ।

कर । [राचसमुपसृत्य] । जेदु जेदु अमच्चो । ‡

राच । [नाट्येन अवलोक्य] । भद्र करभक ! स्वागतम् ? उपविश्यताम् ।

कर । जं अमच्चो आणवेदि ! § [इति भूमौ उपविशति] ।

राच । [स्वगतम्] । अथ कस्मिन् प्रयोजने मयाऽयं प्रणिधिः प्रहित इति प्रभूतत्वात् (ज) प्रयोजनानां न खलु अवधारयामि । [इति चिन्तां नाटयति] । (झ)

---

* अमात्य ! एष खलु करभकः पाटलिपुत्रादागतः इच्छति अमात्यं प्रेक्षितुम् ।

† यदमात्य आज्ञापयति । भद्र ! एष खलु अमात्यस्तिष्ठति, तदुपसर्प एनम् ।

‡ जयति जयति अमात्यः ।

§ यदमात्य आज्ञापयति ।

---

(छ) इति—पूर्वोक्तं वचनजातं, [कर्तृ] वामाक्षिस्पन्दनेन हेतुभूतेन, प्रस्तावगतं—प्रसङ्गगतं, विफलमिति शेषः, मम उद्योगवैफल्यमित्यर्थः । [अत्र "वागीश्वरी प्रस्तावगता" इति पाठे—वागीश्वरी—उपश्रुतिरूपा, वामाक्षिस्पन्दनेन प्रस्तावं—संवादं, गता—प्राप्ता सती, पूर्वोक्तमर्थं सूचयतीत्यर्थः । तत्र तु इदं कार्य्यसङ्ग्रहणम् आदानं नाम विमर्शसन्धेरन्यतमङ्गम् । चाणक्यकर्तृकस्य राचसाभिसन्धानरूपस्य कार्य्यस्य राचसेनैव तदुपश्रुतिदुःशकुनप्रतिपादनद्वारा सङ्ग्रहणात्] ।

(ज) प्रभूतत्वात्—बाहुल्यात् ।

(झ) राचस-करभकसंवादावसरे भागुरायणेन मलयकेतुमभिसन्धातुं तयोः

[ ततः प्रविशति वेत्रपाणिः अपरः पुरुषः ] ।

पुरु । ओसलध अज्जा ! ओसलध । अवेध, माणहे अवेध । (ञ) किं ण पेक्खध ?—

दूले पच्चासत्ती दंसणमवि दुल्लहं अधण्णेहिं ।

कल्लाणकुलघराणं देवाणं अ मणुस्सदेवाणं * ॥ ४ ॥

[ आकाशे ] । अज्जा ! किं भणाध, किं णिमित्तं एसा ओसालणा करीअदि ? अज्जा ! एसो क्खु कुमालो मलअकेटू समुप्पण्णसीसवेअणं अमच्चरक्खसं सुणिअ पेक्खिदुं इध ज्जेव आअच्छदि । एदिणा कालणेण ओसालणा करीअदि । †

[ इति निष्क्रान्तः पुरुषः ] ।

---

* अपसरत आर्य्याः ! अपसरत । अपेत मान्याः ! अपेत । किं न पश्यत ?—

दूरे प्रत्यासत्तिर्दर्शनमपि दुर्लभमधन्यैः ।

कल्याणकुलगृहाणां देवानाञ्च मनुष्यदेवानाम् ॥

† आर्य्याः ! किं भणथ, किं निमित्तमेषा अपसारणा क्रियते ? आर्य्याः ! एष खलु कुमारो मलयकेतुः समुत्पन्नशीर्षवेदनम् अमात्यराक्षसं श्रुत्वा प्रेक्षितुम् इह एव आगच्छति । एतेन कारणेन अपसारणा क्रियते ।

---

प्रवेशावसरदानाय राक्षसविलानाटनं कविना उपनिबद्धमिति द्रष्टव्यम् । [ इदमङ्कावतरणम्, अत्र राक्षसं प्रति करभकेण वक्ष्यमाणस्य मौर्य्य-चाणक्ययोः मिथो विरोधस्य पूर्व्वाय्यांनुसङ्गतत्वात् ] ।

(ञ) अपेत—अपगच्छत । [ अप + इण् + लोट् त । सप्तमे विभक्तिः ] ।

दूरे इति ।—कल्याणकुलगृहाणां निखिलमङ्गलालयानां, देवानां देवतानां, मनुष्यदेवानां राज्ञाञ्च, अधन्यैः अपुण्यवद्भिः नरैः, प्रत्यासत्तिः नैकट्यसम्बन्धः, दूरे, आस्तामिति शेषः, दर्शनमपि दुर्लभम् । [ अत्र नृप-देवयोः प्रकृताप्रकृतयोरेकधर्मसम्बन्धाद्दीपकालङ्कारः । "कल्लाणकुलघराणं देवाणं विअ मणुस्सदेवाणं" इति पाठे—"कल्याणकुलधराणां देवानामिव मनुष्यदेवानाम्" इति संस्कृतं, तदर्थस्तु—कल्याणकुलं धरन्तीति कल्याणकुलधराः महोन्नतवंशाः, मनुष्यदेवाः राजानः ; देवपक्षे—कल्याणः सुवर्णमयः, कुलधरः कुलपर्व्वतः मेरुर्येषामित्यर्थो ज्ञेयः ] । आर्य्या वृत्तम् ॥ ४ ॥

[ ततः प्रविशति भागुरायणेन कञ्चुकिना च
अनुगम्यमानो मलयकेतुः ]।

मल। [ निश्वस्य आत्मगतम् ]। अद्य दशमो मासस्तातस्य उपरतस्य। न च अस्माभिर्वृथा पुरुषकारम् उद्वहद्भिः तमुद्दिश्य तोयाञ्जलिरपि आवर्जितः। (ट) अथवा, प्रतिज्ञातम् एतत् पुरस्तात्—

वक्षस्ताड़नभिन्नरत्नवलयं भ्रष्टोत्तरीयांशुकं
हाहेत्युच्चरितार्त्तनादकरुणं भूरेणुरूक्षालकम्।
तादृश्यात्मजनस्य शोकजनितं सम्प्रत्यवस्थान्तरं,
शत्रुस्त्रीषु मया विधाय गुरवे देयो निवापाञ्जलिः॥५॥

तत् किम् इह बहुना—

उद्वहता धुरमकापुरुषानुरूपां
गन्तव्यमाजिविहितेन पितुः पथा वा।

---

(ट) उपरतस्य—मृतस्य। आवर्जितः,—दत्तः।

पितरि शत्रुकृतमत्याचारं संस्मृत्य प्रतिहिंसाऽनलदग्धः एतावताऽपि कालेन प्रतीकाराकरणात् खिद्यमान आह, वक्ष इति।—मया मातृजनस्य शोकजनितं वक्षस्ताड़नेन भिन्नानि भग्नानि, रत्नवलयानि यत्र तादृशं, तथा भ्रष्टं स्वस्थानात् स्खलितम्, उत्तरीयांशुकम् उत्तरीयवस्त्रं यस्मिन् तत्, तथा हाहा इति उच्चरितेन आर्त्तनादेन करुणं दीनं, तथा भूरेणुभिः धूलिभिः, रूक्षा अचिक्कणाः, अलकाः चूर्णकुन्तलाः यत्र तथोक्तम्, ("अलकाश्चूर्णकुन्तलाः" इत्यमरः) तादृक् अवस्थान्तरं दशाविशेषं, सम्प्रति शत्रुस्त्रीषु विषये विधाय कृत्वा, गुरवे पित्रे, निवापाञ्जलिः श्राद्धतर्पणमित्यर्थः, ("पितृदानं निवापः स्यात्" इत्यमरः) देयः। [ अत्र शत्रुभिः मातृजनेष्विवास्माभिः विपक्षावरोधेषु दशा पातनीय इति समविनिमयरूपः परिवृत्तिरलङ्कारः ]। शार्दूलविक्रीड़ितं वृत्तम्॥ ५॥

वीरः स्ववीर्य्येण शत्रून् पराभवेत्, तदन्यथा प्राणानेव विमुञ्चेदिति मनसि चिन्तयन्निदानीं स्वकर्त्तव्यमाह, उद्वहतेति।—अकापुरुषानुरूपां वीरजनोचितां, धुरं भारम्, उद्वहता उद्वहता, [ "समुदाङ्भ्यो यमोऽग्रन्थे" (१।३।७५ पा०) इति सूत्रेण आत्मनेपदस्य अनित्यत्वेऽपि "स्वरितञितः" (१।३।७२ पा०) इति सूत्रे कर्त्रभिप्राय

आच्छिद्य वा स्वजननीजनलोचनेभ्यो
नेयो मया रिपुवधूनयनानि वाष्पः ॥ ६ ॥

[प्रकाशम्]। आर्य्य जाजले! उच्यन्ताम् अस्मद्वचनात् अनुयायिनो राजानः, "एक एव अहम् अमात्यराक्षसस्य अतर्कितागमनेन (ठ) प्रीतिम् उत्पादयितुम् इच्छामि, अतः कृतम् अनुगमनक्लेशेन" (ड) इति।

कञ्चु। यत् आज्ञापयति कुमारः। [परिक्रम्य आकाशे]। भो भो राजानः! कुमारः समाज्ञापयति, "न खलु अहं केनचित् अनुगन्तव्यः" इति। [विलोक्य सहर्षम्]। कुमार! कुमार! एते भवदाज्ञासमनन्तरमेव प्रतिनिवृत्ताः सर्वे एव राजानः। पश्यतु कुमारः,—

सोत्सेधः स्कन्धदेशैः खरतरकविकाकर्षणात्यर्थभुग्नैः
अश्वाः कैश्चिन्निरुद्धाः खमिव खुरपुटैः खण्डयन्तः पुरस्तात्।

---

इत्युक्तेः स्वीकृतोद्यमरूपक्रियाफलस्य जननीवाष्पापनयनरूपस्य रिपुवधूनयनानित्वा-श्रयेण कर्त्रभिप्रायत्वाभावादत्र परस्मैपदं प्रयुक्तमित्याशयः] मया आजिविहितेन रणकृतेन, पितुः पथा पितृगतेन पथा मरणरूपेण, गन्तव्यं वा, पितुराजिमरणाभावेऽपि तस्य मरणरूपपथ इह विवक्षितः स्वमरणप्रकारकथनायैव आजिविहितेनेत्युक्तम्; स्वजननीजनलोचनेभ्यः स्वमातृजननेत्रेभ्यः, आच्छिद्य आकृष्य, वाष्पः रिपुवधूनयनानि शत्रुरमणीलोचनानि, नेयः प्रापणीयः वा. [नयतेः द्विकर्मकत्वात् "प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्" इत्युक्तेः मुख्यकर्मणि यत्] युद्धं कृत्वा मरिष्यामि अथवा रिपून् जित्वा मातृशोकमपनेष्यामि इति मे स्थिरः सङ्कल्पः। वसन्ततिलकं वृत्तम् ॥६॥

(ठ) अतर्कितागमनेन—सहसोपस्थित्या।

(ड) कृतमिति अलमर्थे; अनुगमनक्लेशेन साध्यं नास्तीत्यर्थः। [अत्र साधनक्रियां प्रति करणत्वात् तृतीया]।

मलयकेतुमनुगन्तुमुद्युक्तानां पुनः तदाज्ञया प्रतिनिवृत्तानाम् अश्वाद्यारूढभूपालानां तदानीन्तनीमवस्थां वर्णयन्नाह, सोत्सेधैरिति।—कैश्चित् भूमिपालैः, खरतराणां तीक्ष्णलौहकण्टककीलितानां, कविकानां खलीनानां, ("कविका तु खलीनो-ऽस्त्री" इत्यमरः) आकर्षणेन अत्यर्थभुग्नैः अतिवक्रैः, अत एव सोत्सेधैः उन्नतैः,

केचिन्मातङ्गमुख्यैर्विहतजवतया मूकघण्टैर्निवृत्ताः,
मर्य्यादां भूमिपाला जलधय इव ते देव! नोल्लङ्घयन्ति ॥७॥

मल। आर्य्य जाजले! त्वमपि सपरिजनो निवर्त्तस्व। भागुरायण एक एव माम् अनुगच्छतु।

कञ्चु। यत् आज्ञापयति कुमारः।

[इति सपरिजनो निष्क्रान्तः]।

मल। सखे भागुरायण! विज्ञापितोऽहम् इह आगच्छद्भिः भद्रभटप्रभृतिभिः, यथा "न वयम् अमात्यराक्षसद्वारेण कुमारम् आश्रयामहे, किन्तु कुमारस्य सेनापतिं शिखरसेनं द्वारीकृत्य दुष्टामात्यपरिगृहीतात् चन्द्रगुप्तात् अपरक्ताः सन्तः कुमारम् आभिरामिकगुणयोगादाश्रयणीयम् आश्रयामहे" इति, तत्र मया सुचिरमपि विचारयता तेषां वाक्यार्थोऽधिगतः। (ढ)

भागु। कुमार! नैव अयम् अत्यन्तदुर्बोधोऽर्थः। पश्य,

---

स्कन्धदघ्नैः उपलक्षिताः, ["इत्थम्भूतलक्षणे" (२।३।२१ पा०) इति विशेषणे तृतीया] तथा खुरपुटैः पुरस्तात् खम् आकाशं, खनन्त इव अश्वाः निरुद्धाः; (सवेगगमनकाले हि सहसा खलीनाकर्षणे कृते पश्चात्पादद्वयं भूमौ निधाय आभुग्नाग्रपादद्वयञ्च ऊर्द्ध्वीकृत्य पूर्वकायेन दण्डायमाना इव अश्वाः व्यात्तमपि मुखम् उन्नमय्य कुञ्चीकृतग्रीवादेशतया पृष्ठभागे स्थिरः प्रवेष्टुम् इव अवतिष्ठमाना गतिं निवारयन्ति इति तेषां स्वभावः)। केचित् भूपालाः, विहतजवतया विघ्नितवेगतया, मूकघण्टैः निःशब्दघण्टारवैः, मातङ्गमुख्यैः हस्तीन्द्रैः, निवृत्ताः; अतः हे देव! जलधयः वेलामिव भूमिपालाः ते तव, मर्य्यादाम् आज्ञां, न उल्लङ्घयन्ति न अतिक्रामन्ति; अप्रतिहताज्ञतया सर्वेऽपि ते वशीभूता इति भावः। [अत्र मातङ्गाश्वादीनां स्वभाववर्णनात् स्वभावोक्तिरलङ्कारः खनिव इत्युत्प्रेक्षया, जलधय इव इत्युपमया च संसृज्यते]। स्रग्धरा वृत्तम् ॥७॥

(ढ) द्वारीकृत्य—उपाधीकृत्य, अवलम्ब्य इत्यर्थः। आभिरामिकगुणयोगात्—रमणीयगुणशालित्वात्। (दुष्टामात्येति आभिरामिकगुणेति च यथाक्रमं चाणक्यमौर्य्ययोः दूषणाय इति ज्ञेयम्)। अधिगतः,—ज्ञातः। [अतः परं भागुरायणस्य मलयकेत्वभिसन्धानवचनं सर्वं बीजार्थस्यावमर्शनम्]।

विजिगीषुम् आत्मगुणसम्पन्नः प्रियहितद्वारेण आश्रयणीयम् आश्रयेदिति ननु न्याय्य एव अयम्।

मल। सखे भागुरायण! ननु अस्माकम् अमात्यराक्षसः प्रियतमो हिततमश्च।

भागु। कुमार! एवमेतत्, किन्तु अमात्यराक्षसः चाणक्ये बद्धवैरो न तु चन्द्रगुप्ते ; तत् यदि कदाचित् चन्द्रगुप्तः चाणक्यम् अतिजितकाशिनम् असहमानः साचिव्यात् अवरोपयेत्, ततो नन्दकुलभक्त्या नन्दान्वय एव अयमिति कृत्वा, सम्प्रसुहृज्जना-पेक्षया (च) च अमात्यराक्षसः चन्द्रगुप्तेन सह सन्दधीत। चन्द्रगुप्तोऽपि पितृपारम्पर्य्यागत एव अयमिति कृत्वा सन्धिम् अनुमन्येत ; एवं सति अस्मासु अपि कुमारो न विश्वसेत् इति अयम् एषां वाक्यार्थः।

मल। युज्यते। सखे भागुरायण! अमात्यराक्षसस्य गृहमार्गम् आदेशय।

भागु। इत इतः कुमारः। [इति उभौ परिक्रामतः]। कुमार! इदम् अमात्यराक्षसस्य गृहं, प्रविशतु कुमारः।

मल। एष प्रविशामि। [इति उभौ प्रवेशनं नाटयतः]।

राक्ष। [आत्मगतम्]। आः! स्मृतम्। [प्रकाशम्]। भद्र! अपि दृष्टः त्वया कुसुमपुरे वैतालिकः स्तनकलसः?

करभ। अमच्च! अध इं। *

मल। सखे! भागुरायण! कुसुमपुरवृत्तान्तो वर्त्तते, तत्रोपसर्पावः, (त) शृणुवस्तावत्—

* अमात्य! अथ किम्।

(च) सुहृज्जनेति।—सुहृज्जनाः,—चन्दनदास-शकटदासादयः, तेषाम् अपेक्षया—अनुरोधेन, तैः सह मिलनाकाङ्क्षया तेषां जीवनरक्षणाकाङ्क्षया वेत्यर्थः।

(त) नोपसर्पावः,—न समीपं गच्छावः।

मन्त्रभङ्गभयाद्राज्ञां कथयन्त्यन्यथा पुरः।
अन्यथा विवृतार्थेषु स्वैरालापेषु मन्त्रिणः ॥ ८ ॥

भागु। यत् आज्ञापयति कुमारः।

राक्ष। भद्र! अपि तत् कार्य्यं सिद्धम्?

कर। अमच्चस्स प्पसाएण सिद्धम्। *

मल। सखे भागुरायण! किं तत् कार्य्यम्?

भागु। कुमार! गहनः खलु सचिववृत्तान्तो न एतावता परिच्छेत्तुं शक्यते। अवहितस्तावत् श्रोतुमर्हति कुमारः।

राक्ष। भद्र! विस्तरेण श्रोतुम् इच्छामि।

कर। सुणादु अमच्चो, अत्थि दाव अहं अमच्चेणाणत्तो जधा—'करभअ! कुसुमपुरं गच्छिअ भणिदव्वो मम वअणेण तुए वेआलिओ त्थणकलसो, जधा, 'चाणक्कहदएण तेसु तेसु आणाभंगेसु अणुचिट्ठीअमाणेसु चंदउत्तो समुत्तेअणसमत्थेहिं सिलोएहिं उवसिलोअइदव्वो' त्ति।' † (थ)

राक्ष। ततस्ततः?

---

* अमात्यस्य प्रसादेन सिद्धम्।

† शृणोतु अमात्यः, अस्ति तावत् अहममात्येन आज्ञप्तो यथा—'करभक! कुसुमपुरं गत्वा मम वचनेन त्वया भणितव्यो वैतालिकः स्तनकलशः, यथा 'चाणक्यहतकेन तेषु तेषु आज्ञाभङ्गेषु अनुष्ठीयमानेषु चन्द्रगुप्तः समुत्तेजनसमर्थैः श्लोकैरुपश्लोकयितव्यः' इति'।

---

तदानीं तत्रानुपस्थस्य इदमिह स्थित्वा कुसुमपुरवृत्तान्तश्रवणे हेतुमाह, मन्त्रभङ्गभयादिति।—मन्त्रिणः सचिवाः, मन्त्रभङ्गभयात् मन्त्रितार्थस्य प्रकाशभयात्, राज्ञां प्रभूणां, पुरः समक्षम्, अन्यथा प्रकारान्तरेण, कथयन्ति ; तथा विवृतः प्रकटितः, अर्थो येषु परस्परविसम्वादेषु, स्वैरालापेषु स्वच्छन्दालापेषु, अन्यथा अन्येन प्रकारेण, कथयन्ति यथार्थमेव भाषन्ते इत्यर्थः, अन्यथाज्ञातवस्तुनो रूपसमीपे अन्यथाकथनमेव अमात्यभ्रमं इति भावः। पथ्यावक्त्रं वृत्तम् ॥ ८ ॥

(थ) समुत्तेजनसमर्थैः,—समुद्दीपनकरैः। उपश्लोकयितव्यः,—श्लोकैः स्तोतव्यः।

कर। तदो मए पाडलिउत्तं गच्छिअ सुणाविदो अमच्चस्स संदेसं वेआलिओ त्थणकलसो। *

राच। ततस्ततः ?

कर। एत्थंतरे णंदकुलविणासदुम्मणस्स पोरजणस्स परिओसं समुप्पाअंतेण चंदउत्तेण आघोसिदो कुसुमउरे कोमुदीमहोसवो। सोवि चिरआलपवत्तमाणो (ट) जणिदपरिओसो अहिमदबंधुजणसमागमो विअ ससिणेहं बहुमाणिदो णअरजणेण। †

राच। [सबाष्पम्]। हा देव ! नन्द !—

कौमुदी कुमुदानन्दे जगदानन्दहेतुना।
कीदृशी सति चन्द्रेऽपि नृपचन्द्र ! त्वया विना ॥ ९ ॥

---

* ततो मया पाटलिपुत्रं गत्वा श्रावितः अमात्यस्य सन्देशं वैतालिकः स्तनकलशः।

† अत्रान्तरे नन्दकुलविनाशदुर्मनसः पौरजनस्य परितोषं समुत्पादयता चन्द्रगुप्तेन आघोषितः कुसुमपुरे कौमुदीमहोत्सवः। सोऽपि चिरकालप्रवर्त्तमानो जनितपरितोषः अभिमतबन्धुजनसमागम इव सस्नेहं बहुमानितः नगरजनेन।

---

(ट) चिरकालप्रवर्त्तमानः,—बहोः कालात् परम् अनुष्ठीयमानः।

करभकवाक्यश्रवणेन संस्मृतनन्दवंशवृत्तान्तः राक्षसः तमेव नन्दम् उद्दिश्य विलपन्नाह, कौमुदीति।—हे नृपचन्द्र ! जगदानन्दहेतुना त्वया विना कुमुदानन्दे कुमुदानां कैरवाणां, कुत्सितामोदवतां कुजनानाञ्च, आनन्दे प्रकाशकत्वात् दर्शनाच्च आनन्दजनके, यद्वा—कोः पृथिव्याः, मुदं प्रीतिम्, आनन्दयति समर्थयति इति कुमुदानन्दे साधितादेशानन्दजनके इत्यर्थः, चन्द्रे चन्द्रमसि चन्द्रगुप्ते च, सत्यपि कौमुदी ज्योत्स्ना, कौमुदीमहोत्सवश्च, कीदृशी ? किम्प्रकारा ? न सुखावहा इत्यर्थः। चन्द्रगुप्तस्य कुत्सितहर्षवतां स्वदेशवासिनां वा हर्षकारकत्वात् चन्द्रस्य च कुमुदानामानन्दजनकत्वात् तव च सकलजगदानन्दहेतुत्वात् ताभ्यामतीव ते वैलक्षण्यमिति भावः। [अत्र उपमानात् चन्द्रात् उपमेयस्य नन्दस्य उत्कर्षाधिक्यकथनात् व्यतिरेकालङ्कारः; स च चन्द्र-कौमुदीशब्दयोः श्लेषात् श्लेषेण "त्वया विना" इति विनोक्त्या च अनुप्राणितः]। अनुष्टुप् वृत्तम् ॥ ९ ॥

भद्र ! ततस्ततः ?

कर। अमच्च ! तदो सो लोअलोअणाणंदभूदो अणिच्छंतस्स ज्जेव णाअरजणस्स (ध) णिवारिदो चाणक्कहदएण कौमुदीमहोस्सवो। एत्थंतरे त्थणकलसेण पउत्ता चंदउत्तस्स समुत्तेअणसमत्था सिलोअपरिवाटी। *

राक्ष। कीदृशी सा ?

कर। ["सत्त्वोत्साहस्य" इत्यादि पूर्वोक्तं पठति]।

राक्ष। [सहर्षम्]। साधु सखे स्तनकलस ! साधु। काले भेदबीजमुप्तम् अवश्यमेव फलम् उपदर्शयिष्यति। यतः,—

सद्यः क्रीड़ारसच्छेदं प्राकृतोऽपि न मर्षयेत्।
किमु लोकाधिकं धाम बिभ्राणः पृथिवीपतिः ॥ १० ॥

मल। एवमेतत्।

राक्ष। ततस्ततः ?

कर। तदो चंदउत्तेण आणाभंगकलुसिदहिअएण सुइरं अमच्चगुणं पसंसिअ पब्भंसिदो अहिआरादो चाणक्कहदओ। †

---

* अमात्य ! ततः स लोकलोचनानन्दभूतोऽनिच्छत एव नागरजनस्य निवारित-चाणक्यहतकेन कौमुदीमहोत्सवः। अत्रान्तरे स्तनकलसेन प्रवर्त्तिता चन्द्रगुप्तस्य समुत्तेजनसमर्था श्लोकपरिपाटी।

† ततश्चन्द्रगुप्तेन आज्ञाभङ्गकलुषितहृदयेन सुचिरम् अमात्यगुणं प्रशस्य प्रभ्रंशितोऽधिकारात् चाणक्यहतकः।

---

(ध) अनिच्छत इति।—अनिच्छन्तं नागरजनम् अनादृत्येत्यर्थः। ["षष्ठी चानादरे" (२। ३। ३८ पा०) इति षष्ठी]।

श्लोके फलावश्यम्भावे हेतुमाह, सद्य इति।—प्राकृतः क्षुद्रोऽपि जनः, सद्यः विना कारणं, हठादित्यर्थः, क्रीड़ारसच्छेदं क्रीड़ायां यो रसः रागः, तस्य छेदः भङ्गः तं, न मर्षयेत् सहेत, लोकाधिकम् अलौकिकं, धाम तेजः, बिभ्राणः धारयन्, पृथिवीपतिः राजा, किमु मर्षयेत् ? अपि तु नैव सहेत इत्यर्थः। [अत्र कैमुतिकन्यायेन अर्थान्तरापतनात् अर्थापत्तिरलङ्कारः]। अनुष्टुप् वृत्तम्॥ १०॥

मल। सखे भागुरायण! गुणप्रशंसया दर्शितः चन्द्रगुप्तेन राक्षसे भक्तिपक्षपातः।

भागु। कुमार! न तथा गुणप्रशंसया, यथा चाणक्यवटोः निराकरणेन। (न)

राक्ष। भद्र! किम् अयमेव एकः कौमुदीमहोत्सवप्रतिषेधः चन्द्रगुप्तस्य चाणक्यं प्रति कोपकारणम्? उत अन्यदपि अस्ति?

मल। सखे भागुरायण! चन्द्रगुप्तस्य अपरकोपकारणान्वेषणे किं फलमेष पश्यति?

भागु। कुमार! एतत् फलं पश्यति—अतिमतिमान् चाणक्यः निष्प्रयोजनमेव किमिति चन्द्रगुप्तं कोपयिष्यति। न च कृतवेदी चन्द्रगुप्त एतावता गौरवम् उल्लङ्घयिष्यति। सर्वथा चाणक्यचन्द्रगुप्तयोः पुष्कलात् कारणात् यो विश्लेष उत्पद्येत स आत्यन्तिको (प) भविष्यति इति।

कर। अमच्च। अत्थि अण्णं पि चंदउत्तस्स कोवकारणं चाणक्के। *

राक्ष। किं किम्?

कर। जधा पढमं दाव उवेक्खिदो अणेण अवक्कमंतो कुमारो मलअकेदू अमच्चरक्खसो अ। †

राक्ष। [सहर्षम्]। सखे शकटदास! हन्त!! हस्ततलगतः मे सम्प्रति चन्द्रगुप्तो भविष्यति।

---

* अमात्य! अस्ति अन्यदपि कोपकारणं चाणक्ये।

† यथा प्रथमं तावदुपेक्षितः अनेन अपक्रामन् कुमारो मलयकेतुः अमात्यराक्षसश्च।

---

(न) न तथेति।—गुणकथनेनैव यद्भवेत् चाणक्यवटुरवेण निराकृत इत्यर्थः।

(प) कृतवेदी—कृतज्ञः। पुष्कलात्—महतः। विश्लेषः,—भेदः। आत्यन्तिकः,—दृढः, अप्रतिकार्य इति यावत्।

मल। इदानीं चन्दनदासस्य बन्धनान्मोक्षः, भवतां च पुत्रदारैः सह समागमः, जीवसिद्धिप्रभृतीनां क्लेशच्छेदः।

भागु। [आत्मगतम्]। जातः सत्यं जीवसिद्धेः क्लेशच्छेदः। (फ)

मल। सखे भागुरायण! 'हस्ततलगतो मे सम्प्रति चन्द्रगुप्तो भविष्यति' इति व्याहरतः, (ब) कोऽयमस्य अभिप्रायः?

भागु। किम् अन्यत्? चाणक्यात् अपकृष्टस्य चन्द्रगुप्तस्य उद्धरणान्न किञ्चित्कार्य्यम् अवश्यं पश्यति। (भ)

राक्ष। भद्र! हृताधिकारः साम्प्रतं क्व असौ वटुः?

कर। तहिं ज्जेव पाड़लिपुत्ते प्पडिवसदि। *

राक्ष। [सावेगम्] भद्र! तत्रैव प्रतिवसति!! न तपोवनं गतः!! प्रतिज्ञां वा न पुनः समारूढवान्!!?

कर। अमच्च! तपोवणं गमिस्सदि त्ति सुणीअदि। †

राक्ष। सावेगम्]। (म) शकटदास! न इदमुपपद्यते। पश्य—

---

* तस्मिन्नेव पाटलिपुत्रे प्रतिवसति।

† अमात्य! तपोवनं गमिष्यतीति श्रूयते।

---

(फ) जात इति।—तत्कार्य्यस्य निष्पन्नप्रायत्वादिति भावः।

(ब) व्याहरतः,—कथयतः, ("व्याहार उक्तिर्लपितम्" इत्यमरः)।

(भ) सचिवायत्तसिद्धिश्चन्द्रगुप्तः सचिवविरोधे हस्ततलगतः सुखेन जेयो भविष्यति इति राक्षसस्य निष्कपटोऽपि अभिप्रायो भागुरायणेन अन्यथा व्याख्यायते, चाणक्यादिति।—चन्द्रगुप्तस्योद्धरणात्—उन्मूलनात्, राक्षसः किञ्चित्—किमपि, कार्य्यं—करणीयम्, अवश्यं न पश्यति, तेन नात्यन्तिकाभीष्टसिद्धिरिति भावः। हस्ततलगतत्वोक्त्या वश्यत्वं प्रतीयते, तेन च स्वस्य साचिव्यप्राप्त्या चन्दनदासादीनामापन्निवृत्तिरात्यन्तिकी स्वार्थसिद्धिरित्यस्य अभिसन्धिः।

(म) सावेगमिति।—तत्रैव अवस्थाने मौर्य्योन्मूलनप्रतिज्ञाया अकरणे वा कदाचित् पुनः सन्दध्यादिति आवेगः।

देवस्य येन पृथिवीतलवासवस्य
साऽग्रासनापनयजा निकृतिर्न सोढ़ा।
सोऽयं स्वयङ्कृतनराधिपतिर्मनस्वी,
मौर्य्यात् कथं नु परिभूतिमिमां सहेत ?॥ ११॥

मल। सखे भागुरायण! चाणक्यस्य तपोवनगमने पुनः प्रतिज्ञारोहणे वा का अस्य स्वार्थसिद्धिः ?

भागु। कुमार! न अयम् अत्यन्तदुर्बोधोऽर्थः, यावत् यावत् निरपेक्षः चाणक्यहतकः चन्द्रगुप्तात् दूरीभवति, तावत् तावत् अस्य स्वार्थसिद्धिः (य)।

मल। अमात्य! अलम् अत्यन्तविकल्पितेन, (र) एतत् उपपद्यते एव। कुतः ? पश्यतु अमात्यः,—
राज्ञां चूड़ामणीन्दुद्युतिखचितशिखे मूर्द्ध्नि विन्यस्तपादः
स्वैरेवोत्पाद्यमानं किमिति विषहते मौर्य्य आज्ञाविघातम् ?।

स्वोक्तामनुपपत्तिमेव युक्त्या समर्थयमान आह, देवस्येति।—येन चाणक्येन, पृथिवीतलवासवस्य भूलोकेन्द्रस्य, देवस्य नन्दस्य, [ "कर्त्तृकर्मणोः कृति" (२।३।६५ पा०) इति कर्त्तरि षष्ठी, तत्कृता इत्यर्थः ] अग्रासनापनयजा अग्र्यात् श्रेष्ठात्, आसनात् श्राद्धभोजनार्थकल्पितासनादित्यर्थः, यः अपनयः निष्काशनं, तस्मात् जाता या निकृतिः अवमानना, न सोढ़ा, मनस्वी प्रशस्तमतिः, अभिमानी इत्यर्थः, सः अयं चाणक्यः, स्वयङ्कृतनराधिपतेः स्वयंदत्तराज्यात, मौर्य्यात् इमां परिभूतिं कथं नु सहेत ? भूमीन्द्रकृतपराभवम् असहिष्णोः स्वदत्तराज्यात नृपतेः पराभवसहनं न कथमपि सम्भवेदित्यर्थः। [ अत्र धरामरेन्द्रात् नन्दादपि निकृतिमसहमानः चाणक्यः स्वयंदत्त-राज्यान्मौर्य्यात्तु कथं कथमपि न सहते एव इत्यर्थस्यापतनादर्थापत्तिरलङ्कारः "पृथिवी-तलवासवस्य" इत्यंशे जायमानयाऽतिशयोक्त्या संसृष्टः;]। वसन्ततिलकं वृत्तम् ॥११॥

(य) निरपेक्षः,—अपेक्षाशून्यः, उदासीन इत्यर्थः। स्वार्थसिद्धिः,—साचिव्य-पदलाभः।

(र) अत्यन्तविकल्पितेन—अतिसन्देहेन।

कौटिल्यस्य मौर्य्यपरिभूतिसहने उपपत्तिं दर्शयितुमाह, राज्ञामिति।—मौर्य्यः चन्द्रगुप्तः, राज्ञाम् अधीननृपाणां, चूड़ामणीन्दुद्युतिखचितशिखे चूड़ायां निषक्ता ये

कौटिल्यः कोपनोऽपि स्वयमभिचरणे ज्ञातदुःखः प्रतिज्ञां,
दैवात् पूर्णप्रतिज्ञः पुनरपि न करोत्यायतिज्यानिभीतः॥ १२॥

राक्ष। सखे शकटदास! एवमेतत्, तद्गच्छ, विश्रामय करभकम्।

शक। यत् आज्ञापयति अमात्यः। [इति करभकेण सह निष्क्रान्तः]।

राक्ष। अहमपि कुमारं द्रष्टुम् इच्छामि।

मल। अहमेव आर्य्यं द्रष्टुम् आगतः।

राक्ष। [नाट्येन अवलोक्य]। अये! कुमार एव आगतः!! [आसनात् उत्थाय]। इदम् आसनम्, उपवेष्टुम् अर्हति कुमारः।

मल। अहम् उपविशामि। उपविशतु आर्य्यः। [इति उभौ यथासनम् उपविष्टौ]। आर्य्य! अपि सह्या शिरोवेदना?

---

मणयः ते इन्दव इव उज्ज्वलत्वादिति भावः, तेषां द्युतिभिः दीप्तिभिः, खचिता सम्बद्धा, शिखा यस्य तादृशे मूर्द्धि शिरसि, न्यस्तपादः अर्पितचरणः, तेषां शासितः इत्यर्थः, अतः स्वैरेव जनैः उत्पाद्यमानं क्रियमाणम्, आज्ञाविघातम् आज्ञाभङ्गं, किमिति कथं, विषहते? न कथमपीत्यर्थः। कौटिल्यः चाणक्यः, कोपनोऽपि अभिचरणे "चाणक्यनाम्ना तेनाथ शकटारगृहे रहः। कृत्यां विधाय सप्ताहात् सपुत्रो निहतो नृपः॥" इत्युक्तरूपे अभिचारक्रियानुष्ठाने, स्वयं ज्ञातदुःखः विदितकष्टः, अभिचारस्य अतीव कष्टसाध्यत्वादिति भावः, ["अतिचरणे" इति पाठे—प्रतिज्ञाऽपूरणे। "ज्ञातदुःखप्रतिज्ञः" इति पाठे तु—ज्ञातम् अनुभूतं, दुःखं क्लेशो यस्यां तादृशी प्रतिज्ञा यस्य इति बहुव्रीहिगर्भो बहुव्रीहिः] दैवात् कथञ्चिद्भाग्येन, पूर्णप्रतिज्ञः सन् इदानीम् आयतिज्यानिभीतः आयतेः उत्तरकालिकफलस्य, ज्यानेः हानेः, ["ग्लाम्लाज्याहाभ्यो निः" इति काशिकोक्तसूत्रेण क्तिनो न्यादेशः; अथवा "वी-ज्या-ज्वरिभ्यो निः" (उणा० ४ पा० ४८ सू०) इति ज्याशब्दादौणादिकः नि-प्रत्ययः] भीतः यदि न फलतीति जातशङ्कः सन्, पुनरपि प्रतिज्ञां न करोति; पूर्वप्रतिज्ञायां दुःखातिशयम् अनुभूय [पाठान्तरे तु—पूर्वप्रतिज्ञाया अप्रतिपालने। अन्यत् समानम्] दैवात् तस्याः पूर्णत्वं सम्पाद्य इदानीं दैवस्य हानिशङ्कया पुनः प्रतिज्ञां न करोतीत्याशयः। [अत्र चाणक्यस्य उत्तरकालीनफलहानिशङ्कया शपथा-करणासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः]। स्रग्धरा वृत्तम्॥ १२॥

राक्ष। कुमारस्य अधिराजशब्देन अतिरस्कृते कुमारशब्दे कुतः शिरोवेदनायाः सम्भवः ?

मल। स्वयम् उरीकृतमेतत् आर्य्येण न दुष्प्रापं भविष्यति। तत् कियन्तं कालम् अस्माभिः एवं सम्भृतबलैः अपि शत्रुव्यसनम् अवेक्षमाणैः उदासितव्यम् ? (ल)

राक्ष। कुमार! कुतोऽद्यापि कालहरणस्य अवकाशः ? प्रतिष्ठस्व रिपुजयाय।

मल। अमात्य! अपि किञ्चित् शत्रोर्व्यसनम् उपलब्धम् ?

राक्ष। बाढ़म् उपलब्धम्।

मल। कीदृशम् ?

राक्ष। सचिवव्यसनं, किम् अन्यत्। अपकृष्टः चाणक्यात् चन्द्रगुप्तः।

मल। अमात्य! सचिवव्यसनम् अव्यसनमेव।

राक्ष। कुमार! अन्येषां भूपतीनां कदाचित् अमात्य-व्यसनम् अव्यसनमपि स्यात्, न पुनः चन्द्रगुप्तस्य।

मल। आर्य्य! ननु विशेषतः चन्द्रगुप्तस्य इति। (व)

राक्ष। किं कारणं यत् अस्य अमात्यव्यसनम् अव्यसनम् ?

मल। चन्द्रगुप्तप्रकृतीनां (श) हि चाणक्यदोषा एव अपराग-हेतवः। तस्मिन् निराकृते प्रथममपि चन्द्रगुप्तानुरक्ताः प्रकृतयः इदानीं पुनः सुतरामेव तत्र अनुरागं दर्शयिष्यन्ति।

---

(ल) उरीकृतम्—अङ्गीकृतम्। शत्रुव्यसनं—शत्रोः व्यसनं—विपत्समयमित्यर्थः, अवेक्षमाणैः,—प्रतीक्षमाणैः, उदासितव्यं—तूष्णीं स्थातव्यम्।

(व) नन्विति।—एवं राक्षसेन समाहितोऽपि "अमात्यराक्षसः चाणक्ये बद्धवैरो न तु चन्द्रगुप्ते" (१५४ पृः ६। ७ पङ्क्तौ) इत्यादि पूर्वोक्तेन बहुविधेन भागुरायणोपजापेन कलुषिताशयो मलयकेतुः पुनः शङ्कते।

(श) चन्द्रगुप्तप्रकृतीनामिति।—राक्षसमेव मनसि विषयीकृत्य चन्द्रगुप्त-प्रकृतीनामित्यादि नाटकस्य वचनम्।

राक्ष। कुमार ! न एतदेवम्, इह द्विप्रकाराः प्रकृतयः, चन्द्रगुप्तसहोत्थायिन्यो नन्दकुलानुरक्ताश्च। तत्र चन्द्रगुप्तसहोत्थायिनीनां प्रकृतीनां चाणक्यदोषा एव विरागहेतवः, न नन्दकुलानुरक्तानाम्। तास्तु खलु नन्दकुलम् अनेन पितृकुलभूतं कृत्स्नं कृतघ्नेन घातितमिति अपरागामर्षाभ्यां विप्रकृताः (ष) सत्यः स्वाश्रयम् अलभमानाः चन्द्रगुप्तम् एव अनुवर्त्तन्ते। त्वादृशं पुनः प्रतिपक्षोद्धरणे सम्भावितशक्तिम् अभियोक्तारम् आसाद्य क्षिप्रमेनं परित्यज्य त्वामेव आश्रयिष्यन्ते इति। अत्र कुमारस्य वयमेव निदर्शनम्।

मल। अमात्य ! किमेतत् एवैकं सचिवव्यसनम् अभियोगकारणं चन्द्रगुप्तस्य ? आहोस्वित् अन्यदपि अस्ति ?

राक्ष। कुमार ! किम् अन्यैः बहुभिरपि ? एतद्धि तत्र प्रधानतमम्।

मल। अमात्य ! कथं प्रधानतमं नाम ? किमिदानीं चन्द्रगुप्तः स्वराज्यकार्य्यधुराम् अन्यत्र मन्त्रिणि आत्मनि वा समासज्य स्वयं प्रतिविधातुम् (स) असमर्थः स्यात् ?

राक्ष। वाढम् असमर्थ एव।

मल। किं कारणम् ?

राक्ष। स्वायत्तसिद्धिषु उभयायत्तसिद्धिषु ( ह ) वा भूमि-

(ष) विप्रकृताः,—विरक्तीकृताः, निराकृता वा।

(स) स्वराज्येत्यादि।—स्वस्य—आत्मनः, राज्यकार्य्यस्य धूः इति स्वराज्यकार्य्यधुरा। [ "ऋक्पूरब्धूः—" ( ५।४।७४ पा० ) इति अः समासान्तः ]। प्रतिविधातुम्—अन्यदभियोगं प्रतिकर्त्तुम्।

(ह) स्वायत्तसिद्धिषु—स्वेषु न तु मन्त्रिषु आयत्ता—स्थिता, सिद्धिः येषां तेषु तथोक्तेषु, स्वाधीनसकलकार्य्यचिन्तनेषु इत्यर्थः। उभयायत्तसिद्धिषु—उभयोः,—आत्ममन्त्रिणोः, [ उभशब्दस्योभयादेशः ] आयत्ता सिद्धिः येषां तादृशेषु।

पालेषु कदाचित् एतत् सम्भवति, (क) न तु चन्द्रगुप्ते । चन्द्रगुप्तस्तु दुरात्मा नित्यं सचिवायत्तसिद्धिरेव अवस्थितः चक्षुर्विकल इव अप्रत्यक्षसर्वलोकव्यवहारः कथमिव स्वयं प्रतिविधातुं समर्थः स्यात् ? कुतः ?—

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च
विष्टभ्य पादावुपतिष्ठते श्रीः ।
सा स्त्रीस्वभावादसहा भरस्य
तयोर्द्वयोरेकतरं जहाति ॥ १३ ॥

---

(क) सम्भवतीत्यनेन सामर्थ्यस्य कादाचित्कत्वमुक्तम्, उभयायत्तसिद्धेरेवोत्तरश्लोके प्राशस्त्यकथनात् ।

यदुक्तं स्वकार्यधुरामन्यत्र मन्त्रिणीति तत् परिहरति, अत्युच्छ्रिते इति ।— श्रीः राजलक्ष्मीः, अत्युच्छ्रिते समस्कन्धतया अत्युन्नतिं प्राप्ते, ऐकमत्येन अन्यूनाधिकभावेन वा एकीभावमुपगते इत्यर्थः, मन्त्रिणि पार्थिवे च पादौ विष्टभ्य एकैकस्मिन् एकैकं पादं स्थापयित्वा, मन्त्रशक्ति-प्रभुशक्तिरूपं पादद्वयं समवस्थाप्य इत्यर्थः, [ अत्र "सदिरप्रतेः" (८।३।६६ पा० ) इति सूत्रादुपसर्गादित्यनुवर्त्य "स्तम्भेः" (८ । ३ । ६७ पा० ) इति षत्वम् ] उपतिष्ठते सुस्थिरा सती तयोः सङ्गता भवतीत्यर्थः, [ "अकर्मकाच्च" ( १।३।२६ पा० ) इति तङ् । यद्यपि प्रभुमन्त्रोत्साहरूपास्तिस्रः शक्तयः, तथाऽपि उत्साहशक्तेरुभयानुकूलत्वेन द्वयोरन्तर्भावाभिप्रायेण अत्र सा न गृहीतेति बोध्यम् ] किन्तु तयोर्मन्त्रिपार्थिवयोर्द्वयोः सतोः वैमत्येन न्यूनाधिकभावमुपेत्य द्वैधीभावेन स्थितयोः, सा श्रीः, द्वयोः पदयोः सम्यगवष्टम्भासम्भवात् भरस्य असहा राज्यभारं वोढुमसमर्था सती, स्त्रीस्वभावात् दौर्बल्यात् चापल्याच्च, एकतरं मन्त्रिणं पार्थिवं वा, जहाति त्यजति ; कियत्कालं प्रभुमात्रमाश्रित्य स्थिताऽपि मन्त्रवैकल्येन, तथा मन्त्रिणमाश्रित्य स्थिताऽपि प्रभुशक्तिवैकल्येन स्वयमपि नश्यतीति भावः । यथा मस्तकौ काचित् उच्छ्रितौ समौ वंशस्तम्भौ पादाभ्यां दृढमवलम्ब्य सुस्थिरा तिष्ठति, तयोर्वैषम्ये विसंष्ठुलपदतया देहभरं वोढुमशक्ता एकं हित्वा अन्यतरमवलम्बमाना तेन सह स्वयमपि पतति, तद्वत् । एवमुच्छ्रितश्चन्द्रगुप्तः अनुच्छ्रिते अन्यस्मिन् मन्त्रिणि राज्यधुरामासज्य असमर्थः स्यादित्याशयः । [ अत्र प्रस्तुतायां राजलक्ष्म्याम् अप्रस्तुतनायिकाव्यवहारसमारोपात् समासोक्तिरलङ्कारः ] । अत्र इन्द्रवज्रोपेन्द्रवज्रयोर्मेलनात् उपजातिः वृत्तम् ॥ १३ ॥

अपि च—

नृपोऽपकृष्टः सचिवात् तदर्पणः
स्तनन्धयोऽत्यन्तशिशुः स्तनादिव ।
अदृष्टलोकव्यवहारमूढधी-
र्मुहूर्त्तमप्युत्सहते न वर्त्तितुम् ॥ १४ ॥

मल । [आत्मगतम्] । दिष्ट्या न सचिवायत्ततन्त्रोऽस्मि (ख) । [प्रकाशम्] । अमात्य ! यद्यपि एवं, तथाऽपि खलु बहुषु अभियोगकारणेषु (ग) सत्सु सचिवव्यसनम् अभियुञ्जानस्य (घ) शत्रुम् अभियोक्तुः (ङ) न ऐकान्तिकी सिद्धिर्भवति ।

---

अथ आत्मनि चासज्य इत्यस्य परिहारमाह, नृप इति ।—तदर्पणः तस्मिन्नेव सचिवे, अर्पणं राज्यभारस्येति भावः. यस्य यत वा, तस्मिन् सचिवे राज्यतन्त्रं सर्वम् अर्पयतीति तादृशः, [नन्द्यादित्वात ल्युः] सचिवायत्तसिद्धिरित्यर्थः, तथा न दृष्टः लोकव्यवहारः येन अत एव मूढा मन्दा, धीः यस्य तथोक्तः, [ततो विशेषणसमासः] नृपः स्तनं धयति इति स्तनन्धयः स्तनपायी, ["नासिकास्तनयोर्ध्माधेटोः" (३। २। २९ पा०) इति खश्। "अरुर्द्विषत—" (६।३।६७ पा०) इति मुम] अत्यन्तशिशुः [स्तनन्धयपदेनैव अत्यन्तशिशुत्वलाभेऽपि पुनः कथनं वैशिष्ट्यद्योतनार्थम] स्तनादिव सचिवात अपकृष्टः सन्, मुहूर्त्तमपि अल्पक्षणमपि, वर्त्तितुं स्थातुं व्यवहर्त्तुं वा, न उत्सहते सचिवादपकृष्टः सन् राज्यधुरां वोढुम असमर्थो भवति । [उपमाऽलङ्कारः] । वंशस्थविलं वृत्तम ॥ १४ ॥

(ख) सचिवायत्तेति ।—सचिवस्य—मन्त्रिणः, आयत्तम्—अधीनं, तन्त्रं—राज्यचिन्ता यस्य तादृशः, अहं यत तथाभूतो न, तत् दिष्ट्या—भाग्येन एव इत्यर्थः, त्वयि विरुद्धवृत्तावपि स्वतन्त्रस्य मे नानिष्टमित्याशयः ।

(ग) अभियोगकारणेषु—अभिषेणयितुं आक्रमणहेतुषु ।

(घ) सचिवव्यसनम् इति ।—"तदा यायात् परिं जेतुं व्यसने चोत्थिते रिपोः" इति कामन्दकीयवाक्यमवलम्ब्य उक्तवतः राक्षसस्य युक्तिदूषणाय "नेदं प्रबलतरं कारणम्" इति समाधानाय मलयकेतूक्तिरेवेयम् । अभि—लक्षीकृत्य, युञ्जानस्य—उद्योगं कुर्वतः, ["स्वराद्यन्तोपसृष्टादिति वक्तव्यम" इति वार्त्तिकसूत्रात् तङ्] ।

(ङ) अभियोक्तुः,—अभिषेणयतः, आक्रमणं कुर्वत इत्यर्थः ।

राज। ऐकान्तिकीमेव सिद्धिम् अवगन्तुम् अर्हति कुमारः।
कुतः?—

त्वय्युत्कृष्टबलेऽभियोक्तरि नृपे नन्दानुरक्ते पुरे,
चाणक्ये चलिताधिकारविमुखे मौर्य्ये नवे राजनि।
स्वाधीने मयि—" [इत्यर्द्धोक्ते लज्जां नाटयन्]।
"—मार्गमात्रकथनव्यापारयोगोद्यमे,
त्वद्वाञ्छाऽन्तरितानि सम्प्रति विभो! तिष्ठन्ति साध्यानि नः॥१५॥

मल। अमात्य! यदि एवम् अभियोगकालम् अमात्यः पश्यति, तत् किम् आस्यते? (च) पश्य—

---

"वहेदमित्रं स्कन्धेन यावत्काल आगतः। तमेव चागते काले भिन्द्यात् घटमिवाश्मना॥" इति कामन्दकोक्तेः व्यसनमापन्नं शत्रुं प्रति अभिषिषेणयिषायाः समयोऽयं, तस्य चाभियोगस्य उत्साह-सहायावेव मूलम् इति प्रख्यापनाय सहायभूतानि वस्तूनि तावत् प्रकटयति, त्वयीति।—हे विभो! उत्कृष्टबले उत्तमसामर्थ्ये समर्थसैन्ये च, नृपे त्वयि अभियोक्तरि योद्धुमुद्यते, तथा पुरे नगरे, नन्दानुरक्ते चाणक्ये चलिताधिकारविमुखे चलितः अधिकारः राज्यचिन्ताभारः यस्मात् तस्मिन् च अधिकारच्युते इत्यर्थः, अत एव विमुखे पराङ्मुखे, तथा मौर्य्ये चन्द्रगुप्ते, नवे अनभिज्ञे इत्यर्थः, राजनि, ("नन्दानुरक्ते पुरे मौर्य्ये नवे राजनि सति" इति केचित् अनुयान्ति) तथा मार्गमात्रकथनव्यापारयोगोद्यमे मार्गमात्रस्य युद्धपथमात्रस्य, कथनरूपव्यापार एव योग उपायः, तस्मिन् उद्यमो यस्य तादृशे, मयि स्वाधीने त्वन्मात्राधीने, तव वशीभूते सति इत्यर्थः, सम्प्रति नः अस्माकं, साध्यानि कार्य्याणि, अभीष्टानीति यावत्, त्वद्वाञ्छाऽन्तरितानि तव वाञ्छा तया एव अन्तरितानि व्यवहितानि तादृशानि त्वद्वाञ्छासापेक्षाणीत्यर्थः, तिष्ठन्ति, त्वदाज्ञां केवलं प्रतीक्षन्ते इत्यर्थः। अत्र मयीति आत्मनः स्वाधीनोपदिष्टत्वकथनद्वारा गर्वप्रकाशः स्यात् इत्याशङ्क्य लज्जा प्रदर्शिता। [अत्र बहूनां कारणानां साहित्येनावतारणात् समुच्चयालङ्कारः]। शार्दूलविक्रीडितं वृत्तम्॥१५॥

(च) आस्यते—विलम्बः क्रियते।

उत्तुङ्गास्तुङ्गकूलं स्रुतमदसलिलाः प्रस्यन्दिसलिलं
श्यामाः श्यामोपकण्ठद्रुममलिमुखराः कल्लोलमुखरम् ।
स्रोतःखातावसीदत्तटमुरुदशनैरुत्सादिततटाः
शोणं सिन्दूरशोणा मम गजपतयः पास्यन्ति शतशः ॥१६॥

अपि च—

गम्भीरगर्जितरवाः स्वमदाम्बुमिश्रम्
आसारवर्षमिव शीकरमुद्गिरन्त्यः ।

---

वैरिपुरमर्दनाय प्रस्थानस्योचितत्वेऽपि केन रूपेणाक्रमणं विधेयमिति दर्शयितुं तुल्यरूपेण तुल्यरूपस्यैवाक्रमणमुचितमित्यतः तुल्यविशेषणान्वितस्य शोणनदस्य तत्तुल्यमत्तगजपतिभिरेवाक्रमणं करिष्यते इत्याह, उत्तुङ्गा इति ।—उत्तुङ्गाः अत्युन्नताः, स्रुतमदसलिलाः मदजलस्राविणः, श्यामाः कृष्णवर्णाः, अलिमुखराः अलिभिर्भ्रमरैः, मदगन्धलुब्धैरिति भावः, मुखराः झङ्कारवन्तः, उरुदशनैः बृहद्दन्तैः, उत्सादितं विध्वंसितं, तटं यैः तादृशाः, ("तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः" इत्युक्तेः अतीव बलशालिनः शिक्षिताश्च परिणताः गजाः इति बोध्यम्) सिन्दूरशोणाः सिन्दूरैः नागसम्भवाख्यैः प्रसिद्धरक्तवर्णचूर्णविशेषैः, मदरक्तबिन्दुभिरित्यर्थो वा, शोणाः रक्ताः, (सिन्दूरतिलकेन गजानां प्रसाधनं लोकव्यवहारसिद्धम् ; पक्षान्तरे—मदस्रावकाले गजानां शरीरे रक्तवर्णानि चिह्नानि भवन्तीति पालकाप्ये द्रष्टव्यम् ; तथा च, कालिदासः,—"भूर्जत्वचः कुञ्जरबिन्दुशोणाः" इति) मम शतशः गजपतयः तुङ्गकूलम् उन्नततटं, प्रस्यन्दिसलिलं प्रवहमानजलं, श्यामा उपकण्ठवर्तिनो द्रुमाः यस्य तादृशं, कल्लोलमुखरं कल्लोलैः तरङ्गैः, मुखरं महाशब्दयुतं, स्रोतःखातावसीदत्तटं स्रोतसा प्रवाहेण, खातम् अत एव अवसीदत् पतत्, तटं यस्य तथाभूतं, शोणं मलयकेतुशिबिरसमीपवर्तिशोणिताभजलविशिष्टनदविशेषं, पास्यन्ति पानेन शोषयित्वा सैन्यानां सुगमं करिष्यन्ति, तुल्यरूपत्वात् अभिभविष्यन्तीत्यर्थो वा । यद्वा—भिन्नोक्तः: शोणो यथा पयःपूरेण पार्श्वतटं भनक्ति, तथा मदौघमत्तेभघटाः पाटलिपुत्रनगरं भङ्क्ष्यन्ति इत्यर्थः । [अत्र गजपतीनां शोणनदस्य च विशेषणानां यथाक्रममन्वयात् यथासङ्ख्यमलङ्कारः, तेन शोणगजानामुपमेयोपमानभावः व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः] । सुवदना वृत्तं—"ज्ञेया सप्ताश्वषड्भिर्मरभनययुता म्लौ गः सुवदना" इति लक्षणात् । अस्य छन्दसः प्रस्तारस्तु ५६६८२२ तमः ॥१६॥

इदानीं शत्रुपुररोधनं दर्शयति, गम्भीरेति ।—गम्भीरगर्जितरवाः मन्द्रगर्जनशब्दाः, स्वमदाम्बुमिश्रं निजदानवारियुक्तं, शीकरं जलकणम्, आसारवर्षं धारा-

विन्ध्यं विकीर्णसलिला इव मेघमाला
रोत्स्यन्ति वारणघटा नगरं मदीयाः ॥ १७ ॥

[ इति भागुरायणेन सह निष्क्रान्तो मलयकेतुः ] ।

राक्ष । कः कोऽत्र भोः ? (छ)

पुरुषः । [ प्रविश्य ] । आणवेदु अमच्चो ! *

राक्ष । प्रियंवदक ! ज्ञायतां सांवत्सरिकाणां (ज) द्वारि कः तिष्ठति ।

प्रियं । जं अमच्चो आणवेदि । [ इति निष्क्रम्य क्षपणकं दृष्ट्वा पुनः प्रविश्य च ] । अमच्च ! एसो क्खु संवच्छरिओ क्खवणओ—" †

राक्ष । [ स्वगतम् अनिमित्तं सूचयित्वा ] । कथं, प्रथममेव क्षपणक-दर्शनम् !!

प्रियं । "—जीवसिद्धी ! ‡

राक्ष । [ प्रकाशम् ] । अबीभत्सदर्शनं (झ) कारयित्वा प्रवेशय । (ञ)

---

* आज्ञापयतु अमात्यः ।

† यत् अमात्यः आज्ञापयति । अमात्य ! एष खलु सांवत्सरिकः क्षपणकः—"

‡ "—जीवसिद्धिः ।

---

सन्यालमिव, उद्गरन्त्यः उद्वमन्त्यः, मदीया वारणघटाः गजसङ्घाः, विकीर्णसलिलाः विक्षिप्तजलाः, मेघमालाः जलदपङ्क्तयः, विन्ध्यमिव नगरं प्रकृपुरं, रोत्स्यन्ति । गजबलानां प्रधानत्वात् पुनःपुनरुल्लेखः । [ अत्र वारण-मेघमालयोः सामान्यधर्मोपस्य-प्राप्तित्वात् पूर्णोपमाऽलङ्कारः ] । वसन्ततिलकं वृत्तम् ॥ १७ ॥

(छ) क इति ।—[ "कस्कोऽत्र" इति पाठः साधीयान्, कस्कादित्वात् विसर्जनीयस्य सत्वोपपादनात् ; अथवा वाक्ये अपेक्षितविवक्षायाः संहितायाः पूर्वाङ्गऽस्वीकारात् तदपि सिद्धम् ] ।

(ज) सांवत्सरिकाणां—ज्योतिर्विदाम् । [ निर्द्धारणे षष्ठी ] ।

(झ) अबीभत्सदर्शनम्—अजुगुप्सितदर्शनं, तस्य नग्नत्वात् कन्याकौपीनादि-धारित्वात् वा इति भावः ।

(ञ) पूर्वं क्षपणकसामान्यबुद्ध्या विचिकित्सा ; ततो जीवसिद्धिं ज्ञात्वा प्रवे-

प्रियं। जं अमच्चो आणवेदि। *

[ इति निष्क्रान्तः ]।

[ ततः प्रविशति क्षपणकः ]।

क्षप।

सासणमलिहंताणं पडिवज्जह मोहवाहिवेज्जाणं।
जे पढममेत्तकडुअं पच्छा पत्थं उवदिसंति †॥ १८॥

[ उपसृत्य ]। धम्मलाहो सावका ! भोदु। ‡

राक्ष। भदन्त ! (ट) निरूप्यतां तावत् अस्माकं प्रस्थान-योग्यदिवसः।

---

* यत् अमात्य आज्ञापयति।

† शासनमर्हतां प्रतिपद्यध्वं मोहव्याधिवैद्यानाम्।
ये प्रथममात्रकटुकं पश्चात् पथ्यमुपदिशन्ति॥

‡ धर्मलाभः उपासक ! भवतु।

---

शानुमतिः। किञ्च, आदौ क्षपणक इति दुष्टपस्तुत्या राक्षसस्य प्रकृतनीतिव्याकोपः ततो जीवसिद्धिरिति सूपस्तुत्या मलयकेतौ कृतमुद्रयुक्तोऽपि अस्य जीवसिद्धिस्य सूचिता इत्याशयः।

चाणक्यगूढ़प्रणिधिरसौ स्वस्य हितकारित्वमप्रस्तुतेन वर्णयन्नाह, शासनमिति।— मोहव्याधिवैद्यानां मोहः अज्ञानं, स एव व्याधिः तस्य वैद्याः चिकित्सकाः, ज्ञानदानेन निरासकाः तेषाम्, अर्हतां बौद्धविशेषाणां मान्यानां वा, [ उभयत्रैव "अर्हः प्रशंसायाम" ( ३।२।१३३ पा० ) इति शतृप्रत्ययः; केशोल्लुञ्चनतप्तशिलाधिरोहणादि-तीव्रतपसा मोक्षः इति आर्हतानां मतम् ] शासनम् आदेशं, प्रतिपद्यध्वं प्रतिपालयत इत्यर्थः। ये अर्हन्तः, प्रथममात्रकटुकं प्रथममेव कटुकम्, अप्रीतिकरत्वादिति भावः, पश्चात् पथ्यं परिणामहितम्, उपदिशन्ति शिक्षयन्ति। [ अनेन गाथार्द्धेन मद्वचनमापाततो दुःखमपि परिणामे राक्षसस्य हितं भविष्यतीति सूचितम्। अत्राप्रस्तुतवैद्यादेशपालनात् प्रस्तुतजिनादेशपालनकथनस्यावगमात् अप्रस्तुतप्रशंसाऽलङ्कारः ]॥ १८॥

( ट ) भदन्त इति—बौद्धसंन्यासिनः सम्बुद्धिः, मान्य ! इत्यर्थः। यद्वा—भदन्त इति ज्योतिर्विदमाम तेरैव व्यवहृतमिति।

इत्युक्तेः तथोक्तम्। एवं समयमुक्त्वा लग्नबलमाह, उदिते इति।—सम्पूर्णमण्डले "अर्द्धोनेन्द्वर्कसौरारा:" इत्यनेन अर्द्धचन्द्रस्य पापग्रहत्वोक्तेः तत्परिहाराय सम्पूर्णमण्डले इत्युक्तम्; किञ्च, पौर्णमास्यां चन्द्रस्य सम्पूर्णत्वस्यैव सम्भवात् तथोक्तम्; चन्द्रे उदिते सति; इदानीं लग्नविशेषमाह—बुधस्य लग्ने बुधस्वामिके राशौ, कन्यालग्ने इत्यर्थात्, तस्यैव दक्षिणास्यतया दक्षिणदिग्गमने प्राशस्त्यात्। यद्यपि "कुज-शुक्रबुधेन्द्वर्क-सौम्यशुक्रावनीभुवाम्। जीवार्किभानुजेज्यानां क्षेत्राणि स्युरजादयः॥" इत्युक्तेः मिथुनराशेरपि बुधस्वामिकत्वं, तथाऽपि लग्नस्थचन्द्राश्रित-तद्राशिघटक-मृगापरार्द्धार्द्रापुनर्वसुपादत्रिकाणां प्रागुक्तवचनात् दक्षिणास्यत्वाभावेन न तद्ग्रहणम्; एतेन चौरचैतस्य सायंकालो लभ्यते, मासान्तरे सायंसमये कन्यालग्नोदयाभावात्; ततश्च कौमुदीमहोत्सवकालात् पञ्च मासा व्यतीताः; यतः आश्विनपौर्णमास्यामेव कौमुदीमहोत्सवः करणीयः। एतद्विधिस्तु भविष्योत्तरखण्डे हेमाद्रौ व्रतखण्डे वा द्रष्टव्यः। लग्नस्य दोषराहित्यमाह, उदितेति।—केतौ केतुग्रहे च, उदितास्तमिते उदितात् लग्नात् अस्तमिते सप्तमस्थाने स्थिते सति, "नेष्टाः शुक्रदिवाकरार्कतनया राहुस्तथा भूमिजः, क्षिप्रं मृत्युवशं नयन्ति पुरुषं स्थाने स्थिताः सप्तमे" इत्यनेन शुक्रादी-नामेव सप्तमस्थाने अरिष्टदायकत्वोक्तेः तद्भिन्नानां शुभत्वम्; अथ च शूरे वीरे, [दन्त्य-सकारादिसति सूरशब्दे—सूर्यः पण्डितश्च इति अर्थद्वयम्] प्रकृते राक्षसे चलाभि-मुखे विनाशाभिमुखे, [चर्याभिमुखे इति पाठे—मौर्यमाविश्योन्मुखे] चन्द्रे चन्द्रगुप्ते, सम्पूर्णमण्डले समग्रप्रकृतिमण्डले, उदिते उत्थिते सति, बुधस्य चाणक्यस्य, लग्ने तदनु-चराक्रान्तदलग्ने, चाणक्ये त्वत्सङ्घार्थमुद्युक्ते सतीति भावः, केतौ मलयकेतौ, उदितास्तमिते उदितोऽपीदानीं शीघ्रमस्तमेष्यतीति भावः. गमनं तद्विनिगमनं, यद्वा—उदितेऽप्यस्तमिते चासन्नपतनत्वात् भाविनि भूतवदुपचारः, अस्तमयायतौ इत्यर्थः। [पाठान्तरे—अस्मिन् मङ्गले बुधस्य लग्ने इत्यर्थः, गमनमित्यध्याहारः। अत्र शब्द-शक्तिमूलो ध्वनिः]।

"तथा चा-मध्याह्नात् निवृत्तसर्वकल्याणा तिथिः......पदक्षिणं गच्छतम्" इति पाठान्तरसंवलितगद्यांशघटितश्लोकस्य साभिप्रायम् अन्यथा व्याख्यानं लिख्यते। तद्यथा—आश्वयुज्यां पौर्णमास्यां कौमुदीमहोत्सवप्रतिषेधेन व्यायामकालस्य अतीतत्वात् तदारभ्य मासद्वयमात्रेण उभाभ्यां चाणक्यराक्षसाभ्याम् उपजापादिना भेदतन्त्रं प्रसाधितम्। अथ मार्गशीर्षे कुसुमपुरोपरोधाय प्रस्थानकामेन राक्षसेन प्रस्थानदिवसे पृष्टे जीवसिद्धिः तस्मै मुहूर्तं कथयति, आदकेति।—अद्य पौर्णमासी सप्तचत्वारिंशद्घटिका इति मध्याह्नपर्य्यन्तं भद्राभिधं विष्टिकरणं निवृत्तसकलकल्याणं

राक्ष। भदन्त! तिथिरेव तावत् न शुध्यति। (ङ)

क्षप। सावका!—

एक्कगुणा होइ तिही चउग्गुणे होइ णक्खत्ते।
चउसट्ठिगुणे लग्गे एसी दीसदि जोइसंसिद्धंते* ॥ २० ॥

---

* उपासक!—

एकगुणा भवति तिथिश्चतुर्गुणं भवति नक्षत्रम्।
चतुःषष्टिगुणं लग्नम् एतत् दृश्यते ज्योतिषसिद्धान्ते ॥

---

प्रयाणे निषिद्धम्। किञ्चास्य पूर्वदिशि वर्त्तमानं मृगशिरोनक्षत्रं दक्षिणादिशं प्रस्थितानाम् अदक्षिणं वामं प्रतिकूलञ्च इति गूढाशयः। अथापि त्वरया गन्तव्य-मिति चेत् तत्रापि गतिमाह, अस्ताभिमुखे इति।—सायं सूर्य्ये अस्तमिते चन्द्रोदय-समये लग्नं मिथुनं, बुधस्तस्याधिपतिः, राहुः केतुर्वा तदा उदितास्तमितो भविष्यति, तस्मिन् बुधस्य लग्ने गमनं, कर्त्तव्यम् इति शेषः। राहुकेत्वोः सर्पाकारम् एकं शरीरं, तत्र शिरो राहुः, पुच्छं केतुः, शिरस्युदिते पुच्छमस्तमितं भवति, पुच्छे उदिते शिरोऽस्तमेति इति ज्योतिःशास्त्रसिद्धम्। उभयोरेकशरीरत्वात् राहुरिति केतुरिति व्यपदेशः, अत उक्तम् "उदितास्तमिते केतौ" इति। एवञ्च मिथुनं द्विस्वभावं लग्नमपि सप्तमकेन्द्रे स्थितेन क्रूरेण चास्तमितेन सूर्य्येण दृष्टं केतुना पापग्रहेण च युक्तं प्रयाणेऽनिष्टम्। तथा चोक्तं—"द्विमूर्त्तिराशावुदयं प्रपन्ने क्रूरग्रहैर्युक्तनिरीक्षिते च। प्रयाति यद्यप्यनुधस्तदा ना निवर्त्तते शत्रुजनाभिभूतः॥" इति। एवं सन्दिग्धे मुहूर्त्ते लग्ने इति। द्विस्वभावात् प्रयाणे निषिद्धं मिथुनं यद्यपि दुर्लग्नं, तथाऽपि बुधेन सौम्यग्रहेण अधिष्ठितं सत् सुलग्नं भवति, तदा चन्द्रबलेन गच्छन् दीर्घां चिरेण भाविनीं सिद्धिं वत्स्यसि; अतस्तत्र गन्तव्यम् इत्यस्य गूढाशयः। [ अस्मिन्नपि पाठे श्लेषेणाभिप्रेतोऽर्थो जीवसिद्धिना ध्वनितः ] ॥ १९ ॥

(ङ) न शुध्यतीति।—"षष्ठ्यष्टमीद्वादशीषु न गच्छेत् त्रिदिनस्पृशि। पूर्णिमा-प्रतिपद्दर्श-रिक्ताऽस्वमदिनेषु च॥" इति ज्योतिषनिषेधात्।

"तिथिरेकगुणा प्रोक्ता नक्षत्रन्तु चतुर्गुणम्" इत्युपक्रम्य "सहस्राधिकः सूर्य्यः चन्द्रो लक्षगुणाधिकः" इति ज्योतिषतत्त्वोक्तेः चन्द्रबलस्यैव प्रबलत्वात् तद्बलं दर्शयितुमाह, एक्कगुणेति।—तिथिः एकगुणा भवति, शुभाशुभयोरल्पा अल्पशक्ति-

लग्गं होइ सुलग्गं कूलग्गहं परिहलिज्जासु।
पाविहि दीहं लाहं चंदस्स बलेण गच्छंते * ॥ २१ ॥

राच। भदन्त! अपरैः सांवत्सरिकैः सार्द्धं संवाद्यताम् (ढ)।

क्षप। संवादेदु सावके। अहं णिअं गेहं (ण) गमिस्सं। †

राच। न खलु कुपितो भदन्तः?

क्षप। ण कुविदे तुम्हाणं भदंते। ‡

राच। कः तर्हि?

---

* लग्नं भवति सुलग्नं क्रूरग्रहं परिहर आशु।
प्राप्नुहि दीर्घं लाभं चन्द्रस्य बलेन गच्छन्॥

† संवादयतु उपासकः। अहं निजं गेहं गमिष्यामि।

‡ न कुपितो युष्माकं भदन्तः।

---

त्वात्, नक्षत्रं चतुर्गुणं भवति, तिथ्यपेक्षया अस्य चतुर्गुणफलदायकत्वात्, लग्नं चतुःषष्टिगुणं, तिथ्यपेक्षया अस्य चतुःषष्टिगुणफलप्रदत्वात्; ज्योतिषसिद्धान्ते एतत् श्रूयते ॥ २० ॥

लग्नमिति।—किञ्च, लग्नं निकृष्टमपि सुलग्नं शुभदं, भवति; तत्र हेतुः, क्रूरग्रहं मन्दग्रहयोगम्, आशु शीघ्रं, परिहर परित्यज, क्रूरग्रहयोगाभावे दोषराहित्यात् लग्नं शुभदं भवतीत्यर्थः। तत्रानुगुणं योगमाह, चन्द्रस्य बलेनेति।—चन्द्रस्य बलेन गच्छन् सन् दीर्घं महान्तं, लाभं प्राप्नुहि। "तारास्तत्र न गच्छन्ति यत्र चन्द्रो बलान्वितः" "शुभे चन्द्रे प्रणश्यन्ति ग्रहा वज्रहता इव" "सहस्रेणाधिकः सूर्यः चन्द्रो लक्षगुणाधिकः" इत्यादिवचनेन चन्द्रबलस्यैव प्राबल्यात्। [प्रकृते हे क्रूर! हे राक्षस! ग्रहम् आग्रहं, चाणक्यपराजये यत्नं, परिहर; चन्द्रस्य चन्द्रगुप्तस्य, बलेन सैन्येन सह, गच्छन् त्वं दीर्घं लाभं चिरमनपायिनीं मौर्यस्य साचिव्यरूपां श्रियं, प्राप्नुहि इति ध्वनिः] ॥ २१ ॥

(ढ) संवाद्यतां—सम्भाष्यताम्, एतद्विषयकसन्देहापनोदनार्थं पर्य्यालोच्यताम् इति यावत्।

(ण) गेहं—विहारं, बौद्धसन्न्यासिनां वासस्थानमित्यर्थः, तेषां स्वतन्त्रगृहादि-स्थितिनियमाभावात्।

क्षप। भअवं कअंतो, जेण अत्तणो पक्खं उज्झिअ परपक्खं प्पमाणीकलेसि। * (त)

[ इति निष्क्रान्तः क्षपणकः ]।

राक्ष। प्रियंवदक! ज्ञायतां का वेला वर्त्तते इति?।

प्रियं। जं अमच्चो आणवेदि। [ इति निष्क्रम्य पुनः प्रविश्य च ]। अत्थाहिलासी भअवं सूले। † (थ)

राक्ष। [ आसनात् उत्थाय विलोक्य च ]। अये! अस्ताभिलाषी भगवान् सहस्रदीधितिः। (द) तथा हि—

आविर्भूतानुरागाः क्षणमुदयगिरेरुज्जिहानस्य भानोः
पत्रच्छायैः पुरस्तादुपवनतरवो दूरमाश्वेव गत्वा।
एते तस्मिन् निवृत्ताः पुनरितरककुप्प्रान्तपर्य्यस्तबिम्बे
प्रायो भृत्यास्त्यजन्ति प्रचलितविभवं स्वामिनं सेवमानाः॥२२॥

[ इति निष्क्रान्ताः सर्वे ]।

इति चतुर्थोऽङ्कः॥ ४॥

---

* भगवान् कृतान्तः; येन आत्मनः पक्षमुज्झित्वा परपक्षं प्रमाणीकरोषि।

† यत् अमात्य आज्ञापयति। अस्ताभिलाषी भगवान् सूर्य्यः। [ पाठान्तरीय-संस्कृतं यथा—"अर्थाभिलाषी भगवान् शूरः" इति ]।

---

(त) परपक्षम्—अन्यं सांवत्सरिकम्। प्रमाणीकरोषि—विश्वास्यत्वेन अपेक्षसे इत्यर्थः; अतस्त्वया ज्योतिःशास्त्रस्य सिद्धान्तो व्याकोपित इति कृतान्तः कुपित इति निष्ठुरोक्तिः। आत्मनः पक्षं नन्दात्मजम् उपेक्ष्य परपक्षो मलयकेतुः प्रमाणीक्रियते अतस्तव काल: कुपित इति गूढम्। ("कृतान्तो यमसिद्धान्तौ" इत्यमरः)।

(थ) शूर इति।—शूरो मलयकेतुरस्तोन्मुखः शूरो राक्षसश्च अर्थाभिलाषी इति चोपश्रुतिर्ध्वनिता।

(द) ताम् एव दुरुपश्रुतिम् अन्वयति—सहस्रदीधितिरिति।

भगवतो विवस्वतः उदयास्तधर्मप्रदर्शनमुखेन प्रभोः अभ्युदये सेवकानुरागः, तथा अवनतौ विरागः इति वस्तुतत्त्वं प्रदर्शयन्नाह, आविर्भूतानुरागा इति।—उदयगिरेः

उदयाचलात्, उज्जिहानस्य उद्गच्छतः, भानोः सूर्य्यस्य, [ सम्बन्धविवक्षया षष्ठी ] सूर्य्ये इत्यर्थात्, वर्णं व्याप्य आविर्भूतः अनुरागः अनुरक्तिः तुल्यवर्णता च येषां ते, एते उपवनतरवः आरामवृक्षाः, [ अत्र तरुषु भृत्यत्वारोपः ] पत्रच्छायैः उपलक्षिताः सन्तः, यद्वा—पत्रच्छायारूपेण, [ "इत्थम्भूतलक्षणे" ( २।३।२१ पा० ) इति विशेषणे तृतीया, "छाया बाहुल्ये" ( २।४।२२ पा० ) इति क्लीबत्वम ] पुरस्तात् पुरोभागे, पुरोभागनिषेवणवदित्यर्थः, दूरं गत्वा पूर्वाह्णेव वृक्षच्छायाः प्रत्यक्प्रसरन्तीति भावः; पुरोभागनिभृत्यत्वेन उत्प्रेक्षिताः; तस्मिन् सूर्य्ये, पुनः इतरककुप्प्रान्तपर्य्यस्तबिम्बे पश्चिमदिक्प्रान्तप्रसृतमण्डले सति, आशु शीघ्रमेव, न तु कालप्रतीक्षणं कृत्वेत्यर्थः, निवृत्ताः। अपराह्णकाले हि सूर्य्ये अस्तोन्मुखे सति ता एव वृक्षच्छायाः तं परित्यज्य पराञ्चा इव दृश्यन्ते इति। [ एतेन च मलयकेतुदुरवस्था व्यज्यते ] तथा हि, सेवमाना भृत्याः प्रचलितविभवं सम्पद्विहीनं, स्वामिनं प्रायः बाहुल्येन, त्यजन्ति। [ अत्र सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः, स च उत्प्रेक्षया अनुप्राणितः ]। स्रग्धरा वृत्तम् ॥ २२ ॥

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-कुलपतिकल्प "बि,ए" इत्युपनामक-
श्रीमज्जीवानन्दविद्यासागर-भट्टाचार्य्यविरचितायां, तदात्मजाभ्यां
श्रीमदाशुबोधविद्याभूषण-श्रीमन्नित्यबोधविद्यारत्नाभ्यां
परिवर्त्तित-परिवर्द्धितायां सुखबोधिनी-
समाख्यायां मुद्राराक्षसव्याख्यायां
चतुर्थोऽङ्कः ॥ ४ ॥

# पञ्चमोऽङ्कः।

[ ततः प्रविशति लेखमलङ्करणस्थगिकाञ्च समुद्राम् (क)
आदाय सिद्धार्थकः ]।

सिद्धा। हीमाणहे (ख) हीमाणहे !!—

बुद्धिजलणिज्झरेहिं सिच्चंतो देसकालकलसेहिं।
दंसइस्सदि अज्ज फलं गुरुअं चाणक्कणीदिलदा * ॥ १ ॥

---

* आश्चर्यम आश्चर्यम !!—

बुद्धिजलनिर्झरैः सिच्यमाना देशकालकलशैः।
दर्शयिष्यति अद्य फलं गुरुकं चाणक्यनीतिलता ॥

---

अथ फलागमकार्य्ययोः सम्बन्धो निर्वहणसन्धिः त्रिभिरङ्कैरारभ्यते। तल्लक्षणमुक्तं—"बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्। ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥" इति। अस्यार्थो यथा—बीजवन्तः अनुस्यूतबीजाः, मुखसन्ध्यादीनाम् अर्थाः आरम्भबीजसम्बन्धादयः, यथायथं तत्तत्प्रसङ्गानुसारेण, विप्रकीर्णा विप्रकलिततया यदर्थमारब्धाः सन्तः, ऐकार्थ्येन उपनीयन्ते, तस्य फलागमशालिनः कार्य्यस्य यत्र निर्वाहः सिद्धिः, भवति स निर्वहणसन्धिरिति। कार्य्यफलागमौ वर्त्तेते। अस्य अङ्गानि फलागमकार्य्यानुगुण्येन प्रयोक्तव्यानि। यथा—"सन्धिर्विरोधो ग्रथनं निर्णयः परिभाषणम्। प्रसादानन्दसमयाः कृत्याभाषोपगूहनम्। पूर्वभावोपसंहारौ प्रशस्तिश्च चतुर्दश ॥" इति।

(क) स्थगिकाम्—आधारविशेषं, ("थलो" "व्याग" वा इति भाषान्तरम्)। [ अत्र स्थगितकामिति पाठे—पेटिकाम् इत्यर्थः ]। समुद्रां—राक्षसनामाङ्कितमुद्रया चिह्निताम्।

(ख) अथ निर्वहणसन्धिस्त्रिभिरङ्कैरारभ्यते, हीमाणहे इति—[ विस्मयद्योतको निपातः ]।

चाणक्यस्य नीतिप्रयोगकौशलं प्रशंसयंस्तत्र स्वसम्बन्धं दर्शयितुमाह, बुद्धीति।—देशाः कालाश्च कलसाः कुम्भा इव येषां तादृशैः, बुद्धिजलनिर्झरैः बुद्धयः जलानीव तेषां निर्झरैः निषेकैः, सिच्यमाना आर्द्रीक्रियमाणा, चाणक्यनीतिलता चाणक्यस्य नीतिः लता इव, अद्य गुरुकं महत्, फलं दर्शयिष्यति, उपयुक्ते देशे काले च बुद्धि-पूर्वककार्य्यकरणे अवश्यमेव फलोत्पत्तिरिति भावः। प्रथमाङ्के चाणक्येन शकटदास-

गहीदो मए अज्जचाणक्केण पढमलेहिदो लेहो अमच्चरक्खसस्स मुद्दालंछिदो। तस्स ज्जेव मुद्दालंछिदा इअं आहरणपेडिआ। चलिदोम्हि किल (ग) पाडलिउत्तं, ता जाव गच्छम्हि। [परिक्रम्य अवलोक्य च]। कहं खवणओ आअच्छदि!! जाव मे असउणभूदं (घ) इमस्स दंसणं, ता आदिच्चदंसणेण पडिहणामि। *

[ततः प्रविशति क्षपणकः]।

क्षप। अलिहंताणं प्पणमामो जे दे गंभीलदाए बुद्धीए।
लोउत्तलेहिं लोए सिद्धिं मग्गेहिं मग्गंति †॥ २॥

* गृहीतो मया आर्य्यचाणक्येन प्रथमलेखितो लेखः अमात्यराक्षसस्य मुद्रालाञ्छितः। तस्यैव मुद्रालाञ्छिता इयम् आभरणपेटिका। चलितोऽस्मि किल पाटलिपुत्रं, तत् यावत् गच्छामि। कथं क्षपणकः आगच्छति!! यावन्मे अशकुनभूतमस्य दर्शनं, तस्मादादित्यदर्शनेन प्रतिहन्मि। ["जाव से असउणभूदं दंसणं मह संमदमेव्व ता ण पडिहणामि" इति पाठे—"यावदस्य अशकुनभूतं दर्शनं मम सम्मतमेव तस्मान्न परिहरामि" इति संस्कृतम्]।

† अर्हतां प्रणमामो ये ते गम्भीरतया बुद्धेः।
लोकोत्तरैर्लोके सिद्धिं मार्गैर्मार्गयन्ति॥

कायस्थेन लेखापितो लेखः, तस्य फलम् अद्यैव राक्षसभेदरूपं फलिष्यति इत्यतः चाणक्यनीतिप्रशंसा कृता। [अत्र एतस्मिन् पक्षे साधकबाधकप्रमाणाभावात् उपमा-रूपकयोः सन्देहसङ्करः, स च फलमिति श्लेषानुप्राणितः]॥ १॥

(ग) किल इत्यलीके, गमनमलीकं छद्मरूपमित्यर्थः। [इदं बीजोद्गमनं सन्धिनामाङ्गं, बीजस्य चाणक्यनीतेः, उद्गमनात् कार्य्यसिद्ध्यर्थमभ्युद्गमात् निर्देशात्]।

(घ) अशकुनभूतम्—अमङ्गलभूतम् इति बहिरर्थः। गूढार्थस्तु—अशकुनस्वरूपम्, एतद्दर्शनन्तु न किमपि शुभमशुभं वा सूचयति इति भावः। एतत्पक्षे—तद्दर्शनमादित्यदर्शनन्तु मङ्गलार्थकं, "गुरुमग्निं तथा सूर्य्यं प्रातः पश्येत् सदा बुधः" इत्युक्तेः।

निखिलशकुनपरिभाविबुद्धिविभवस्य चाणक्यस्य नीतिकौशलोत्कर्षं बौद्धसिद्धिवर्णनमुखेन प्रकटयन्नाह, अर्हतामिति।—अर्हतां जैनदेवानां, "सर्वज्ञो जितरागादि-

सिद्धा। भदंत! प्पणमामि। *

क्षप। सावका! धम्मलाहो दे होदु। [सिद्धार्थकं निर्वर्ण्य]। सावका! समुद्दसंतलणकिदव्ववसाअं (ङ) विअ दे हिअअं पेक्खामि। †

सिद्धा। कहं भदंतो जाणादि? ‡

---

* भदन्त! प्रणमामि।

† उपासक! धर्मलाभस्ते भवतु। उपासक! समुद्रसन्तरणकृतव्यवसायमिव ते हृदयं पश्यामि।

‡ कथं भदन्तो जानाति?

---

दोषस्त्रैलोक्यपूजितः। यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः॥" इत्युक्तलक्षणानाम् [अत्र गौरवे बहुवचनम्] प्रशस्यानाञ्च, ["कर्मादीनामपि सम्बन्धमात्रविवक्षायां षष्ठ्येव" इति वृत्त्या "भजे शम्भोश्चरणयोः" इतिवत् कर्मणि षष्ठी] प्रणमामः; ये ते बुद्धेः मत्यादिपञ्चकरूपसम्यग्ज्ञानस्य, "यथावस्थिततत्त्वानां सङ्क्षेपाद्विस्तरेण वा। योऽवबोधस्तमत्राहुः सम्यग्ज्ञानं मनीषिणः॥" इति। "तच्च मतिश्रुतावधिमनःपर्य्यायकेवलभेदात् पञ्चविधम्" इति च तल्लक्षणात्, पक्षे—मतेः, गम्भीरतया दुरवगाहतया, पक्षे—सुधीरया बुद्ध्या इत्यर्थः, लोके जगति, लोकोत्तरैः अलौकिकैः, मार्गैः मोक्षप्राप्तिसाधनाचारैः, पक्षे—कार्य्यसिद्धेः उपायैः, सिद्धिं मुक्तिं, "बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षणं मोक्षः" इति बौद्धशास्त्रोक्तं मोक्षमित्यर्थः, पक्षे—कार्य्यस्य साफल्यमित्यर्थः, मार्गयन्ति अनुसन्दधति, पक्षे—अन्विच्छन्ति, "यथा मृत्तिकालिप्तकृतम् अलाबुद्रव्यं जले अधः पतति, पुनरपेतमृत्तिकाबन्धमूर्द्ध्वं गच्छति, तथा कर्मरहित आत्मा असङ्गत्वात् ऊर्द्ध्वं गच्छति, बन्धच्छेदादेरण्डबीजवच्चोर्द्ध्वगतिस्वभावाच्चाग्निशिखावत्" इति जैनानां मतम्। [अनया गाथया गम्भीरबुद्धिः चाणक्य एव भदन्तेनाभिप्रेतः इति सूचितम्। श्लेषालङ्कारः]। आर्य्या वृत्तम्॥ २॥

(ङ) समुद्रसन्तरणकृतव्यवसायं—समुद्रपारगमने कृतोद्योगं, दुष्करकार्य्यकरणोद्यतमित्यर्थः। ["समुद्दसंतरणे" इत्यत्र—"अण्णाणसमुद्दहने" इति पाठान्तरम्]।

क्षप। सावका! किं एत्थ जाणिदव्वं? णं एसो ज्जेव दे मग्गणाओकण्णधारो (च) लेहो सूचेदि। *

सिद्धा। जाणिदं भदंतेण देसंतलं चलिदोम्हि। ता कधेदु भदंतो कीदिसो अज्ज दिअसो? †

क्षप। [विहस्य]। सावका! मुंडं मुंडिअ तुमं णक्खत्ताइं पुच्छसि? ‡ (छ)

सिद्धा। भदंत! संपदं पि किं जादं? (ज) ता कधेहि, जइ अत्तणो अणुऊलं भविस्सदि, ता गमिस्सं, अण्णधा णिवत्तिस्सं। §

---

* उपासक! किमत्र ज्ञातव्यम्? ननु एष एव ते मार्गनौकर्णधारो लेखः सूचयति।

† ज्ञातं भदन्तेन देशान्तरं चलितोऽस्मि। तत् कथयतु भदन्त! कीदृशोऽद्य दिवसः?

‡ उपासक! मुण्डं मुण्डयित्वा त्वं नक्षत्राणि पृच्छसि?

§ भदन्त! साम्प्रतमपि किं यातम्? तत् कथय, यदि आत्मनः अनुकूलं भवेत्, तदा गमिष्यामि, अन्यथा निवर्त्तिष्ये।

---

(च) मार्गनौकर्णधारः,—मार्गः,—पन्थाः, स एव नौः तस्य कर्णधारः,—नाविकः इव, [अत्र लेखस्य पारकरणसामर्थ्यमस्तीति द्योत्यते। "एसो दे मग्गादेसकुसलो सउणो करदलगदो लेहो अ सूएदि" इति क्वचित् पाठः। तत्र—"एष ते मार्गादेशकुशलं शकुनं करतलगतो लेखश्च सूचयति" इति संस्कृतम्। शकुनं—यात्राकालिकशुभाशुभसूचकनिमित्तविशेषः। अन्यत् पूर्ववत् ]।

(छ) यथा मुण्डनात् पूर्वमेव नक्षत्रं पृच्छ्यते, तथा त्वया यात्रायाः प्राक् प्रष्टव्यमासीत्, इदानीं निर्गत्य तस्य पृच्छा विफलैव इति भावः।

(ज) साम्प्रतमिति।—साम्प्रतम्—इदानीम्। किं यातम्?—किं गतम्? इदानीमपि अहं न गतवान्, परं गन्तुकामः; अतः त्वया शुभमुहूर्त्तः अवश्यं कथनीयः इत्यर्थः।

चप। सावकाणं संपदं एदस्सिं मलअकेदुकडए (झ) अणुऊलेण अणाणुऊलेण वा अगहीदमुद्देण ण गच्छीअदि। *

भिक्षु। भदंत! कहेहि, कुदो क्खु अअं? † (ञ)

चप। सावका! णिसामेहि. पढमं दाव एत्थ मलअकेदु-कडए लोअस्स अणिवालिअणिक्कमणप्पवेसो आसी। दाणीं इदो पच्चासण्णे कुसुमउरे ण कोवि अमुद्दालंछिदो णिक्कमिदुं प्पविसिदुं वा अणुमोदीअदि। ता जइ भाउराअणस्स मुद्दा-लंछिदोसि, तदो गच्छ वीसत्थो; अण्णधा णिवत्तिअ णिउक्कंठं चिट्ठ। मा तुमं गुम्मट्ठाणाधिवेहिं (ट) संजमिदकलचलणो राअउलं प्पवेसीअसि। ‡

---

* उपासकानां साम्प्रतमेतस्मिन् मलयकेतुकटके अनुकूलेन अननुकूलेन वा अगृहीतमुद्रेण न गम्यते।

† भदन्त! कथय, कुतः खलु अयम्?

‡ उपासक! निशामय, प्रथमं तावदत्र मलयकेतुकटके लोकस्यानिवारित-निष्क्रमणप्रवेश आसीत्। इदानीम् इतः प्रत्यासन्ने कुसुमपुरे न कोऽपि अमुद्रा-लाञ्छितो निष्क्रमितुं प्रवेष्टुं वा अनुमोद्यते। तत् यदि भागुरायणस्य मुद्रा-लाञ्छितोऽसि, तदा गच्छ विश्वस्तः, अन्यथा निवृत्य निरुत्कण्ठं तिष्ठ। मा त्वं गुल्मस्थानाधिपैः संयमितकरचरणो राजकुलं प्रवेश्यसे।

---

(झ) मलयकेतुकटके—मलयकेतोः शिविरे।

(ञ) अयं—नियमः। कुतः?—कस्मात् कालादारभ्य? कियन्ति दिनानि नियमोऽयं प्रवर्त्तितः? इत्यर्थः।

(ट) गुल्मस्थानाधिपैः,—गुल्मस्थानं—रक्षास्थानविशेषः, प्रहरिस्थानमिति यावत् इत्यर्थः, [ थाँटोति प्रसिद्धम् ] तदधिपैः,—तदध्यक्षैः। ("गुल्मः सेनाघट्टभिदोः स्तम्ब-रुक्प्लीहभिदोः" इति मेदिनी)।

सिद्धा। किं ण आणादि भदंतो, जधा अमच्चरक्खसस्स केलिअरो अंतिओ (ढ) सिद्धत्थओ अहं त्ति? ता अमुद्दालंछिदंपि मं णिक्कमंतं कस्स सत्ती णिवारेदुं? *

क्षप। सावका! रक्खसस्स पिसाचस्स वा केलिअरो होहि, णत्थि उण दे अमुद्दालंछिदस्स णिक्कमणोवाओ। †

सिद्धा। भदंत! ण कुप्प, भण, मे कज्जसिद्धी होदु त्ति। ‡

क्षप। सावका! गच्छ, होदु दे कज्जसिद्धी। अहंपि भाउरायणादो पाडलिउत्तं गंतुं मुद्दं पडिच्छेमि। § (ड)

[ इति उभौ निष्क्रान्तौ ]।

[ इति प्रवेशकः (ढ) ]।

---

* किं न जानाति भदन्तः यथा अमात्यराक्षसस्य केलिकरः अन्तिकः सिद्धार्थकोऽहमिति? तत् अमुद्रालाञ्छितमपि मां निष्क्रामन्तं कस्य शक्तिर्निवारयितुम्?

† उपासक! राक्षसस्य पिशाचस्य वा केलिकरो भव, नास्ति पुनस्ते अमुद्रालाञ्छितस्य निष्क्रमणोपायः।

‡ भदन्त! न कुप्य, भण, मे कार्य्यसिद्धिर्भवतु इति।

§ उपासक! गच्छ, भवतु ते कार्य्यसिद्धिः। अहमपि भागुरायणात् पाटलिपुत्रं गन्तुं मुद्रां प्रतीच्छामि।

---

(ढ) अन्तिकः।—समीपवर्त्ती, पार्श्वचर इत्यर्थः।

(ड) अहमपीति।—अहमपि चिकीर्षितमन्त्रप्रयोजनसिद्ध्यर्थं मुद्रायाचन-व्याजेन भागुरायणं प्रति गमिष्यामि इति गूढम्। [ इदं कार्य्यमार्गेण विरोधो नामाङ्गम् ]। प्रतीच्छामि—गृह्णामि।

(ढ) प्रवेशक इति।—"प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥" इत्युक्तलक्षणः। अत्र हि तस्य प्रथमाङ्के चाणक्येन लिखितपत्रवृत्तान्तस्य, तथा कार्य्यनाथस्य भागुरायणसकाशात् मुद्राग्रहणादिवृत्तान्तादेः कार्य्यांशस्य सूचनात् तथात्वमिति बोध्यम्।

[ ततः प्रविशति पुरुषेण अनुगम्यमानो भागुरायणः ]।

भागु। [ आत्मगतम् ]। अहो !! विचित्रता आर्य्यचाणक्यनीतेः। कुतः ?—

मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना
मुहुः सम्पूर्णाङ्गी मुहुरतिकृशा कार्य्यवशतः।
मुहुर्भ्रश्यद्बीजा मुहुरपि बहुप्रापितफले-
त्यहो !! चित्राकारा नियतिरिव नीतिर्नयविदः ॥ १ ॥

---

सम्प्रति तदेव चाणक्यनीतेर्वैचित्र्यं दर्शयन्नाह, मुहुरिति।—अहो इति आश्चर्य्ये; नयविदः नीतिज्ञस्य, नीतिः नयः, नियतिः दैवमिव, चित्राकारा विचित्रस्वरूपा; तथा हि—कार्य्यवशतः कार्य्यविशेषमुद्दिश्य, प्रयोजनवशादित्यर्थः, मुहुः वारं वारं, कदाचिदित्यर्थः, लक्ष्योद्भेदा लक्ष्यः अनुमेयः, उद्भेदः प्रकाशो यस्याः सा, लक्ष्यस्य उद्देश्यस्य, उद्भेदः सामान्यतः प्रकाशो यस्यां सा इति वा, मुहुः कदाचित्, अधिगमाभावेन विशेषज्ञानाभावेन, गहना कठिना, दुर्बोधा इत्यर्थः, मुहुः कदाचित्, सम्पूर्णाङ्गी सम्पूर्णानि अङ्गानि अवयवा यस्याः तादृशी, पुष्टसाधना, मुहुः कदाचित्, अतिकृशा अल्पमात्रबोधगम्या इत्यर्थः, मुहुः कदाचित्, भ्रश्यद्बीजा भ्रश्यत् नश्यत्, बीजं कारणं यस्याः तथाभूता, अनुद्भावितकारणेत्यर्थः, मुहुरपि बहुप्रापितफला बहु प्रचुरं यथा तथा, प्रापितं फलं यया तथोक्ता, सफलेत्यर्थः। प्रकृतपक्षे लक्ष्योद्भेदा मुखसन्धौ अल्पोद्दिष्टा सती बहुधा विस्तारिणीत्यर्थः, प्रतिमुखे लक्ष्यालक्ष्यायाः पुनर्व्यक्तेः गहना अतिकृशा च, गर्भे मुहुर्दृष्टनष्टान्वेषणात् नश्यदिव बीजमुद्योगो यस्याः सा तथोक्ता, विमर्शे बीजस्य स्पष्टमेव दर्शनात् सम्पूर्णाङ्गी; निर्वहणे सर्वार्थोपसंहारात् बहुप्रापितफला च। एवं कार्य्याणाम् विचित्राकारत्वं कारणे उपचर्य्यते। भाग्यस्य यथा फलेनैव ज्ञेयता, एवं नीतेरपि फलेनैव ज्ञेयतेति भावः। [ श्लोकेऽस्मिन् एकस्यैव मुहुःशब्दस्य अनेकशः प्रयोगात् "सदा चरति खे भानुः" इत्यादि दर्पणकृदुदाहरणवत् अनवीकृतत्वदोषः। अत्र "नियतिरिव" इत्यंशे उपमाऽलङ्कारः, तथा अप्रस्तुतात् सामान्यतः नीतिमात्रस्य नीतिप्रशंसनात् विशेषतः चाणक्यनीतिप्रशंसारूपस्य प्रस्तुतस्य प्रतीतेरप्रस्तुतप्रशंसा चेति अनयोः संसृष्टिः ]। शिखरिणी वृत्तम् ॥ १ ॥

[प्रकाशम्]। भद्र भासुरक ! न मां दूरीभवन्तमिच्छति (ग) कुमारः ; अतोऽस्मिन् एव आस्थानमण्डपे विन्यस्यताम् आसनम् ।

पुरुषः। एदं आसणं, उपविसदु अज्जो । *

भागु। [उपविश्य]। भद्र भासुरक ! यः कश्चित् मुद्रार्थी मां द्रष्टुम् इच्छति, स त्वया प्रवेशयितव्यः ।

पुरु। जं अज्जो आणवेदि । †

[इति निष्क्रान्तः]।

भागु। [स्वगतम्]। कष्टम् !! एवमपि नाम अयम् अस्मासु स्नेहवान् कुमारो मलयकेतुरति-सन्धातव्य इति अहो !! दुष्करम्। अथवा (घ)—

कुले लज्जायाञ्च स्वयशसि च माने च विमुखः,
शरीरं विक्रीय क्षणिकधनलाभाद्भवति ।
तदाज्ञां कुर्वाणो हितमहितमित्येतदधुना,
विचारातिक्रान्तः किमिति परतन्त्रो विमृशति ? ॥ ४ ॥

* एतदासनम्, उपविशतु आर्य्यः ।

† यत् आर्य्य आज्ञापयति ।

(ग) दूरीभवन्तमिति ।—मुद्रादानार्थं कटकद्वारि अवस्थानम् अपि दूरीभवनमित्यभिप्रायः ।

(घ) एवमपि—क्षणमात्रं मया विरहमसहमानोऽपीत्यर्थः । अति-सन्धातव्यः,—प्रतारणीयः । स्वोक्तं कष्टं समाधत्ते—अथवेति ।

प्रभुपरतन्त्रस्य कार्य्याकार्य्यविवेचनं दुर्घटेति पद्यान्तरं समर्थयमानः आह, कुले इति ।—परतन्त्रः पराधीनो जनः, कुले वंशे, तदनुसारिचरिते इति यावत्, लज्जायाम् अकार्य्यकरणजन्यायां त्रपायां, स्वयशसि स्वस्य ख्यातौ, माने च आत्ममर्य्यादायाञ्च, विमुखः पराङ्मुखः सन्, क्षणिकधनलाभात् क्षणिकधनप्रत्याशया, नश्वरवित्तलाभ-मुद्दिश्येति यावत्, भवति आत्मानमिति, शरीरं विक्रीय स्वशरीरस्य कृते स्वत्वं तस्मै दत्त्वेत्यर्थः, तदाज्ञां तदादेशं, कुर्वाणः प्रतिपालयन्, सुतरां विचारातिक्रान्तः सदसद्-

प्रतीहारी। कुमार! एसो क्खु कडआदो णिक्कमिदुकामाणं मुद्दासंपदाणाधिआरी चिट्ठदि। *

मल। विजये! मुहूर्तं निभृतपदसञ्चारा भव, यावदस्य पराङ्मुखस्य एव पाणिभ्यां नयने पिदधामि। (ट)

प्रती। जं कुमारो आणवेदि। †

भासुरकः। [प्रविश्य]। अज्ज! एसो क्खु क्खवणओ मुद्दाणिमित्तं अज्जं पेक्खिदुमिच्छदि। ‡

भागु। प्रवेशय।

भासु। जं अज्जो आणवेदि। § [इति निष्क्रान्तः]।

क्षपणकः। [प्रविश्य]। सावकाणं धम्मविड्ढी होदु। ¶

भागु। [नाट्येन क्षपणकमवलोक्य स्वगतम्]। अये! राक्षसस्य मित्रं (ड) जीवसिद्धिः!! [प्रकाशम्]। भदन्त! न खलु (ढ) राक्षसस्य प्रयोजनमेव किञ्चिदुद्दिश्य गम्यते?

* कुमार! एष खलु कटकान्निष्क्रमितुकामानां मुद्रासम्प्रदानाधिकारे तिष्ठति।

† यत् कुमार आज्ञापयति।

‡ आर्य! एष खलु क्षपणको मुद्रानिमित्तम् आर्यं प्रेक्षितुमिच्छति।

§ यत् आर्य आज्ञापयति।

¶ श्रावकाणां धर्मवृद्धिः भवतु।

निराकृतेन" इति "क्षतिना" इति च विशेषणद्वयस्य साभिप्रायकत्वात् परिकरालङ्कारः, स च पाण्डुकुचालम्बकमिव इत्युत्प्रेक्षया संसृज्यते]। शार्दूलविक्रीडितं वृत्तम्॥ ५॥

(ट) विजये! मुहूर्तमिति।—[अनेन मलयकेतोरतिबालिशत्वं भागुरायणस्य तदतीवगर्हणीयत्वञ्च ध्वनितम्]। "तेन इदानीं महत् प्रयोजनमनुष्ठेयं भविष्यति" (२६ पृष्ठे ७ पङ्क्तौ) इति पूर्वमुपक्षिप्तस्य जीवसिद्धिना सम्प्रति क्रियमाणस्य मलय-केतोरतिसन्धानरूपस्य महाप्रयोजनस्य अवसरदानाय च इदं कविसंविधानम् इत्यवधेयम्।

(ड) राक्षसस्य मित्रमिति।—अनेन हारेण इदानीं मलयकेतुरतिसन्धातव्यः इति भावः।

(ढ) न खलु इति काका प्रश्नो व्यज्यते।

क्षप। [कर्णौ पिधाय]। संतं पावं, संतं पावं। सावका! तहिं ज्जेव गमिस्सं, जहिं लक्खसस्स पिसाचस्स वा णामं पि ण सुणीअदि। *

भागु। भदन्त! बलीयांस्ते सुहृदि प्रणयकोपः। तत् किम् अपराद्धं राक्षसेन भदन्तस्य?

क्षप। सावका! ण मम किं-पि लक्खसेण अवलद्धं, सअं ज्जेव्व मंदभाओ अत्तणो कम्मसु (प) लज्जामि। †

भागु। भदन्त! वर्द्धयसि मे कुतूहलम्—"।

मल। [स्वगतम्]। मम च।

भागु। "—श्रोतुम् इच्छामि।

मल। [स्वगतम्]। अहमपि।

क्षप। सावका! किं एदिणा असुणिदव्वेण सुदेण? ‡

भागु। भदन्त! यदि रहस्यं, तदा तिष्ठतु।

क्षप। सावका! ण हि रहस्सं। §

भागु। तर्हि कथ्यताम्।

क्षप। सावका! णत्थि एदं, तधावि ण काधइस्सं अदिणिसंसं। ¶

---

* शान्तं पापं, शान्तं पापम्। उपासक! तत्रैव गमिष्यामि, यत्र राक्षसस्य पिशाचस्य वा नामापि न श्रूयते।

† उपासक! न मे किमपि राक्षसेनापराद्धं, स्वयमेव मन्दभाग्यः आत्मनः कर्मसु लज्जे।

‡ उपासक! किमेतेन अश्रोतव्येन श्रुतेन?

§ उपासक! न हि रहस्यम्।

¶ उपासक! नासीदं, तथाऽपि न कथयिष्यामि अतिनृशंसम्।

---

(प) आत्मनः कर्मसु—सुहृद्द्रोहरूपेषु; अनन्तरमेव क्षपणेन राक्षसस्य पर्वतकघातकत्वेन निर्देक्ष्यमाणत्वादिति भावः।

भागु। भदन्त! अहमपि मुद्रां न दास्यामि।

क्षप। [स्वगतम्]। युक्तम् इदानीम् अर्थिने (फ) कथयितुम्। [प्रकाशम्]। का गदी? एसो णिवेदेमि, सुणादु सावको। अत्थि दाव हगे अधण्णो पढमं पाडलिउत्ते णिवसमाणो लक्खसस्स मित्तत्तणं उवगदे। तहिं अवसले लक्खसेण गूढं विसकण्णा-प्पओअं समुप्पादिअ घादिदे (ब) देवे पव्वदीसले। *

मल। [सवाष्पमात्मगतम्]। कथं!! राक्षसेन घातितस्तातो न चाणक्येन!!

भागु। भदन्त! ततस्ततः?

क्षप। तदो हगे लक्खसस्स मित्तं कदुअ चाणक्कहदएण सणिआलं णअलादो णिव्वासिदो। दाणीं पि लक्खसेण अणेअ-कज्जकुसलेण किंपि तादिसं (भ) आलहीअदि, जेण हगे जीअलोआदो णिक्कासिज्जेमि। † (म)

---

* का गतिः? एष निवेदयामि, शृणोतु उपासकः। अस्ति तावत् अहमधन्यः प्रथमं पाटलिपुत्रे निवसन् राक्षसस्य मित्रत्वमुपगतः। तस्मिन्नवसरे राक्षसेन गूढं विषकन्याप्रयोगं समुत्पाद्य घातितो देवः पर्वतेश्वरः।

† ततोऽहं राक्षसस्य मित्रं कृत्वा चाणक्यहतकेन सनिकारं नगरान्निर्वासितः। इदानीमपि राक्षसेन अनेककार्य्यकुशलेन किमपि तादृशमारभ्यते, येनाहं जीव-लोकात् निष्कासिष्ये।

---

(फ) अर्थिने—आदरवते भागुरायणाय, आदरेण श्रुतं मत्कथितं तथात्वेन गृह्णीयादिति भावः।

(ब) घातित इति।—मम हस्तेनेति शेषः।

(भ) तादृशमिति।—[तादृशं—पर्वतेश्वरघातनसदृशं मलयकेतुनिग्रहरूपमिति गूढोऽर्थः। इदं भागुरायण-भदन्तयोर्मिथः परिभाषणं कल्पनम्]।

(म) जीवलोकात्—जगतः इत्यर्थः। पूर्वं हि राक्षसेन प्रयुक्तया विषकन्यया केवलं पर्वतेश्वरो घातितः, अहमपि तदा चाणक्यद्वारा नगरात् निर्वासितः; इदानीन्तु राक्षसेन यदारब्धं, तेन न केवलं कोऽपि घातिष्यते, अहमपि घातिष्ये;

भाग। भदन्त! प्रतिश्रुतराज्यार्द्धमयच्छता चाणक्यहतकेन इदमकार्य्यमनुष्ठितं, न राक्षसेन इति श्रुतम् अस्माभिः।

क्षप। [कर्णौ पिधाय]। संतं पावं संतं पावं। सावका! चाणक्को विसकस्साए णामंपि ण जाणादि। तेण ज्जेव दुट्ठबुद्धिणा रक्खसेण एसा अकज्जसिद्धी किदा। *

भाग। भदन्त! कष्टमिदम्। इयं मुद्रा दीयते, एहि, कुमारं संश्रावयावः।

मल। श्रुतं सखे! श्रवणविदारणं वचः
सुहृन्मुखाद्रिपुमधिकृत्य भाषितम्।
पितुर्वधव्यसनमिदं हि येन मे
चिरादपि द्विगुणमिवाद्य वर्द्धते ॥ ६ ॥

* शान्तं पापं शान्तं पापम्। श्रावक! चाणक्यो विषकन्याया नामापि न जानाति। तेनैव दुष्टबुद्धिना राक्षसेन एषा अकार्य्यसिद्धिः कृता।

"क्रियासमभिहारेण विराध्यन्तं क्षमेत कः?" इति मत्वाऽहं प्रथममेव नगरादस्मात् स्थानान्तरं गत्वा स्वप्राणान् धारयिष्यामि इति भावः।

मलयकेतुरलक्षितः सर्वं वृत्तान्तमाकर्ण्य तदैव वसुकामं भागुरायणं लक्ष्यीकृत्य वक्ति, श्रुतमिति।—हे सखे! रिपुं पर्वतेश्वरवधात् कल्पितशत्रुं राक्षसमित्यर्थः, अधिकृत्य आश्रित्य, भाषितं कथितं, श्रवणविदारणं श्रुतमात्रेण पीडाजनकत्वात् अतिकठोरमित्यर्थः, वचः वाक्यं, सुहृन्मुखात् सुहृदः राक्षसस्यैव मित्रस्य क्षपणकस्य, (सुहृन्मित्रयोः भेदो यथा—"अत्यागसहनो बन्धुः सदैवानुमतः सुहृत्। एकक्रियं भवेन्मित्रं समप्राणः सखा मतः॥" इत्युक्तेः) मुखात् श्रुतम्; [सुहृन्मुखादित्यनेन अस्य वचनस्य न कदाचन मिथ्यात्वसम्भव इति सूचितम्]। येन श्रवणेन, मे मम, इदं पितुर्वधव्यसनं पितृविनाशजनितकष्टं, चिरादपि द्विगुणमिव पुरातनमपि अद्य प्रत्यक्षायमाणत्वात् नवीकृतं सत् द्विगुणमिव, वर्द्धते। [अत्र अद्विगुणेऽपि द्विगुणत्वसम्भावनात् उत्प्रेक्षाऽलङ्कारः]। रुचिरा वृत्तम्॥ ६॥

क्षप । [ स्वगतम् ] । अये ! श्रुतं मलयकेतुहतकेन !! कृतार्थोऽस्मि । (य)

[ इति निष्क्रान्तः ] ।

मल । [ प्रत्यक्षवत् आकाशे लक्ष्यं बद्ध्वा ] । राक्षस ! युक्तमिदम् ।—

मित्रं ममायमिति निर्वृतचित्तवृत्तिं
विस्रम्भतस्त्वयि निवेशितसर्वकार्य्यम् ।
तातं निपात्य सह बन्धुजनाक्षितोयैः
अन्वर्थतोऽपि ननु राक्षस ! राक्षसोऽसि ॥ ७ ॥

भाग । [ स्वगतम् ] । रक्षणीया राक्षसस्य प्राणा: इति आर्य्यादेशः । भवतु एवं तावत् । [ प्रकाशम् ] । कुमार ! अलम् आवेगेन ; आसनस्थं कुमारं किञ्चित् विज्ञापयितुम् इच्छामि ।

---

(य) कृतार्थोऽस्मीति ।—प्रथमाङ्के "तत्रैवाग्नौ मत्कृत प्रयोजनमनुष्ठेयं भविष्यति" (२६ पृष्ठे ७ पङ्क्तौ ) इति पूर्वोक्तमहाप्रयोजनानुष्ठानेन कृतकृत्योऽस्मीत्यर्थः, सुहृन्मुखात् विपुलाधिकृत्य इत्यनेन अस्य सुहृत्त्वेन विश्वास्यवचनत्वं राक्षसस्य विपुलस्य मलयकेतुना मनसि दृढीकृतम् इति च कृतार्थता । [ इदं बीजानुगुणकार्य्यप्रत्यापकं निर्णयः ] ।

क्षपणकमुखात् श्रवणेन विषकन्याप्रयोगवृत्तान्तं राक्षसकृतमाकर्ण्य विकृतः राक्षसमधिक्षिपन्नाह, मित्रमिति ।—अयं राक्षसः, मम मित्रं सुहृत्, इति विस्रम्भतः विश्वासात्, त्वयि राक्षसे, निवेशितसर्वकार्य्यं समर्पितसकलराज्यभारं, निर्वृतचित्तवृत्तिं निश्चिन्तमनोवृत्तिं, तातं मम पितरं, बन्धुजनाक्षितोयैः बन्धुजनाश्रुभिः, सह निपात्य, ननु राक्षस ! भो कृतघ्न ! अन्वर्थतः योगार्थतोऽपि राक्षसोऽसि, त्वमिति शेषः, राक्षसवत् क्रूरकर्मकारित्वादिति भावः । पद्येनानेन एवं ज्ञायते यत् राक्षस-पर्वतकयोः पूर्वं महत् बन्धुत्वमासीत्, अत चाणक्येन राज्यार्द्धदानप्रलोभनेन राक्षसादिभेद्य स्वकार्य्यसिद्धये पर्वतकः सहायत्वेन प्रयोजित इति । तथा च, अनुपदमेव कुपितो मलयकेतुः भागुरायणेन 'तस्मिन् काले सर्वार्थसिद्धिं राजानमिच्छतः' इत्यादिना सन्दर्भेण समाधास्यते । [ अत्र तातनिपातने बन्धुजननयनजलपातसाहित्यस्य कथनात् सहोक्तिरलङ्कारः । "ममायम्" इत्यत्र "ममेदम्" इति पाठे—विधेयप्राधान्यात् क्लीबत्वम् ] । वसन्ततिलकं वृत्तम् ॥ ७ ॥

मल। [उपविश्य]। सखे! किमसि वक्तुकामः?

भागु। कुमार! इह खलु अर्थशास्त्रव्यवहारिणाम् अर्थवशात् अरिमित्रोदासीनव्यवस्था (र) न लौकिकानाम् इव स्वेच्छावशात्; यतः तस्मिन् काले सर्वार्थसिद्धिं राजानम् इच्छतो राक्षसस्य चन्द्रगुप्तादपि बलीयस्तया (ल) सुगृहीत-नामा देवः पर्वतेश्वर एव अर्थपरिपन्थी (व) महान् अरातिः आसीत्। तस्मिंश्च काले राक्षसेन इदम् अनुष्ठितम् इति न अतिदोषमिव अत्र पश्यामि। पश्यतु कुमारः,—

मित्राणि शत्रुत्वमिवानयन्ती,
मित्रत्वमप्यर्थवशाच्च शत्रून्।
नीतिर्नयत्यस्मृतपूर्ववृत्तं,
जन्मान्तरं जीवत एव पुंसः ॥ ८ ॥

तदत्र वस्तुनि (श) अनुपालम्भो राक्षसः, आ-नन्दराज्य-

---

(र) अर्थवशात—प्रयोजनवशात। अरिमित्रोदासीनव्यवस्था—अयम अरिः,—शत्रुः, अयं मित्रं—सुहृत, अयम् उदासीनः,—मध्यस्थः, इत्येवंरूपा व्यवस्था—विचारः।

(ल) बलीयस्तया—प्राबल्येन।

(व) अर्थपरिपन्थी—कार्य्यप्रतिद्वन्द्वी शत्रुः कार्य्यविघातको वा।

राक्षसं प्रति सन्दिग्धं मलयकेतुं अकार्य्याशङ्का पुनः प्रत्याययितुं राक्षसकृत्यं नीतिमूलकमिति समर्थयमान आह, मित्राणीति।—नीतिः अर्थशास्त्रनियमः, अर्थवशात् प्रयोजनवशात्, मित्राणि शत्रुत्वं शत्रूंश्च मित्रत्वमपि आनयन्ती प्रापयन्ती इव, अत एव जीवत एव पुंसः पुरुषान्, अस्मृतपूर्ववृत्तम् अविज्ञातपूर्ववृत्तान्तं, जन्मान्तरं नयति प्रापयति; यथा जन्मान्तरे पूर्वजन्मवृत्तं न स्मर्य्यते, तथा जीवत एव पुंसः राजनीतिवशात पूर्वकृतादि विस्मार्य्यत्वेन प्रसज्यते इति भावः। [अत्र मित्रेषु शत्रुत्वप्रापण-सम्भावनात् उत्प्रेक्षा, तथा अर्थवशे जीवतो जन्मान्तरप्राप्तौ तत्सम्बन्धवर्णनात् अतिशयोक्तिरित्यनयोः संसृष्टिः]। इन्द्रवज्रा वृत्तम् ॥ ८ ॥

(श) तदत्र वस्तुनीति।—[इदं कुपितस्य मलयकेतोः समाधानरूपं पर्य्युपालम्भम्]।

लाभात् अनुग्रहस्य च. पतत्; तस्य परिग्रहे परित्यागे वा कुमारः प्रमाणं भविष्यति।

मल। एवं भवतु। सखे! सम्यक् दृष्टवानसि; अन्यथा अमात्यस्य वधे प्रकृतिक्षोभः स्यात्, एवञ्च सन्दिग्धो विजयः स्यात् अस्माकम्।

पुरुषः। [प्रविश्य]। जेदु जेदु कुमारो। अज्ज अज्जस्स गुम्मट्ठाणाधिकिदो दीहचक्खू अज्जं विण्णवेदि, 'एसो क्खु अम्हेहिं कडआदो णिक्कमंतो अगहीदमुद्दो सलेहो पुरिसो गहीदो, ता पच्चक्खीकरेदु णं अज्जो' त्ति। *

भागु। भद्र! प्रवेशय।

पुरु। जं अज्जो आणवेदि। † [इति निष्क्रान्तः]।

[ततः प्रविशति पुरुषेण अनुगम्यमानः संयतः सिद्धार्थकः]। (ब)

सिद्धा। [स्वगतम्]।—

तिप्पंतीए गुणेसुं दोसेसुं परंमुहं करंतीए।
अम्हारिसजणणीए पणमामो सामिभत्तीए ‡ ॥ ८ ॥

---

* जयति जयति कुमारः। अयम् आर्य्यस्य गुल्मस्थानाधिकृतो दीर्घचक्षुः आर्य्यं विज्ञापयति, 'एष खलु अस्माभिः कटकात् निष्क्रामन् अगृहीतमुद्रः सलेखः पुरुषो गृहीतः, तत् प्रत्यक्षीकरोतु एनम् आर्य्यः' इति।

† यदार्य्य आज्ञापयति।

‡ तृप्यन्त्यै गुणेषु दोषेषु पराङ्मुखं कुर्वत्यै।
अस्मादृशजनजनन्यै प्रणमामः स्वामिभक्त्यै॥

---

(ब) अतः परम् अङ्कसमाप्तिपर्य्यन्तं प्रबन्धः "किमत्राभिलक्ष्याणि" (३६ पृष्ठे ७ पङ्क्तौ) इत्यादिना "आर्य एवमिदम्" (४१ पृष्ठे ८ पङ्क्तौ) इत्यन्तेन ग्रन्थेन उपक्षिप्तस्य बीजस्य अनेकधा प्रकीर्णस्य एकार्थीकरणबीजोपगमनस्य एव सन्धेरङ्गस्य प्रपञ्चः।

राक्षसविनिग्रहेणापि स्वामिकार्य्यं सम्पादयितुं कृतारम्भः सम्प्रति आत्मानं सिद्धान्मुखं ज्ञात्वा स्वामिभक्तिमेव च निन्दन् लज्जमानः तां प्रणमति, तृप्यन्त्यै इति।—गुणेषु,

पुरु। [उपसृत्य]। अज्ज ! अअं सो पुरिसो। *

भागु। [नाट्येन अवलोक्य]। भद्र ! किम् अयम् आगन्तुकः ? आहोस्वित् इहैव कस्यचित् परिग्रहः ? (ख)

सिद्धा। अज्ज ! अहं क्खु अमच्चरक्खसस्स सेवओ। †

भागु। भद्र ! तत् किमर्थम् अगृहीतमुद्रः कटकात् निष्क्रामसि ?

सिद्धा। अज्ज ! कज्जगोरवेण तुवराविदोम्हि। ‡

भागु। कीदृशं तत् कार्य्यगौरवं, यत् राजशासनम् उल्लङ्घयसि ?

मल। सखे भागुरायण ! लेखम् उपानय।

सिद्धा। [भागुरायणाय लेखम् अर्पयति]।

भागु। [सिद्धार्थकहस्तात् लेखं गृहीत्वा मुद्रां दृष्ट्वा]। कुमार ! अयं लेखः, राक्षसनामाङ्किता इयं मुद्रा।

मल। मुद्रां परिपालयन् (ग) उद्घाट्य दर्शय।

भागु। [तथा कृत्वा दर्शयति]।

मल। [गृहीत्वा वाचयति]। "स्वस्ति, यथास्थाने कुतोऽपि, कोऽपि, कमपि, पुरुषविशेषम् अवगमयति। अस्मद्विपक्षं

* आर्य्य ! अयं स पुरुषः।

† आर्य्य ! अहं खलु अमात्यराक्षसस्य सेवकः।

‡ आर्य्य ! कार्य्यगौरवेण त्वरायितोऽस्मि।

दृष्टेषु सत्सु इति शेषः, भृत्यानामिति भावः, तुष्यन्त्यै प्रीतिमापद्यमानायै, दोषेषु सत्सु पराङ्मुखं कुर्वत्यै दूरीकुर्वत्यै, अस्मादृशजनन्यै पोषणकर्त्तृत्वधर्मसामान्यादिति भावः, स्वामिभक्त्यै प्रणमामः। ["क्रियया यमभिप्रैति सोऽपि सम्प्रदानम्" (वा०) इति चतुर्थी। "तिप्पंतीए" इत्यत्र "अप्पंतीए" इति पाठे—"आनयन्त्यै" इति संस्कृतम्] ॥ ९ ॥

(ख) आगन्तुकः ?—स्थानान्तरादागतः ? इत्यर्थः। परिग्रहः ?—आश्रितः ?।

(ग) परिपालयन्—रक्षन्; मुद्रापरित्राणं राक्षसमुद्रया सह संवादार्थमिति भावः।

निराकृत्य (क) दर्शिता काऽपि सत्यवादिता सत्यवता। साम्प्रतम् एषामपि प्रथममुपन्यस्तसन्धीनाम् अस्मत्सुहृदां (ख) पूर्वप्रतिज्ञातसन्धिपरिपणवस्तुप्रतिपादनप्रोत्साहनेन (ग) सत्य-सन्धः प्रीतिम् उत्पादयितुम् अर्हति। एते हि एवमुपगृहीताः (घ) सन्तः स्वाश्रयविनाशिनेव उपकारिणम् आराधयिष्यन्ति। अविस्मृतमपि एतत् सत्यवतः स्मारयामः, (ङ) एतेषां मध्ये केचित् अरेः कोषदन्तिभ्याम् अर्थिनः, केचित् विषयेण इति। अस्मान् प्रति अलङ्कारत्रयञ्च यत् सत्यवता-ऽनुप्रेषितं, तदुपगतम्। अस्माभिरपि लेखस्य अशून्यार्थं किञ्चित् अनुप्रेषितं, (च) तदुपगमनीयं, वाचिकञ्च आप्ततमात् सिद्धार्थकात् श्रोतव्यम्" इति। (छ) सखे भागुरायण! कीदृशो लेखार्थः? (ज)

भागु। भद्र सिद्धार्थक! कस्य अयं लेखः?

---

(क) अस्मादिति।—अस्मद्रिपवं—चाणक्यं, तस्य निराकरणं पूर्वमेव त्वया प्रतिज्ञातमासीत् इति तात्पर्य्यम्।

(ख) अस्मत्सुहृदां—कौलूतादीनाम्।

(ग) पूर्वेति।—पूर्वं—प्राक्, प्रतिज्ञातस्य—प्रतिश्रुतस्य, सन्धेः परिपणः,—प्रतिदानभूतं, यत् वस्तु तस्य प्रतिपादनं—प्रदानं, तेन प्रोत्साहनं—निश्चयप्राप्ति-सूचकाश्वासनं तेन।

(घ) उपगृहीताः,—प्रीत्युत्पादनेन वशीकृता इत्यर्थः, अनुगृहीताः वा।

(ङ) अविस्मृतमिति।—सत्यवत्त्वात् त्वं न विस्मरसि, तथाऽपि स्मारयाम इत्यर्थः, [वयमित्यूह्ये पदे "अस्मदो द्वयोश्च" (१।२।५९ पा०) इति बहुवचनम्]।

(च) लेखस्येत्यादि।—"ममैवायं लेखः, न रिपुपक्षस्य कस्यचित्" इति विश्वासोत्पादनार्थं किञ्चित् प्रेषितमिति भावः।

(छ) एवमेव लेखः चाणक्येन शकटदासेन लेखयित्वा तदङ्गुरीयकमुद्रया-ऽङ्कयित्वा च सिद्धार्थकाय "एवमेवम्" इति कर्णे उपदिश्य पूर्वमर्पित इति मन्तव्यम्।

(ज) भागुरायण इति।—कं प्रति केन लिखितमिति प्रष्टव्यमिति भावः।

सिद्धा। अज्ज ! ण आणामि। *

भागु। हे धूर्त्त ! लेखो नीयते, न च ज्ञायते कस्यायम् इति। सर्वं तावत् तिष्ठतु, वाचिकं त्वत्तः केन श्रोतव्यम् ? (झ)

सिद्धा। [भयं नाटयन्]। तुम्हेहिं (ञ)। †

भागु। किमस्माभिः ?

सिद्धा। तुम्हेहिं गहीदो, ण आणामि का कधेति। ‡ (ट)

भागु। [सक्रोधम्]। एष ज्ञास्यसि। भद्र भासुरक ! बहिर्नीत्वा ताड्यतां तावत्, यावत् सर्वम् अनेन कथितं भवेत्।

भासु। जं अज्जो आणवेदि। §

[इति सिद्धार्थकेन सह निष्क्रान्तः]।

[पुनः प्रविश्य]। अज्ज ! इअं तस्स ताडीअमाणस्स कक्खादो णाममुद्दालंकिदा आहरणपेड़िआ णिवड़िदा। ¶

भागु। [विलोक्य]। कुमार ! इयमपि राक्षसमुद्राङ्कितैव।

मल। अयं लेखस्य अशून्यार्थो भविष्यति। इमाम् अपि मुद्रां परिपालयन् मुद्राम् दर्शय।

भागु। [तथा कृत्वा दर्शयति]।

---

* आर्य्य ! न जानामि।

† युष्माभिः।

‡ युष्माभिर्गृहीतः, न जानामि का कथेति।

§ यत् आर्य्य आज्ञापयति।

¶ आर्य्य ! इयं तस्य ताड्यमानस्य कक्षतः नाममुद्राङ्किता आभरणपेटिका निपतिता।

---

(झ) ज्ञायते, त्वयेति शेषः। कस्य—केन कमुद्दिश्य प्रेरितोऽयम् इति यावत्।

(ञ) "वाचिकं त्वत्तः केन श्रोतव्यम् ?" इति पृष्टे प्रस्तुतत्वाच्चन्द्रगुप्तेन इत्यस्य प्रक्रान्तेऽपि युष्मच्छ्रवणगोचरीकर्तुमिवायमारम्भ इत्यभिसन्धिः। तुम्हेहिं इत्यत्र श्रोतव्यमिति वाक्यशेषो गूढः।

(ट) बहुमानं ताडनव्याजेन ज्ञापयति—युष्माभिरिति।

मल। [विलोक्य]। अये! तदिदम् आभरणं, यन्मया स्वशरीरात् अवतार्य्य राक्षसाय प्रेषितम्। व्यक्तं चन्द्रगुप्तस्य अयं लेखः। (ठ)

भागु। कुमार! एष निर्णीयते संशयः। (ड) भद्र! पुनरपि ताड्यताम्।

पुरु। जं अज्जो आणवेदि। [इति निष्क्रम्य पुनः प्रविश्य च]। अज्ज! एसो क्खु ताडीअमाणो विसवेदि "कुमालस्स सअं ज्जेव णिवेदेमि" त्ति। *

मल। प्रवेशय।

पुरु। जं कुमालो आणवेदि। †

[इति निष्क्रम्य सिद्धार्थकेन सह प्रविशति]।

सिद्धा। [पादयोर्निपत्य]। अभएण मे कुमालो प्पसादं करेदु। ‡

मल। भद्र! भद्र! अभयमेव परायत्तजनस्य, तन्निवेद्यतां यथाऽवस्थितम्। (ढ)

---

* यत् आर्य्य आज्ञापयति। आर्य्य! एष खलु ताड्यमानो विज्ञापयति, "कुमारस्य स्वयमेव निवेदयामि" इति।

† यत् कुमार आज्ञापयति।

‡ अभयेन मे कुमारः प्रसादं करोतु।

---

(ठ) व्यक्तमित्यादि।—राजाऽऽभरणप्रेषणाच्चन्द्रगुप्तं प्रति राक्षसेन प्रेषितः इत्यर्थः।

(ड) संशय इति।—संशयविषय इत्यर्थः, [संशय्यते असौ इति संशयः; "एरच्" (३।३।५६ पा०) इति संपूर्वकात् शीधातोः कर्मणि अच्]।

(ढ) "भद्र! भद्र!" इति—[सम्भ्रमे द्विरुक्तिः]। यथाऽवस्थितं—यथाजातं; प्रकृतम् अनपह्नुत्य इत्यर्थः।

विज। णिसामेदु कुमालो, अहं क्खु अमच्चलक्खसेण इमं लेहं देइअ चंदउत्तसआसं प्पेसिदोम्हि। *

मल। भद्र! वाचिकमिदानीं श्रोतुमिच्छामि।

विज। कुमाल! संदिट्ठोम्हि अमच्चलक्खसेण, जहा—"एदे मम प्पिअवअस्सा पंच राआणो तुए सह प्पढमसमुप्पस्स-संधाणा; जहा—कुलूदाहिवो चित्तवम्मा, मलअजण-वदाहिवो सिंहणादो, कस्मीरदेसणाहो पुक्खरक्खो, सिंधुराओ सिंधुसेणो, पारसीआहिवदी मेहक्खो त्ति। एत्थ ज्जेव पढम-भणिदा तिण्णि राआणो मलअकेदुणो विसअं अहिलसंति इदरे दुवे कोसं हत्थिवलं अ त्ति। ता जहा चाणक्कं णिरा-करिअ महाराएण मम प्पीदी उप्पादिआ, तहा एदाणं पि प्पढमभणिदो अत्थो संपादइदव्वो" त्ति, एत्तिओ वाआसंदेसो त्ति। †

मल। [स्वगतम्]। कथम्!! चित्रवर्मादयोऽपि माम् अभि-द्रुह्यन्ति!! अत एव एतेषां राक्षसे निरतिशया प्रीतिः। [प्रकाशम्]। विजये! अमात्यराक्षसं द्रष्टुमिच्छामि।

प्रती। जं कुमालो आणावेदि। ‡ [इति निष्क्रान्ता]।

---

* निशामयतु कुमारः, अहं खलु अमात्यराक्षसेन इमं लेखं दत्त्वा चन्द्रगुप्त-सकाशं प्रेषितोऽस्मि।

† कुमार! सन्दिष्टोऽस्मि अमात्यराक्षसेन, यथा—"एते मम प्रियवयस्याः पञ्च राजानस्त्वया सह प्रथमसमुत्पन्नसन्धानाः; यथा—कुलूताधिपश्चित्रवर्मा, मलय-जनपदाधिपः सिंहनादः, काश्मीरदेशाधिपः पुष्कराक्षः, सिन्धुराजः सिन्धुसेनः, पारसीकाधिपतिर्मेघाक्ष इति। अत्रैव प्रथमभणितास्त्रयो राजानः मलयकेतोर्विषय-मभिलषन्ति, इतरौ द्वौ कोषं हस्तिबलञ्चेति। तद्यथा चाणक्यं निराकृत्य महाराजेन मम प्रीतिरुत्पादिता, तथा एतेषामपि प्रथमभणितोऽर्थः सम्पादयितव्यः" इति, एतावान् वाक्सन्देश इति।

‡ यत् कुमार आज्ञापयति।

[ ततः प्रविशति आसनस्थः स्वभवनगतः पुरुषेण
अनुगम्यमानः सचिन्तो राक्षसः ]।

राक्षसः। [स्वगतम्]। सम्पूर्णम् अस्मद्बलं चन्द्रगुप्तबलैः इति यत्, सत्यं न मे मनसः शुद्धिरस्ति। (ग) कुतः ?—

साध्ये निश्चितमन्वयेन घटितं बिभ्रत् सपक्षे स्थितिं,
व्यावृत्तञ्च विपक्षतो भवति यत् तत् साधनं सिद्धये।
यत् साध्यं स्वयमेव तुल्यमुभयोः पक्षे विरुद्धञ्च यत्
तस्याङ्गीकरणेन वादिन इव स्यात् स्वामिनो निग्रहः॥ १०॥

---

(ग) न मे इत्यादि।—मनो मे सन्दिग्धमित्यर्थः।

राजनीतिविशारदः राक्षसः सदा स्वपक्षानुरक्तैः अपरक्तशत्रुसैन्यैर्बलवानपि तेषु सहसा विश्वासमलभमानः समनुरक्तेष्वपि तेषु अविश्वासस्य हेतुं प्रदर्शयन्नाह, साध्ये इति।—यत् साधनं सैन्यादि, पक्षे—सिद्धिहेतुर्धूमादिलिङ्गञ्च, साध्ये निष्पाद्ये वस्तुनि, पक्षे—सिसाधयिषिते वह्न्यादौ, तत्साधनायेत्यर्थः, ["निमित्तात् कर्मयोगे" (वा०) इति सप्तमी] निश्चितं निश्चितसामर्थ्यं, पक्षे—निश्चितव्याप्तिकम्, अन्वयेन आनुगत्येन, पक्षे—तत्सत्त्वनियतसत्ताकत्वरूपान्वयव्याप्त्या, घटितं युक्तं, सपक्षे सवर्गे, पक्षे—सन्दिग्धसाध्यके पर्वतादौ, स्थितिम् आनुकूल्यं, पक्षे—सत्त्वं, बिभ्रत्, विपक्षतः विरुद्धपक्षात् शत्रुवर्गात्, पक्षे—साध्याभाववतो जलादेः, व्यावृत्तं निवृत्तं, पक्षे—जलादाववृत्तीत्यर्थः, भवति तत् साधनं सिद्धये कार्यसाधनाय, पक्षे—साध्यानुमितिरूपसिद्धये भवति। यत् पुनः साधनं, स्वयमेव साध्यं भयादिप्रदर्शनेन वशीकार्यं, न तु स्वतः आयत्तमित्यर्थः, पक्षे—स्वयमसिद्धत्वात् साधनान्तरेण साध्यमनुमेयम्, उभयोः शत्रुपक्षे आत्मपक्षे च इति द्वयोः, तुल्यम् उभयपक्षानुकूलम्, उभयपक्षीयवेतनग्राहित्वात् समभावमित्यर्थः, पक्षे—सपक्षे पर्वतादौ विपक्षे जलादौ च, तुल्यम् उभयत्र स्थितत्वात् साधारणम्; पक्षे—आत्मवर्गे, अन्यत्र—सन्दिग्धसाध्यकपर्वतादौ, विरुद्धम् अननुकूलं, पक्षे—साध्यवत्त्वावच्छेदेन अनवस्थानात् विरोधि, तस्य तथाविधस्य सैन्यादेः, पक्षे—साधनस्य, अङ्गीकरणेन स्वीकारेण, अन्यत्र—प्रयोगेणेत्यर्थः, वादिनः तत्त्वनिर्णयार्थकथाकृद्वादवत इव, स्वामिनः प्रभोः, निग्रहः तिरस्करणं, पराजयश्च, स्यात् भवेत्। पर्वते वह्निसाधनाय निश्चितसामर्थ्यं गृहीतान्वयव्याप्तिकञ्च धूमादिरूपं लिङ्गं सपक्षपर्वतादौ स्थितं, न तु विरुद्धं विपक्षात्

अथवा, तैः तैः विज्ञातापरागहेतुभिः प्राक्परिगृहीतोपजापैः आपूर्णमिति (त) न विकल्पयितुम् अर्हामि। [ प्रकाशम् ]।

---

र्व्यादिनो व्यावृत्तम, अत एव असाधारणम एतादृश लिङ्ग वह्न्यादिसाधने वादिना प्रयुक्तं विजयी भवति। यत्तु साधनं स्वयमेव साध्यं, न तु लिङ्गं, ( तेन असिद्धिदोषः ) उभयोः स-परपक्षयोः पर्वत-जलयोः तुल्य, यथा द्रव्यत्वादि ; पक्षे पर्वतादौ, विरुद्धं साध्येन सह असमानाधिकरणं, तथा च तादृशहेतोः असिद्धिसाधारण्यविरोधरूपदोषदुष्टत्वं, तत्परिग्रहे वादिनो यथा निग्रहः पराजयः, एवं तथाभूतसैन्यादिस्वीकारे स्वामिनः पराजय इत्यर्थः।

सुकुमारमतीनां सुखबोधनाय द्वितीयार्ऽस्य व्याख्या स्पष्टीक्रियते—यत् साधनं स्वयमेव साध्यं साध्याभिन्नं, यथा—ज्ञानं प्रमाण तद्वति तत्प्रकारकत्वात ; अत्र साधनं साध्येन प्रामाण्यन अभिन्नं साधनीयत्वेन समम। यच्च साधनमुभयोः सपक्ष-विपक्षयोः वृत्तिमत्त्वेन व्यावृत्तत्वेन वा तुल्यम। तत्र आद्ये उदाहरणं—शब्दपक्षकानित्यत्वसाधकप्रमेयत्वम ; तत्र प्रमेयत्वं सपक्षे ( निश्चितसाध्यवत्पक्षे ) घटादौ, विपक्षे ( निश्चितसाध्याभाववत्पक्षे) आकाशादौ च वृत्तिमत्त्वन तुल्यम्। द्वितीये—शब्दपक्षकानित्यत्वसाधकशब्दत्वम् ; तत्र सपक्षे घटादौ विपक्षे गगनादौ च व्यावृत्तत्वेन तुल्यम। यच्च साधनं पक्षे विरुद्धं साध्यासमानाधिकरणम। यथा—शब्दपक्षकनित्यत्वसाधककृतकत्वम् ; अत्र कृतकत्वं हेतुः पक्षे शब्दे विरुद्धः, साध्येन नित्यत्वेन असमानाधिकरणः, नित्यत्वविरुद्धस्य अनित्यत्वस्य साधक इति भावः। एवम उक्तप्रकारं त्रिविधं यत् साधनं हेत्वाभासः तस्य अङ्गीकरणेन वादिनो निग्रहः पराभवः स्यात्। एवं प्रकृतेऽपि मलयकेतुबलं भद्रभटादिभिराक्रान्तत्वादुभयत्र तुल्यवदाभासमानं वस्तुतः पक्षे मलयकेतौ भद्रभटाद्यंशेन विरुद्धम्, अत एव स्वयमेव साध्यकोटिप्रविष्टमस्मादृष्टं साधयेत् न वेति सन्दिग्धमिति यावत्। एतादृशबलाभासाङ्गीकरणेन स्वामिनो राक्षसस्य मलयकेतोश्च निग्रहोऽवश्यम्भावीति दार्ष्टान्तिकेऽभ्यं योजनीयम्। [ अत्र साध्यसाधनसपक्षाद्यव्यादिरूपाणाम उपमानोपमेयगतसामान्यधर्माणाम् औपम्यवाचकेवशब्दस्य चाद्विशानिरूपोपमानोपमेययोश्च वाच्यतया पूर्णोपमाऽलङ्कारः, स च विशेषणानां श्लिष्टतया श्लेषेण अनुप्राणितः ]। शार्दूलविक्रीडितं वृत्तम्॥ १०॥

( त ) विज्ञातेति।—विज्ञाताः,—इङ्गितादिभिरनुमिताः, ये अपरागस्य—चन्द्रगुप्तानुरागस्य, हेतवः तैर्हेतुभिः। प्रागिति।—प्राक्—पूर्वं, परिगृहीतः,—ज्ञातः, उपजापः,—भेदो येषां तादृशैः, प्रधानपुरुषैः भद्रभटादिभिरिति शेषः ; अतो न संशयितव्यमिति भावः।

प्रियंवदक ! उच्यन्ताम् अस्मद्वचनात् कुमारानुयायिनो राजानः, "सम्प्रति दिने दिने प्रत्यासीदति ( थ ) कुसुमपुरम् ; अतः परिकल्पितविभागैः ( द ) भवद्भिः प्रयाणे ( ध ) प्रस्थातव्यम् । कथमिति ?—

प्रस्थातव्यं पुरस्तात् खसमगधगणैर्मामनु व्यूढसैन्यै-
र्गान्धारैर्मध्ययाने सयवनपतिभिः संविधेयः प्रयत्नः ।
पश्चात् गच्छन्तु वीराः शकनरपतयः संवृताश्चेदिहूणैः,
कौलूताद्यश्च शिष्टः पथि परिवृणुयाद्राजलोकः कुमारम्" ॥११॥

प्रियं । जं अमच्चो आणवेदि । * [ इति निष्क्रान्तः ] ।

प्रतिहारी । [ प्रविश्य ] । जेदु जेदु अमच्चो । अमच्च ! इच्छदि तुमं कुमारो पेक्खिदुं । †

* यत् अमात्य आज्ञापयति ।

† जयति जयति अमात्यः । अमात्य । इच्छति त्वां कुमारः प्रेक्षितुम् ।

(थ) प्रत्यासीदति—समीपवर्त्ति भवति ।

(द) परिकल्पितविभागैः—कृतसैन्यविभागैः ।

(ध) प्रयाणे—युद्धयात्रायाम् ।

पूर्वमुक्तायाम् एव युद्धयात्रायां सैन्यसन्निवेशप्रकारमाह, प्रस्थातव्यमिति ।—माम् अनु मम पश्चात्, खस-मगधगणैः खस मगधराजभिः, व्यूढं विभक्तं, सज्जीकृतं वा, सैन्यं यैः तादृशैः सद्भिः, पुरस्तात् आयोधनसन्नद्धसैन्यसङ्घस्य अग्रे इत्यर्थात्, प्रस्थातव्यं गन्तव्यमित्याशयः । सयवनपतिभिः यवनपतिसहितैः, गान्धारैः मध्ययाने सैन्यमध्यभागगमने, प्रयत्नः उद्योगः, संविधेयः कर्त्तव्यः ; पश्चात् तत्पश्चात्, चेदिहूणैः संवृताः सम्मिलिताः, सहिताः इत्यर्थः, वीराः शकनरपतयः गच्छन्तु । शिष्टः अवशिष्टः, कौलूताद्यः कौलूतप्रभृतिः, [ कुलूतानां जनपदानां राजा कौलूतः चित्रवर्मा, स आद्यो यस्य सः, आद्यपदेन सिंहनाद पुष्कराक्ष-सिन्धुसेन-मेघाक्षाणां ग्रहणं ] राजलोकः नरेन्द्रवर्गः, पथि कुमारं मलयकेतुं, परिवृणुयात् परिवार्य्य गच्छेत ; चित्रवर्मादीनाञ्च राक्षसमित्रत्वेन तत्र सन्देहाभावात् कुमारानुगमनमुक्तम्, अन्येषां प्रायश्चन्द्रगुप्तात् विरज्य एतत्पक्षाश्रयणात् तत्र सन्देहात् तेषामन्यत्र गमनमनुशिष्टमिति द्रष्टव्यम् । स्रग्धरा वृत्तम् ॥ ११ ॥

राक्ष। भद्रे! मुहूर्त्तं तिष्ठ। क: कोऽत्र भो: ! ?

पुरुष:। [प्रविश्य]। आणवेदु अमच्चो। *

राक्ष। भद्र! उच्यतां शकटदास:, यथा "परिधापिता वयम् आभरणं कुमारेण, तत्र युक्तम् इदानीम् अस्माभि: अनलङ्कृतै: कुमारदर्शनम् अनुभवितुम्, अतो यत् तत् अलङ्करणत्रयं क्रीतं तन्मध्यात् एकं दीयताम्" इति।

पुरु। जं अमच्चो आणवेदि। [इति निष्क्रम्य पुन: प्रविश्य च]। अमच्च! इदं तं अलंकरणं। †

राक्ष। [नाट्येन अवलोक्य आत्मानम् अलङ्कृत्य उत्थाय च]। भद्रे! राजकुलगामिनं मार्गम् आदेशय।

प्रती। एदु एदु अमच्चो। ‡

राक्ष। [स्वगतम्]। अधिकारपदं (न) नाम निर्दोषस्यापि पुरुषस्य महदाशङ्कास्थानम्। कुत: ?—

भयं तावत् सेव्यादभिनिविशते सेवकजनं
तत: प्रत्यासन्नात् भवति हृदयेष्वेव निहितम्।

* आज्ञापयतु अमात्य:।

† यत् अमात्य आज्ञापयति। अमात्य! इदं तदलङ्करणम्।

‡ एतु एतु अमात्य:।

---

(न) अधिकारपदं—दासत्वम्। [एतेन अस्य जन्मान्तरीयादुष्कृतसंसूचित: अबोधपूर्वको विपत्पातो व्यज्यते ; तेन च "तच्चेतसा स्मरति नूनमबोधपूर्वं भावस्थिराणि जननान्तरसौहृदानि" इति शाकुन्तलोक्ति: सङ्गच्छते ]।

उक्तमर्थं प्रतिपादयितुं दासत्वस्य विविधभीतिजनकत्वं प्रदर्शयन्नाह, भयमिति।— सेव्यात् जनात् स्वामिन इत्यर्थ:, भयं [ कर्तृ ] तावत् प्रथममित्यर्थ:, सेवकजनम् अभिनिविशते सेवकजनेषु लब्धास्पदं तिष्ठतीत्यर्थ:, [ अभिनिविशते इत्यत्र "नेर्विश:" (१। ३। १७ पा०) इत्यात्मनेपदम् ; तथा सेवकजनम् इत्यत्र "अभिनिविशश्च" (१। ४। ४७ पा०) इत्यधिकरणस्य पाणिनी कर्मता ] तत: प्रत्यासन्नात् स्वामिन: पार्श्वं

अतोऽध्यारूढानां पदमसुजनद्वेषजननं
मतिः सोच्छ्रायाणां पतनमनुकूलं कलयति॥ १२॥

प्रती। [परिक्रम्य]। अमच्च! अअं कुमालो चिट्ठदि, ता उवसप्पदु णं अमच्चो। *

राक्ष। [नाट्येन अवलोक्य]। अये! अयं कुमारः तिष्ठति; य एषः,—

पादाग्रे दृशमवधाय निश्चलाक्षीं
शून्यत्वादपरिगृहीततद्विशेषाम्।
वक्त्रेन्दुं वहति करेण दुर्वहाणां
कार्याणां कृतमिव गौरवेण नम्रम्॥ १३॥

* अमात्य! अयं कुमारस्तिष्ठति, तदुपसर्पत्वेनममात्यः।

चरात्, भयं हृदयेषु अन्तःकरणेषु एव, निहितं बद्धमूलं, भवति, अध्यारूढानाम् उन्नतपदस्थानां, भृत्यानामिति शेषः, पदं धाम, असुजनद्वेषजननम् असुजनस्य दुर्जनस्य, द्वेषजननं हिंसावर्द्धनं, भवति; अतः अस्मात् कारणात, सोच्छ्रायाणाम् अत्युन्नतानां, महामहिमशालिनां भृत्यानां, मतिः पतनं स्वात्मनः अधोगमनम्, अनुकूलम् अवश्यम्भावित्वेन सुलभं, कलयति चिन्तयतीत्यर्थः। "अत्यारूढिर्भवति महतामप्यपभ्रंशहेतुः" इति लोकोक्तिमनुसृत्य सदा पतनभयमेवास्माकमिति भावः। [अत्र प्रथमार्द्धोक्तवाक्यद्वयार्पितार्थस्य द्वितीयार्द्धोक्तसमुन्नतपदारूढानाम् अधिकारिणां पतनं नियतसम्भवम् इत्यर्थकलने हेतुत्वेन निरूपितः इति वाक्यार्थगतः काव्यलिङ्गालङ्कारः; एवं स्वतःसम्भाविना समुन्नतपतनविमर्शनिर्णयवस्तुना व्यज्यमानो "राजसेवा मनुष्याणाम् असिधारावलेहनम्। पञ्चाननपरिष्वङ्गो व्यालीवदनचुम्बनम्॥" इत्याद्यनुरूपार्थकवस्तुरूपव्यङ्ग्यः इति वस्तुना वस्तुध्वनिः इत्यालङ्कारिकाः]। शिखरिणी वृत्तम्॥ १२॥

चिन्ताकुलस्य मलयकेतोः तदानीन्तनीम् अवस्थां वर्णयन्नाह, पादाग्रे इति।— शून्यत्वात् मनोवृत्तिराहित्यात् निरवलम्बनत्वात् वा, अपरिगृहीततद्विशेषां न परिगृहीतः ज्ञातः, तद्विशेषः तस्य पादाग्रस्य, विशेषो रूपादिर्यया तादृशीम्, अत एव निश्चलाक्षीं स्थिरां, विषयान्तरेऽसञ्चमानामित्यर्थः, दृशं पादाग्रे अवधाय ऐकाग्र्येण

[उपसृत्य]। विजयतां विजयतां कुमारः।

मल। आर्य्य! अभिवादये। इदमासनम् आस्यताम्।

राच। [उपविशति]।

मल। अमात्य! चिरम् अदर्शनेन आर्य्यस्य वयम् उद्विग्नाः। (प)

राच। कुमार! प्रयाणे प्रतिविधानम् अनुतिष्ठता मया कुमारात् अयमुपालम्भोऽधिगतः। (फ)

मल। अमात्य! प्रयाणे कथं प्रतिविहितमिति श्रोतुम् इच्छामि।

राच। कुमार! एवमादिष्टाः कुमारस्य अनुयायिनो राजानः। [प्रस्थातव्यमित्यादिश्लोकं पुनः पठति]।

मल। [स्वगतम्]। विज्ञायते, कथम्!! ये एव मद्विनाशेन चन्द्रगुप्तम् आराधयितुम् उद्यताः, ते एव मां परिवृण्वन्ति। (ब) [प्रकाशम्]। आर्य्य! अस्ति कश्चित् यः कुसुमपुरं प्रतिगच्छति, तत आगच्छति वा?

---

स्थापयित्वा, दुर्वहाणां दुःखेन वाढुं शक्यानां, कार्य्याणां चिन्तनीयवस्तूनामित्यर्थः, गौरवेण भारेण, नम्रं नतं कृतमिव, वक्त्रेन्दुं मुखचन्द्रं, करेण हस्तेन, वहति धारयति, तथा च, करतले मुखं निवेश्य पादाग्र ऐकाग्र्येण दृष्टिं निधाय किमपि दुर्वहं कार्य्यं चिन्तयति इत्यर्थः। [अत्र प्रगाढदुश्चिन्ता-विनतानने कार्य्यगौरवभाराक्रान्तता समुत्प्रेक्ष्यते इत्युत्प्रेक्षाऽलङ्कारः, स च वक्त्रेन्दुमित्युपमया संसृष्टः]। प्रहर्षिणी वृत्तम्॥ १२॥

(प) अमात्येति।—चिरमदर्शनेन—विलम्बितदर्शनदानेन। उद्विग्नाः,—कार्य्यत्वरया व्यग्राः इति वाक्यार्थः; [त्वद्दर्शनमिदानीम् अस्माकम् अरुन्तुदम् इति गूढम्]।

(फ) कुमार! प्रयाणे प्रतिविधानमनुतिष्ठता इति।—इदं मलयकेतोः प्रश्नाभिप्रायम् अजानानस्य उत्तरम्। प्रतिविधानम्—उद्योगम्। उपालम्भः,—तिरस्कारः।

(ब) परिवृण्वन्ति—परिवेष्टयन्ति, कौलूताद्याः पञ्च राजान इति भावः।

राक्ष। कुमार ! अवसितम् (भ) इदानीं गतागतप्रयोजनम्। ननु पञ्चषैः (म) अहोभिः वयमेव तत्र गन्तारः (य)।

मल। [स्वगतम्]। विज्ञायते। (र) [प्रकाशम्]। यदि एवं, तत् किमयम् आर्य्येण सलेखः पुरुषः कुसुमपुरं प्रस्थापितः ?

राक्ष। [विलोक्य]। अये ! सिद्धार्थकः। भद्र ! किमिदम् ?

सिद्धा। [सबाष्पं लज्जां नाटयन्]। पसीददु पसीददु अमच्चो। अमच्च ! अतिताडीअन्तेण मए ण पारिदं अमच्चस्स रहस्सं धारिदुं। *

राक्ष। भद्र ! कीदृशं तत् रहस्यमिति न खलु अवगच्छामि।

सिद्धा। णणु विण्णवेमि, ताडीअंतेण मए—"† (ल) [इत्यर्द्धोक्ते सभयम् अधोमुखः तिष्ठति]।

मल। भागुरायण ! स्वामिनः पुरस्तात् भीतो लज्जितश्च नैष कथयिष्यति ; अतः स्वयमेव आर्य्याय कथय।

---

* प्रसीदतु प्रसीदतु अमात्यः। अमात्य ! अतिताड्यमानेन मया न पारितममात्यस्य रहस्यं धारयितुम्।

† ननु विज्ञापयामि, ताड्यमानेन मया—"।

---

(भ) अवसितं—समाप्तम्।

(म) पञ्चषैरिति।—[पञ्च षट् वा परिमाणं येषां तैः "बहुव्रीहौ सङ्ख्येये डजबहुगणात्" (५।४।७३ पा०) इति डच्] पञ्चषड्वासरानन्तरमेव गमिष्याम इत्यर्थः।

(य) गन्तारः,—["अनद्यतने लुट्" (३।३।१५ पा०) इति भविष्यदनद्यतनेऽर्थे लुट्]।

(र) विज्ञायते इति।—वयमेवात्र चन्द्रगुप्तं नियन्तुं गन्तारः इति राक्षसस्य कुत्सिताशयः, स च मलयकेतुना अन्यथा गृहीतः, यथा—"चन्द्रगुप्ताश्रिव्यार्थं भवन्तः गन्तारः" इति विज्ञायते इति।

(ल) अस्य अर्द्धोक्तस्य पूरणवाक्यम् "एवम् अतिताड्यमानेन" इति वक्ष्यमाणं द्रष्टव्यम्।

भागु। यत् आज्ञापयति कुमारः। अमात्य! एष कथयति, यथा—"अहम् अमात्यराक्षसेन लेखं दत्त्वा वाचिकञ्च सन्दिश्य चन्द्रगुप्तसकाशं प्रेषितः" इति।

राक्ष। भद्र सिद्धार्थक! अपि सत्यम्?

सिद्धा। [लज्जां नाटयन्]। "............एव्वं अतिताड़ीअंतेण मए णिवेदिदं। *

राक्ष। कुमार! अनृतमेतत्। ताड्यमानः किं न ब्रूयात्?

मल। भागुरायण! दर्शय लेखं, वाचिकञ्च अयमस्मै स्वभृत्यः कथयिष्यति।

भागु। [लेखम् अवलोकयन्]। "स्वस्ति यथास्थाने कुतोऽपि कोऽपि कमपि पुरुषविशेषम् अवगमयति" इति [(१९२।१९३ पृष्ठयोः) वाचयति]। (व)

राक्ष। कुमार! कुमार! शत्रोः प्रयोग एषः।

मल। लेखस्य अशून्यार्थम् (श) आर्य्येण इदमाभरणम् अनुप्रेषितमिति, तत् कथं शत्रोः प्रयोग एष स्यात्? [इति आभरणं दर्शयति]।

राक्ष। [आभरणं निर्वर्ण्य]। कुमार! न एतन्मया अनुप्रेषितम्, एतद्धि कुमारेण मह्यं दत्तं, मया च परितोषस्थाने सिद्धार्थकाय दत्तम्।

भागु। भो अमात्य! ईदृशस्य (ष) आभरणविशेषस्य, विशेषतः कुमारेण स्वगात्रात् अवतार्य्य दत्तस्य इयं परित्यागभूमिः? (स)

---

* "......एवम् अतिताड्यमानेन मया निवेदितम्।

---

(व) अत्र "अमात्य! अयं लेखः। [इति दर्शयति]" इत्यधिकः पाठो दृश्यते।

(श) अशून्यार्थं—पूरणार्थे, सम्पूर्णविश्वासार्थमित्यर्थः।

(ष) "कुमार" इत्यादिना एवं वदता राक्षसेन स्वनाङ्कितेऽपि सोल्लुण्ठनं उद्घाटयति भागुरायणः, ईदृशस्य इत्यादिना।

(स) परित्यागभूमिः,—दानपात्रम्।

मल । वाचिकमपि आप्ततमात् (इ) सिद्धार्थकात् श्रोतव्यम् इति लिखितम् आर्य्येण ।

राक्ष । कुतो वाचिकम् ? कस्य वा लेखः ? अयमेव (क) अस्मदीयो न भवति । (ख)

मल । इयं तर्हि कस्य मुद्रा ?

राक्ष । कुमार ! कपटमुद्रामपि उत्पादयितुं (ग) शक्नुवन्ति धूर्त्ताः ।

भागु । कुमार ! सम्यगमात्यो विज्ञापयति । भद्र ! सिद्धार्थक ! केन अयं लिखितो लेखः ?

सिद्धा । [ राक्षसमुखम् अवलोक्य तूष्णीम् अधोमुखः तिष्ठति ] ।

भागु । अलं पुनः आत्मानं ताडयित्वा, (घ) कथय ।

सिद्धा । अज्ज ! सअडदासेण । *

राक्ष । कुमार ! यदि शकटदासेन लिखितः, तर्हि मया एव लिखितः । (ङ)

मल । विजये ! शकटदासं द्रष्टुम् इच्छामि ।

* आर्य्य ! शकटदासेन ।

(इ) आप्ततमात्—अतिविश्वस्तात् ।

(क) अयं—लेखः सिद्धार्थको वा ।

(ख) "कुतो वाचिकम् ? कस्य वाचिकम् ? लेख एव अस्मदीयो न भवति" एवमपि पाठो दृश्यते ।

(ग) कपटमुद्रां—कृत्रिममुद्राम् । उत्पादयितुं—निर्मातुम् [ "शकधृष—" (३।४।६५ पा०) इत्यादिना शकधातूपपदे तुमुन् ] ।

(घ) ताडयित्वा—[ "तड आघाते" इति स्वार्थणिजन्तात् चौरादिकात् तड-धातोः "हेतुमति च" (३।१।२६ पा०) इति हेतौ णिचि "अलं-खल्वोः प्रतिषेधयोः प्राचां क्त्वा" (३।४।१८ पा०) इति अलं-योगे क्त्वा ] यदि न वदिष्यसि तदा पुनस्ताडितो भविष्यसीत्यर्थः ।

(ङ) शकटदासः सर्वथा न लेखिष्यतीति तस्मिन् विश्वासादेवमुक्तिः ।

प्रती। जं कुमालो आणवेदि। *

भागु। [स्वगतम्]। न खलु अनिश्चितार्थम् आर्य्यचाणक्यप्रणिधयोऽभिधास्यन्ति। आगत्य शकटदासो वा "सोऽयं लेखः" इति प्रत्यभिज्ञाय पूर्ववृत्तं (ख) प्रकाशयेत्; एवं सति सन्दिहानो मलयकेतुः अस्मिन् प्रयोगे श्लथादरो भवेत्। [प्रकाशम्]। कुमार! न कदाचिदपि शकटदासोऽमात्यराक्षसस्य अग्रतो "मया लिखितः" इति प्रतिपत्स्यते; (क) अतोऽन्यलिखितम् अस्य आनीयतां, यतो वर्णसंवाद एव एतत् सर्वं विभावयिष्यति।

मल। विजये! एवं क्रियताम्।

भागु। कुमार! मुद्रामपि आनयतु इयम् (ज)।

मल। उभयमपि आनीयताम्।

प्रती। जं कुमालो आणावेदि [इति निष्क्रम्य पुनः प्रविश्य]। कुमाल! इदं क्खु तं सअडदासेण सहत्थलिहिदं पत्तअं मुद्दा अ। †

* यत् कुमारः आज्ञापयति।

† यत् कुमारः आज्ञापयति। कुमार! इदं खलु तत् शकटदासेन स्वहस्तलिखितं पत्रं, मुद्रा च।

(ख) पूर्ववृत्त—सिद्धार्थकानुरोधेन मया लिखितमिदं पत्रमिति प्रथमाङ्के दर्शितवृत्तान्तम्।

(क) आर्य्यचाणक्येन केनचिद्व्याजेन सिद्धार्थकद्वारा शकटदासं वञ्चयित्वा तद्धस्तेन लिखितः अयं लेखः स्यात्, अतः परं शकटदास इदानीन्तनेन कुसुमपुरे प्रवासेन सिद्धार्थकेन मद्धस्ताल्लिखितोऽयं लेख इति स्पष्टं वदेत्, ततः सर्व्वोऽप्ययं चाणक्यकूटनीतिप्रयोगः प्रकाशितः स्यादित्याशयेन प्रत्युत्पन्नमतिर्भागुरायणः शकटदासागमनं प्रतिरुन्धन्नाह, न कदाचिदिति।—अमात्येन लिखितं स्वेन पुनर्लिखितमपि ग्लानिदोषभयान्न कथयिष्यतीत्यर्थः।

(ज) इयं—प्रतीहारी।

मल । [ उभयमपि नाट्येन अवलोक्य ] । आर्य्य ! संवदन्ति ( झ ) अक्षराणि ।

राज । [ स्वगतम् ] । संवदन्त्यक्षराणि, शकटदासस्तु मम मित्रम् इति च विसंवदन्ति (ञ) अक्षराणि, तत् किं शकटदासेन लिखितम् ?—

स्मृतं स्यात् पुत्रदाराणां विस्मृताः स्वामिभक्तयः ।
चलेष्वर्थेषु लुब्धेन न यशःस्वनपायिषु ॥ १४ ॥

अथवा, कः सन्देहः ?—

मुद्रा तस्य कराङ्गुलिप्रणयिनी सिद्धार्थकस्तत्सुहृत्
तस्यैवापरलेख्यसूचितमिदं पत्रं प्रयोगाश्रयम् ।
सुव्यक्तं शकटेन भेदपटुना सन्धाय सार्द्धं परैः
भर्त्तुः स्नेहपराङ्मुखेण कृपणं प्राणार्थिना चेष्टितम् ॥ १५ ॥

---

( झ ) संवदन्ति—तुल्यतां यान्ति, अनुरूपाणि भवन्तीत्यर्थः ।

( ञ ) विसंवदन्ति—विरुध्यन्ते, शकटदासस्तु मित्रम् इत्ययमर्थो न सङ्गच्छते इत्यर्थः ; तस्य मित्रत्वे संशयो जायते इति भावः ।

शकटदासेन मित्रेण सताऽपि यदि पत्रं लिखितं स्यात् तदा एवं स्यादिति सम्भावयति, स्मृतमिति ।—चलेषु नश्वरेषु, अर्थेषु न तु अनपायिषु अविनश्वरेषु, यशःसु लुब्धेन सता, शकटदासेन इति शेषः, पुत्रदाराणाम् [ "अधीगर्थदयेशां कर्म्मणि" ( २।३।५२ पा० ) इति कर्म्मणि षष्ठी, सम्बन्धविवक्षया वा ] स्मृतं स्मरणं कृतं, स्यात्, स्वामिभक्तयः विस्मृताः, स्युः इति शेषः । स्वामिभक्तिं यशश्च उपेक्ष्य नश्वरेष्वर्थेषु पुत्रदारादिषु च लुब्धः स्यादिति समुदितार्थः । [ अत्र अप्रस्तुतप्रशंसापोऽनुरूपः परिसङ्ख्याऽलङ्कारः ] । पथ्यावक्त्रं वृत्तम् ॥ १४ ॥

शकटदासेन लिखितं न वेति पूर्वं संशयानोऽपि सम्प्रति तत्र सन्देहाभावमेव समर्थयते, मुद्रेति ।—मुद्रा तस्य शकटदासस्य, कराङ्गुलिप्रणयिनी कार्य्यार्थं सर्वदा व्यवहारात् हस्ताङ्गुलीनां विशेषपरिचिता इत्यर्थः, तत्समीपे एव अस्याः सर्वदाऽवस्थानात् नान्यस्य तल्लाभसम्भव इति भावः, अयं सिद्धार्थकः तत्सुहृत् तस्य मित्रम्, अपरलेख्यसूचितम् अपरेण शकटदासस्यैव अन्येन लेख्येन सूचितं संवादितं, प्रयोगाश्रयं कूटप्रयोगविषयम्, अभियोगसम्बद्धं वा, इदं पत्रं तस्यैव शकटदासस्यैव एवं हेतुसाकल्यात्

मल। आर्य्य! "अलङ्कारत्रयं श्रीमता यत् अनुप्रेषितं, तत् उपगतम्" इति आर्य्येण यल्लिखितं, तन्मध्यात् एकं किमिदम्? [निर्वर्ण्य आत्मगतम्]। कथम्!! तातेन धृतपूर्वम् इदम् आभरणम्!! [प्रकाशम्]। आर्य्य! कुतोऽयमलङ्कारः?

राच। वणिग्भ्यः क्रयादधिगतः।

मल। विजये! अपि प्रत्यभिजानाति भवती भूषणमिदम्?

प्रती। [निर्वर्ण्य सबाष्पम्]। कुमार! कहं ण पच्चभिजाणिस्सं? इदं क्खु सुगिहीदणामधेएण (ट) देएण पव्वदीसरेण धारिदपुव्वं। *

मल। [सबाष्पम्]। हा तात!—

एतानि तानि तव भूषणवल्लभस्य
गात्रोचितानि कुलभूषण! भूषणानि।
यैः शोभितोऽसि मुखचन्द्रकृतावभासो
नक्षत्रवानिव शरत्समयप्रदोषः ॥ १६ ॥

* कुमार! कथं न प्रत्यभिज्ञास्यामि? इदं खलु सुगृहीतनामधेयेन देवेन पर्वतेश्वरेण धारितपूर्वम्।

प्राणार्थिना जीवनार्थिना, अत एव भर्तुः स्नेहपराङ्मुखेण स्वामिभक्तिशून्येन, भेदपटुना उपजापकुशलेन, शकटेन परैः शत्रुभिः, सार्द्धं सह, सन्धाय मिलित्वा, सुव्यक्तं निश्चितं, कृपणं क्षुद्रम्, इतरजनसुलभमिति यावत्, चेष्टितं व्यवसितम्। [अत्र पदार्थहेतुकं काव्यलिङ्गमलङ्कारः]। शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

(ट) सुगृहीतनामधेयेन—प्रातःस्मरणीयेन, ("स सुगृहीतनामा स्यात् यः प्रातरनुकीर्त्यते" इत्यमरः)।

परिचितभूषणदर्शनेन समुद्बोधितपितृस्मृतिः कुमारः खिन्नमाह, एतानीति।—हे कुलभूषण! हे वंशालङ्कार! भूषणवल्लभस्य अलङ्कारप्रियस्य, [वल्लभानि प्रियाणि भूषणानि यस्य इति विग्रहे वल्लभशब्दस्य परनिपातः] तव गात्रोचितानि देहोपयोग्यानि, एतानि तानि पूर्वदृष्टानि, भूषणानि, यैः भूषणैः, नक्षत्रवान् तारकान्वितः, शरत्समयप्रदोषः शारदीयनिशामुखमिव, मुखचन्द्रकृतावभासः मुखं चन्द्र इव

राक्ष। [ स्वगतम् ]। कथम् !! पर्वतेश्वरधृतपूर्वाणि इत्याह !! [ विचिन्त्य ]। व्यक्तम्, एतान्यपि तेन चाणक्यप्रयुक्तेन वणिग्जनेन अस्मासु विक्रीतानि।

मल। आर्य्य ! तातेन धृतपूर्वाणाम् आभरणविशेषाणां विशेषत: चन्द्रगुप्तहस्तगतानां वणिग्भ्य: क्रयात् अधिगम इति न युज्यते ; अथवा युज्यते एव एतत्—

चन्द्रगुप्तस्य विक्रेतुरधिकं लाभमिच्छत:।
कल्पिता मूल्यमेतेषां क्रूरेण भवता वयम् ॥ १७ ॥

राक्ष। [ आत्मगतम् ]। अहो ! सुश्लिष्ट: (ठ) अभूत् एष प्रयोग:। कुत: ?—

लेखोऽयं न ममेति नोत्तरमिदं मुद्रा मदीया यत:
सौहार्दं शकटेन खण्डितमिति श्रद्धेयमेतत् कथम् ?।

---

तेन कृत: अवभास: दीप्ति: यस्य तादृश:, त्वमिति शेष:, शोभितोऽसि विराजितोऽसि, प्राक् वर्त्तमानोऽभू: इत्यर्थ: ; [ "वर्त्तमानसामीप्ये वर्त्तमानवद्वा" ( ३।३।१३१ पा० ) इति भूतसामान्ये पाक्षिको वर्त्तमानप्रयोग: साधु: ]। अन्यत्र—चन्द्रेण कृत: अवभास: प्रकाशो यस्येति विग्रह:। [ अत्र मुख-चन्द्रयो: नक्षत्रालङ्कारयोश्च परस्परं सादृश्यकथनात् उपमाऽलङ्कार: ]। वसन्ततिलकं वृत्तम् ॥ १६ ॥

वणिग्जनादेतदलङ्कारजातानां क्रयाधिगमस्यायुक्ततां प्रदर्श्य पुन: पक्षान्तरेण युक्ततां प्रतिपादयन्नाह, चन्द्रगुप्तस्येति।—क्रूरेण कृतघ्नेन भवता अधिकं लाभम् इच्छत: कामयमानस्य, अधिकप्राप्त्याशया इत्यर्थ:, विक्रेतुश्चन्द्रगुप्तस्य तस्मै प्रदातुमित्यर्थ:, एतेषां परिदृश्यमानानाम् आभरणानां वयम् अहमेवेत्यर्थ:, [ अत्र "अस्मदो द्वयोश्च" ( १।२।५९ पा० ) इति एकत्वेऽपि बहुवचनम् ] मूल्यं कल्पिता: मूल्यत्वेन निरूपिता: भवाम: ; तथा च, एतदाभरणं दत्त्वा भवत् सकाशात् वयमेव चन्द्रगुप्तेन क्रीता:, अत एवास्य विक्रयकल्पितम् इति भाव:। [ अत्र चन्द्रगुप्तेन आभरणानि दत्त्वा तन्मूल्यत्वेन वयं गृहीता: इति न्यूनाधिकै: विनिमयप्रतिपादनात् परिवृत्तिरलङ्कार: ]। पथ्यावक्त्रं वृत्तम् ॥ १७ ॥

( ठ ) सुश्लिष्ट:,—सुसम्बद्ध:, सुनिपुणतया सन्निविष्ट इत्यर्थ:।

स्वयमकृतस्यापि लेखादिकस्य घटनाविशेषवशेन दृढतया स्वकृतवत् प्रतीते: स्वस्य

मौर्य्ये भूषणविक्रयं नरपतौ को नाम सम्भावयेत् ?
तस्मात् सम्प्रतिपत्तिरेव हि वरं न ग्राम्यमत्रोत्तरम् ॥ १८ ॥

मल। एतत् आर्य्यं पृच्छामि।

राच। यः आर्य्यः तं पृच्छ ; वयम् इदानीम् अनार्य्याः (ड) संवृत्ताः।

मल।—

मौर्य्योऽसौ स्वामिपुत्त्रः परिचरणपरो मित्रपुत्त्रस्तवाहं
दाता सोऽर्थस्य तुभ्यं स्वमतमनुगतस्त्वन्तु मह्यं ददासि।

---

अत्र निरुत्तरतया तूष्णीम्भाव: एव श्रेयानिति आत्मानं बोधयन्नाह, लेख इति।— अयं प्रमाणत्वेन दर्शित:, लेख: न मम इति इदम् उत्तरम्, उत्तरं न, युज्यते इति शेष:, यत: यस्मात्, मुद्रा मदीया मदीयमुद्रया मुद्रितोऽयं लेख इत्यर्थ:, शकटेन शकटदासेन, सौहार्दं मित्रत्वं, खण्डितं भग्नम्, इति एतत् कथं श्रद्धेयम् ? लोकै: इति शेष: शकटदासेन सौहार्दं परित्यज्य इदं लिखितमिति वाक्ये परिहारे उक्ते क: श्रद्दध्यात् इत्यर्थ: ; को नाम नरपतौ राजनि, मौर्य्ये चन्द्रगुप्ते, भूषणविक्रयम् अलङ्कारविक्रेतृत्वं, सम्भावयेत् ? सञ्चिन्तयेत् ? न कोऽपि विश्वसेत् इत्यर्थ: ; तस्मात् अत्र विषये, सम्प्रतिपत्ति: सम्प्रतिपद्यते सम्मन्यतेऽनयेति सम्प्रतिपत्तिर्मौनं, सम्मतिलक्षणत्वात् तस्या:, स्वीकारो वा, उत्तरं वरं श्रेष्ठं, मनाक्प्रियमित्यर्थ:, ग्राम्यम् इतरजनोचितम् अपलापरूपम्, उत्तरम् असुश्लिष्टमसङ्गतमुत्तरमिति यावत्, न, वरमित्यनुषङ्ग:। [ अत्र मौर्य्ये भूषणविक्रेतृत्वस्य असम्भवत्वे नरपतित्वस्य हेतुविधया उपन्यासात् काव्यलिङ्गमलङ्कार: ]। शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

(ड) अनार्य्या इति।—अकर्त्तव्यकरणात् प्रकृताचारपरिभ्रंशात् आर्य्यत्वनाश:, तेन अनार्य्यत्वम्। आर्य्यलक्षणं यथा—"कर्त्तव्यमाचरन् कार्य्यम् अकर्त्तव्यमनाचरन्। तिष्ठति प्रकृताचारे स वा आर्य्य इति स्मृत: ॥" इति।

तव मित्रपुत्रस्यापि मे सर्वथा त्वन्मतानुसारित्वेन त्वदीयप्रभुत्वस्यानुसत्त्वेऽपि किमुद्दिश्य मौर्य्यमाश्रयसीति पृच्छन्नाह, मौर्य्य इति।—असौ मौर्य्य: चन्द्रगुप्त:, तव स्वामिपुत्त्र: स्वामिनो नन्दस्य, पुत्त्र: असवर्णायां स्त्रियामुत्पादितस्तनय:, अहं तव परिचरणपर: सेवारत:, मित्रपुत्त्र: मित्रस्य पर्वतेश्वरस्य, पुत्त्र: ; मित्रपुत्त्रत्वेऽपि अननुकूलत्वे हेयभागतेत्याशङ्क्य परिचरणपर इति विशेषणम् ; स मौर्य्य:, तुभ्यम् अर्थस्य

दास्यं सत्कारपूर्वं ननु सचिवपदं तत्र ते स्वाम्यमत्र,
स्वार्थे कस्मिन् ममोहा पुनरधिकतरे त्वामनार्य्यं करोति ? ॥१८॥

राक्षः । कुमार ! एवम् अभियुक्तव्याहारिणा भवता एव मे निर्णयो दत्तः ; कुतः ?—[ "मौर्य्योऽसौ स्वामिपुत्रः" इति युष्मदस्मदो-र्व्यत्ययेन पठति ] । (ढ)

मल । [ लेखमलङ्करणस्थगिकाञ्च निर्दिश्य ] । इदमिदानीं किम ?(ण)

---

वेतनरूपस्य धनस्य, दाता, अनुगतः अनुगामी, मम अधीनोऽपि इत्यर्थः, त्वं तु त्वं पुनः, मह्यं स्वमतं स्वाभिप्रायानुरूपम्, अर्थं मन्त्रणं वेति शेषः ददासि सचिवपद-मधिरूढोऽपि त्वं राजेव मामनुशास्सीत्यर्थः । ननु भोः ! तत्र मौर्य्ये, ते तव, सचिवपदं मन्त्रिपदं, सत्कारपूर्वं सम्मानपूर्वकम्, अपीति शेषः, दास्यं दासत्वमात्रं, पराधीनत्वात ; अत्र मयि तु, ते स्वाम्यं स्वाधीनत्वात प्रभुत्वमिव, अतः कस्मिन् पुनः अधिकतरे इतोऽप्यधिके, स्वार्थे स्वाभिलषिते विषये, ममोहा इच्छा, त्वाम अनार्य्येण असाधुम, अनार्य्यचरितं वा, करोति ? एवं मौर्य्यसेवातोऽप्यतिशयिते मयि तव स्वातन्त्र्ये स्थिते इतोऽप्यधिकतरं कं स्वार्थमवलम्ब्य त्वमनार्य्यो जातोऽसीत्यर्थः । तथा च, अधिक-लाभाशयैव नृणामकार्य्यप्रवृत्तिर्भवेत, परम उभयपक्षयोर्मध्ये मत्पक्षाश्रयणे एव तव अधिकतराभीष्टसिद्धिः ; तत् कथं मां विहाय विरुद्धपक्षमाश्रयसीति निष्ठुर उपालम्भः । स्रग्धरा वृत्तम ॥ १८ ॥

(ढ) अभियुक्तेति ।—अभियुक्तं—दोषित्वेन शङ्कितं, व्याहरति—वदतीति तथोक्तेन, दोषी अहमिति वादिना इत्यर्थः, [ "अभियुक्तव्यवहारिणा" इति पाठे—अभियुक्तेन—दोषास्पदतया शङ्कितेन, मया सह व्यवहारिणा—शब्दप्रयोगकारिणा, अकार्य्यकरणप्रश्नकारिणेति यावत् ] भवता एव निर्णयः,—अभियोगशुद्ध्यर्थं निर्णायक-मुत्तरम् । दत्तः,—दातुमुपदिष्टः इत्यर्थः । कथं तस्य निर्णायकत्वम ? इत्याक्षेप-पूर्वकं तस्यैव वाक्यस्य निर्णायकत्वं दर्शयन् तदेव पद्यं युष्मदस्मदोर्व्यत्ययेन पठन्, तदेव अभियोगशुद्ध्यर्थं निर्णायकमुत्तरं मम इति कथयति, कुत इति । तथा हि—

मौर्य्योऽसौ स्वामिपुत्रः परिचरणपरो मित्रपुत्रो मम त्वं
दाता सोऽर्थस्य मह्यं स्वमतमनुगतोऽहं तु तुभ्यं ददामि ।
दास्यं सत्कारपूर्वं ननु सचिवपदं तत्र मे स्वाम्यमत्र
स्वार्थे कस्मिन् ममोहा पुनरधिकतरे मामनार्य्यं करोति ? ॥ इति ।

(ण) अयं कस्य दोषः ? इति अधिक्षेपः ।

राक्ष। [सवाष्पम्]। विधेर्विलसितमिदं, कुत: ?—

भृत्यत्वे परिभावधामनि सति स्नेहात् प्रभूणां सतां
पुत्रेभ्य: कृतवेदिनां कृतधियो येषामभिन्ना वयम्।
ते लोकस्य परीक्षका: क्षितिभृत: पापेन येन क्षता:
तस्येदं विपुलं विधेर्विलसितं पुंसां प्रयत्नच्छिद: ॥ २० ॥

मल। [सकोधम्]। कथम् अद्यापि निह्नूयते, विधेर्विलसितमिदम्!! न ममेति ? अनार्य्य!—

कन्यां तीव्रविषप्रयोगविषमां कृत्वा कृतघ्न! त्वया
विस्रम्भप्रवणस्तदा मम पिता नीत: कथाशेषताम्।

---

मृषादोषमसमारोपणेनानृतमहृदय विफलप्रयत्नपुरुषकार: प्रभुस्नेहवशपुर:सरं दैवमेव एतेषामविभाव्यव्यापाराणां हेतुतया निर्दिशन्ननुशोचति, भृत्यत्वे इति।— परिभावधामनि परिभावस्य तिरस्कारस्य, धामनि आस्पदे, परिभावके इत्यर्थ:, भृत्यत्वे दासत्वे, अस्माकमिति भाव:, सति विद्यमानेऽपि, कृतधिय: कृतबुद्धय:, कृतोपकार-ज्ञातार इत्यर्थ:, वयं कृतवेदिनाम् उपकाराभिज्ञानां, सतां साधुशीलानां, येषां प्रभूणां नन्दानामित्यर्थ:, स्नेहात् स्नेहेन, पुत्रेभ्य: अभिन्ना: पुत्रनिर्विशेषा:, पुत्रतुल्य-स्नेहभाजनानि, आस्म इति शेष:, लोकस्य परीक्षका: सदसत्त्वविवेकिन:, ते प्रसिद्धा:, क्षितिभृत: राजान:, नन्दा: इत्यर्थ:, पापेन दुष्टेन, [पापं विद्यते यस्य स पाप: तेन, पापशब्दात् अस्त्यर्थे अर्श-आदित्वात् अच्] येन विधिना, क्षता: क्षयं नीता:, पुंसां पुरुषाणां, प्रयत्नच्छिद: पुरुषकारघातिन:, तस्य विधे: दैवस्य, इदं विपुलं सुमहत्, विलसितं चेष्टितं, न चाणक्यस्य इत्यर्थ:, तथा च, यथा नन्दादयोऽपि भाग्येनैव हतास्तथाऽहमपि तेनैव अनृतदोषास्पदं कृत: इति भाव:। [अत्र अमात्यानां पुत्रभिन्नत्वेऽपि तदभिन्नत्वाध्यारोपादतिशयोक्तिरलङ्कार:]। शार्दूलविक्रीडितं वृत्तम् ॥ २० ॥

दैवविलसितमिति राक्षसोक्तं मृषा मन्यमान: तत्प्रतिवाक्यश्रवणसञ्जातकोप: तस्य कृतघ्नतां दर्शयन्नाह, कन्यामिति।—कृतघ्न! रे अकृतज्ञ! कृतोपकारविस्मारिन्! त्वया तीव्रविषप्रयोगविषमां तीव्रस्य तीक्ष्णस्य, विषस्य हलाहलस्य इव, प्रयोगो यस्या: ताम्, अत एव विषमां घोरां, यस्या: अन्योपभोगे हि घोरविषसेवनवत् झटिति प्राणविनाश: तादृशीमित्यर्थ:, कन्यां कृत्वा सम्पाद्य, अन्विष्य कुतश्चिदानीय च तया

सम्भाव्याहितगौरवेण भवता मन्त्राधिकारे रिपोः
प्रारब्धाः प्रणयाय मांसवदहो ! विक्रेतुमेते वयम् ॥ २१ ॥

राक्ष। [स्वगतम्]। अयम् अपरो गण्डस्योपरि विस्फोटः। (त) [प्रकाशं कर्णौ पिधाय]। शान्तं पापं, शान्तं पापम्। नाहं विषकन्याम् आरोपितवान्। अपापोऽहं पर्वतेश्वरे।

मल। केन तर्हि व्यापादितः तातः ?

राक्ष। दैवमत्र प्रष्टव्यम्। (थ)

मल। [सक्रोधम्]। दैवमत्र प्रष्टव्यं, न क्षपणको जीवसिद्धिः !!

राक्ष। [स्वगतम्]। कथम् !! जीवसिद्धिरपि चाणक्यप्रणिधिः !! हन्त ! हृदयमपि मे रिपुभिः स्वीकृतम्।

मल। [सक्रोधम्]। भासुरक ! आज्ञाप्यतां शिखरसेनः सेनापतिः, "ये एतेन राक्षसेन सह सौहार्दमुत्पाद्य अस्मच्छरीराभि-

---

सह मेलनं सम्पाद्य इत्यर्थः, तदा विस्रम्भप्रवणः त्वयि सुविश्वस्तः, मम पिता पर्वतेश्वरः, कथाशेषतां वाक्यमात्रेण शिष्टत्वं, नीतः प्रापितः, निहत इत्यर्थः; सम्प्रति इदानीं, भवता त्वया, रिपोः शत्रोः चन्द्रगुप्तस्य, मन्त्राधिकारे मन्त्रिपदे, आहितगौरवेण प्राप्तसम्मानेन, धृताभिलाषेण वा सता, प्रणयाय तत्प्रीत्यर्थमित्यर्थः, [अत्र "क्रियार्थोपपदस्य च" (२। ३। १४ पा०) इति चतुर्थी] एते त्वां प्रति अतिविश्वस्ताः, वयं मांसवत् क्रव्यमिव, विक्रेतुं प्रारब्धाः; अहो ! इत्याश्चर्ये। "इदानीमपि राक्षसेन अनेककार्यकुशलेन किमपि तादृशमारभ्यते" इति पूर्वं जीवसिद्धिना उपक्षिप्तस्य विषयस्य अयमुद्गार इति बोध्यम्। [अत्र "मांसवत्" इति इवार्थकवच्छब्देन साम्यकथनात् श्रौती, तीव्रविषप्रयोगविषमाम् इति इवलोपेन साहश्यप्रतीतेर्लुप्ता च उपमाऽलङ्कारः]। शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

(त) गण्डस्य—स्फोटकस्य, स्वतो दुःखदायकस्येत्यर्थः। [उपरिशब्दयोगे "षष्ठ्यतसर्थप्रत्ययेन" (२।३।३० पा०) इति षष्ठी]। विस्फोटकः—दुःखान्तरदायकः व्रणविशेषः; अयं पर्वतेश्वरवधाभियोगरूपः अपरः दोषः इति आशयः।

(थ) दैवमिति।—[चाणक्यस्य नाम अगृहीत्वा दैवमिति वदता स्वस्य परदोषानाविष्करणरूपं मनस्वित्वं सूचितम्]।

द्रोहेण (ट) चन्द्रगुप्तम् आराधयितुकामाः पञ्च राजानः; तद्यथा, कौलूतः (ठ) चित्रवर्मा, मलयनरपतिः सिंहनादः, काश्मीरः पुष्कराक्षः, सिन्धुराजः सुषेणः, पारसीकाधिराजो मेघाक्ष इति, तत्र तेषां मध्ये ये त्रयः प्रधानतमाः प्रथमा मदीयां भूमिं कामयन्ते, ते गम्भीरश्वभ्रम् (ड) उपनीय पांशुभिः पूर्य्यन्ताम्, इतरौ तु द्वौ हस्तिबलकामौ हस्तिनैव घात्येताम्" इति।

पुरुषः। जं कुमारो आणवेदि। * [इति निष्क्रान्तः]।

मल। [सक्रोधम्]। राक्षस! राक्षस! नाहं विस्रम्भघाती राक्षसः, मलयकेतुः खलु अहं, तत् गच्छ, समाश्रीयतां सर्वात्मना चन्द्रगुप्त इति—

विष्णुगुप्तञ्च मौर्य्यञ्च समम् अप्यागतौ त्वया।
उन्मूलयितुमीशोऽहं त्रिवर्गमिव दुर्नयः॥ २२॥

---

* यत् कुमार आज्ञापयति।

---

(ट) चन्द्रगुप्ताय द्रोह इति व्यासवाक्ये ["क्रुधद्रुहोरुपसृष्टयोः कर्म" (१।४।३८ पा०) इति सम्प्रदानस्य कर्मता, ततः "कर्तृकर्मणोः कृति" (२।३।६५ पा०) इति कृद्योगात् कर्मणि षष्ठीं कृत्वा कारकषष्ठ्या सह समासनिषेधात् सम्बन्धविवक्षया षष्ठीसमासः कार्य्यः]।

(ठ) कुलूतानां जनपदानां राजा कौलूतः, ["क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्" (वा०) इति अञ्-प्रत्ययः]।

(ड) गम्भीरश्वभ्रम्—अतिगम्भीरगर्त्तम्।

राक्षसापगमेनापि सर्वथा स्वस्य परपरिभवसामर्थ्यं प्रकटयितुमाह, विष्णुगुप्तमिति।—दुर्नयः दुर्नीतिः, असदाचरणमित्यर्थः, त्रिवर्गं त्रयाणां क्षयादीनां, धर्मार्थकामानां वा, वर्गः समुदायः तमिव, ("क्षयः स्थानञ्च वृद्धिश्च त्रिवर्गो नीतिवेदिनाम्" इति "त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः" इति वा अमरोक्तिः) अहं त्वया समं सह, आगतौ विष्णुगुप्तं चाणक्यं, मौर्य्यं चन्द्रगुप्तञ्च, उन्मूलयितुं समूलं नाशयितुम्, ईशः समर्थः, अस्मीति शेषः। [अत्र दुर्नयेन सह त्रिवर्गेण चाणक्य-चन्द्रगुप्त-राक्षसानाम् उन्मूल्योन्मूलकत्वरूपसाम्यकथनात् उपमाऽलङ्कारः, तेन च मलयकेतोः दुर्नीतिपरत्वं व्यज्यते]। अनुष्टुप् वृत्तम् ॥ २२॥

भागु । कुमार ! कृतं कालहरणेन ; शीघ्रमेव कुसुमपुरोपरोधाय प्रतिष्ठाप्यन्ताम् अस्मद्बलानि—

गौडीनां लोध्रधूलीपरिमलबहुलान् धूम्रयन्तः कपोलान्
क्लिश्नन्तः कृष्णिमानं भ्रमरकुलरुचः कुञ्चितस्यालकस्य ।
पांशुस्तम्भा बलानां तुरगखुरपुटक्षोदलब्धात्मलाभाः
शत्रूणामुत्तमाङ्गे गजमदसलिलच्छिन्नमूलाः पतन्तु ॥२२॥

[ इति सपरिजनो निर्गतो मलयकेतुः ] ।

राक्ष । [ सावेगम् ] । हा धिक् कष्टम् !! तेऽपि हताः तपस्विनः चित्रवर्मादयः !! तत् कथं सुहृन्नाशाय राक्षसः चेष्टते, न रिपुविनाशाय ? तत् किमिदानीं करवाणि मन्दभाग्यः !!—

किं गच्छामि तपोवनम् ? न तपसा शाम्येत् सवैरं मनः,
किं भर्त्तॄननुयामि ? जीवति रिपौ स्त्रीणामियं योग्यता ।

---

सम्प्रति प्राप्तावसरः स्वपक्षबलहीनमिमं भटभटादिभिर्नियातयितुं त्वरयति, गौडीनामिति ।—बलानाम् अस्मत्सैन्यानां, तुरगखुरपुटक्षोदलब्धात्मलाभाः तुरगाणाम् अश्वानां, खुरपुटैः खुरसमूहैः, यः क्षोदः चूर्णनं, तेन लब्धः प्राप्तः आत्मलाभः स्वोत्पत्तिः यैः तादृशाः, पांशुस्तम्भाः रजःसङ्घाः, गौडीनां गौडदेशनिवासिनीनां नारीणां, लोध्रधूलीपरिमलबहुलान् लोध्रस्य तरुविशेषपुष्पस्य, धूली परागः, तस्य परिमलः लेपजनितो गन्धविशेषः, तेन बहुलान् सान्द्रान्, पूर्णानित्यर्थः, [ गौडस्त्रियः कपोलान् लोध्ररजोभिरलङ्कुर्वन्ति इत्यतस्तेषां तत्परिमलबहुलत्वमित्यवधेयम् । "धवलान्" इति पाठे—शुभ्रान्, उभयोरेव शुभ्रत्वात ] कपोलान् धूम्रयन्तः धूम्रवर्णान् कुर्वन्तः, तासामेव भ्रमरकुलरुचः भृङ्गसङ्घकान्तेः, कृष्णवर्णस्येत्यर्थः, कुञ्चितस्य भङ्गिमतः, अलकस्य चूर्णकुन्तलस्य, [ जात्याख्यायामेकवचनम् ] कृष्णिमानं कृष्णत्वं, क्लिश्नन्तः अपनयन्तः, तथा गजमदसलिलच्छिन्नमूलाः गजानां मदाः एव सलिलानि तैः छिन्नं मूलं येषां तादृशाः सन्तः, शत्रूणां रिपूणाम्, उत्तमाङ्गे शिरसि, पतन्तु । [ अत्र कपोलादीनां स्वगुणत्यागस्याहिपारत्यागेन पांशुसम्बन्धिधूम्रत्वग्रहणकथनात् तद्गुणालङ्कारः, स च स्वभावोक्त्या भ्रमरकुलरुचः इत्युपमया च सङ्कीर्णः ] । स्रग्धरा वृत्तम् ॥ २२ ॥

सहसा मलयकेतोरेताद्दशमप्रतिविधेयं भावान्तरमवगम्य स्वकृतस्य प्रभूतपुरुषक्षारस्य व्यर्थतां विभाव्य च नितरां खिन्नहृदयः किं-कर्त्तव्यविमूढबुद्धिरमात्यः बहुधा

किं वा खड्गसखः पताम्यरिबले ? नेदं न युक्तं भवेत्
चेतश्चन्दनदासमोक्षरभसं रुन्ध्यात् कृतघ्नं न चेत् ॥ २४ ॥

[ इति निष्क्रान्ताः सर्वे ] ।

इति पञ्चमोऽङ्कः ॥ ५ ॥

---

सङ्कल्पते, किं गच्छामीति ।—किं तपोवनं तपस्यार्थमरण्यं गच्छामि ? न युक्तं तदित्याह, नेति ।—एवं शत्रुशासनसमाकुलं, मनः तपसा न शाम्येत् न शान्तिं गच्छेत् । भर्तॄन् स्वामिनः, परलोकगतानित्यर्थः, किम् अनुयामि ? अनुसरामि ? म्रिये इत्यर्थः, रिपौ शत्रौ, जीवति विद्यमाने सति, इयं स्त्रीणां योग्यता अध्यवसायः, न पुरुषाणां, वैरनिर्यातनमकृत्वा स्त्रीवदनुमरणमयुक्तमिति भावः । किं वा अथवा, खड्गसखः असिमात्रसहायः सन्, अरिबले शत्रुसैन्यव्यूहे, पतामि ? इदं शत्रुसैन्यमध्ये पतनं, युक्तं न भवेत् इति न, अपि तु युक्तमेव भवेत्, चेत् यदि, चन्दनदासमोक्ष-रभसं चन्दनदासस्य तन्नामकसुहृद्वणिजः, मोक्षे बन्धनागारात् विमोचने, रभसं वेगं, त्वरामित्यर्थः, अत एव कृतघ्नं स्वामिकृतोपकारविस्मारकं, चेतः मम मनः, न रुन्ध्यात्, मामिति शेषः । पराक्रमपक्षे चन्दनदासविषये स्वस्य कृतघ्नतादोषः अपरिहार्यः स्यादिति अकार्य्यत्वेनापि चन्दनदासमोचनमेव अवश्यकर्त्तव्यमिति तदेव प्रयतिष्ये इति भावः । [ "नेदं न युक्तम्" इत्यत्र "नैतच्च युक्तम्" इति पाठे —एतच्च अरिबले पतनं, न युक्तं भवेत्, यतः चन्दनदासमोक्षरभसं चन्दनदासस्य परमोपकारिणः मोक्षो न भवेदिति व्यग्रं, चेतः रुन्ध्यात् अरिबले पतनात् मां रोद्धुं प्रवर्त्तेतेत्यर्थः, न चेत् न रुन्ध्यात् यदि, कृतघ्नम् अकृतज्ञं, भवेदिति शेषः इति समुदितार्थः । [ अत्र चेतसः चन्दनदासमोक्षरभसत्वं शत्रुमध्यऽपतने कारणम् इति हेतोः वाक्यार्थतया काव्यलिङ्गमलङ्कारः ]। शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-कुलपतिकल्प-"बि, ए" इत्युपनामक-
श्रीमज्जीवानन्दविद्यासागर भट्टाचार्य्यविरचितायां, तदात्मजाभ्यां
श्रीमदाशुबोधविद्याभूषण-श्रीमन्नित्यबोधविद्यारत्नाभ्यां
परिवर्त्तित-परिवर्द्धितायां सुखबोधिनी-
समाख्यायां मुद्राराक्षसव्याख्यायां
पञ्चमोऽङ्कः ॥ ५ ॥

# षष्ठोऽङ्कः ।

[ ततः प्रविशति अलङ्कृतः सहर्षः सिद्धार्थकः ]।

सिद्धा। जअदि जलदणीलो केसवो केसिघादी

जअदि सुजणदिट्ठीचंदमा चंदउत्तो ।

जअदि जअणसज्जं जा अकाऊण सेण्णं,

पडिहदपडिवक्खा अज्जचाणक्कणीदी * ॥ १ ॥

---

* जयति जलदनीलः केशवः केशिघाती,

जयति सुजनदृष्टिचन्द्रमाश्चन्द्रगुप्तः ।

जयति जयनसज्जं या अकृत्वा च सैन्यं

प्रतिहतप्रतिपक्षा आर्य्यचाणक्यनीतिः ॥

---

इत्थं मलयकेतुनिबन्धरूपम् अवान्तरकार्य्यनिर्वहणं कृतम् । अतः परं राक्षस-सङ्ग्रहरूपप्रधानकार्य्यनिर्वाहार्थं चन्द्रगुप्तलक्ष्मीस्थैर्य्यरूपस्य महाफलस्य च सिद्ध्यर्थं षष्ठ-सप्तमाङ्कौ आरभ्येते । तत्र तावत् कृतकार्य्यतया चन्द्रगुप्तेन भूषणादिना अलङ्कृतेन सिद्धार्थकेन इष्टदेवता-राज-चाणक्यनीतीनां जय उद्घोष्यते, जयतीति ।— जलं ददाति इति जलदः मेघः, [ जलोपपदात् ददातेः "आतोऽनुपसर्गे कः" ( ३।२।३ पा० ) इति कः ] तद्वन्नीलः सजलजलदवत् श्यामल इत्यर्थः, केशिनम् असुरविशेषं, हतवानिति केशिघाती, [ "कर्मणि हनः" ( ३।२।८६ पा० इति णिनिः ] केशवः विष्णुः, जयति सर्वोत्कर्षेण वर्त्तताम् । तथा सुजनानां दृष्टेः चन्द्रमाः चन्द्र-स्वरूपः, तादृशस्निग्धत्वादिति भावः, चन्द्रगुप्तः अस्मन्नरपतिः, जयति । तथा या सैन्यं जयति अनेन इति जयनं युद्धादि, [ करणे ल्युट् ) तदर्थं सज्जा वेशः यस्य तत् तथाभूतम्, अकृत्वा च एवार्थे, सैन्यादिना एव यत् कार्य्यं तत् सर्वं स्वयमेव कृत्वा इत्यर्थः, प्रतिहतः विनाशितः, प्रतिपक्षः शत्रुपक्षः यया एवंविधा, आर्य्यस्य चाणक्यस्य नीतिः जयति सर्वोत्कर्षेण वर्त्तताम् ; सेनासन्नाहयुद्धादिकमनपेक्ष्यैव नीत्या सर्वं राजकार्य्यं चाणक्यः साधितवानित्यर्थः । [ अत्र विपक्षपराजयहेतुभूतं सैन्यादिसाधनम् अन्तरेणापि चाणक्यनीतेः प्रतिपक्षविनाशनरूपकार्य्यसम्पादनात् विभावनाऽलङ्कारः, स च "जलदनीलः" इत्यंशे उपमया, "सुजनदृष्टिचन्द्रमाः" इत्यंशगतरूपकेण च

ता जाव चिरस्स कालस्स प्पिअवअस्सं सुसिद्धत्थअं (क) पेक्खामि। [परिक्रम्य अवलोक्य च]। अअं उण प्पिअवअस्सओ सुसिद्धत्थओ इदो ज्जेव आअच्छदि ; ता जाव उवसप्पामि। *

[ततः प्रविशति सुमिद्धार्थकः]।

सुसिद्धा।

संतावेंता आवाणेसु मह्सवेसु दूआवेंता।
हिअअट्ठिआ अवि विहवा विरहे मित्ताणं दुम्मणाअंते ॥ २ ॥

सुदं अ मए जधा मलअकेदुकडआदो प्पिअवअस्सओ सिद्धत्थओ आअदो त्ति। ता जाव णं अण्णेसामि। [परिक्रम्य उपसृत्य च]। एसो सिद्धत्थओ। †

---

* तत् यावत् चिरस्य कालस्य प्रियवयस्यं सुसिद्धार्थकं पश्यामि। अयं पुनः प्रियवयस्यः सुसिद्धार्थक इत एवागच्छति ; तत् यावदुपसर्पामि।

† सन्तापयन्तः आपानेषु महोत्सवेषु रुजायन्तः।
हृदयस्थिता अपि विभवा विरहे मित्राणां दुर्मनायन्ते ॥

श्रुतञ्च मया यथा मलयकेतुकटकात् प्रियवयस्यः सिद्धार्थक आगत इति। तत् यावदेनमन्विष्यामि। एषः सिद्धार्थकः।

---

अनुप्राणितः, एवञ्च विभावनया नीतेरनितरसाधारण्यं व्यज्यते इत्यलङ्कारेण वस्तुध्वनिः। जयति इत्यस्य विः प्रयोगादनवीकृततादोषश्च)। मालिनी वृत्तम् ॥१॥

(क) क्वचित् पुस्तके "सुसिद्धार्थकम्" इत्यत्र "समिद्धार्थकम्" इति, तथा परस्थानेषु सर्वेष्वेव सुसिद्धार्थकस्थाने समिद्धार्थक इति पाठान्तरं दृश्यते।

प्रियवयस्यस्य सिद्धार्थकस्य सुचिरविरहेण कातरः सुहृद्विरहदुःखं वर्णयन्नाह, सन्तापयन्त इति।—मित्राणां सुहृदां, विरहे अदर्शने सति, विभवाः सर्वा अपि सम्पदः इत्यर्थः, हृदयस्थिता अपि चिन्ताप्रयत्नेन अन्तःकरणगता अपीत्यर्थः, (सततत्तद्विषयकभावनया बहिःस्थत्वेऽपि विभवानां हृदयस्थितत्वं बोध्यम्) आपानेषु पानगोष्ठीषु, सन्तापयन्तः पाने सुहृत्सम्प्रयोगाभावेन सुहृन्निकरतया अत्यन्तं दुःखं जनयन्तः, तथा महोत्सवेषु अन्येषु अत्यानन्दजनकव्यापारेषु, रुजायन्तः पीडयन्तः सन्तः, दुर्मनायन्ते दुर्मनसः कुर्वन्ति। ["कर्त्तुः क्यङ् सलोपश्च" (३।१।११ पा०) इति क्यङन्तः प्रयुक्तो विवक्षितः] आर्या वृत्तम् ॥ २ ॥

सिद्धा। [विलोक्य]। कधम्!! इदो ज्जेव पिअवअस्सओ सुसिद्धत्थओ!! [उपगम्य]। अवि सुहं पिअवअस्सस्स? *

[उभौ अन्योन्यम् आलिङ्गतः]।

सुसिद्धा। अह्‌ (ख) वअस्स! कुदो मे सुहं!! जस्स तुमं चिरआलप्पवासपच्चागदोवि अआणिअ वुत्तंतं असदो गदोसि? त्ति। †

सिद्धा। पसीददु पसीददु पिअवअस्सो। अहं क्खु दिट्ठमेत्तो ज्जेव्व अज्जचाणक्केण आणत्तो, जधा—"सिद्धत्थअ! गच्छ, एदं पिअं वुत्तंतं पिअदंसणस्स देवस्स चंदसिरिणो णिवेदेहि" त्ति। तदो तस्स तं णिवेदिअ एव्वं अणुभूदपात्थिवप्पसादो अहं पिअवअस्सं पेक्खिदुं तुह गेहं चलिदोम्हि। ‡

सुसिद्धा। वअस्स! जदि मए एदं सुणिदव्वं भोदि, ता मंपि सुणावेहि, किं तं पिअं पिअदंसणस्स चंदसिरिणो णिवेदिदं त्ति? §

सिद्धा। पिअवअस्स! तुह वि किं असुणिदव्वं अत्थि? ता णिसामेहि, अत्थि दाव अज्जचाणक्कणीदिमोहिद-

* कथम्!! इत एव प्रियवयस्यः सुसिद्धार्थकः!! अपि सुखं प्रियवयस्यस्य?

† अह वयस्य! कुतो मे सुखम्!! यस्य त्वं चिरकालप्रवासप्रत्यागतोऽपि अज्ञापयित्वा वृत्तान्तम् अन्यतो गतोऽसि? इति।

‡ प्रसीदतु प्रसीदतु प्रियवयस्यः। अहं खलु दृष्टमात्र एव आर्यचाणक्येन आज्ञप्तः, यथा—"सिद्धार्थक! गच्छ, इमं प्रियं वृत्तान्तं प्रियदर्शनस्य देवस्य चन्द्रश्रियः निवेदय" इति। ततस्तस्य तन्निवेद्य एवमनुभूतपार्थिवप्रसादोऽहं प्रियवयस्यं प्रेक्षितुं तव गेहं चलितोऽस्मि।

§ वयस्य! यदि मयेदं श्रोतव्यं भवति, तन्मामपि श्रावय, किं तत् प्रियं प्रियदर्शनस्य चन्द्रश्रियः निवेदितमिति।

¶ प्रियवयस्य! तवापि किमश्रोतव्यमस्ति? तन्निशामय, अस्ति तावत् आर्य-

(ख) अह इत्यव्ययं खेदे।

मदिणा मलअकेदुहदएण णिराकरिअ रक्खसं हदा चित्तवम्मप्पमुहा प्पहाणा पंच पात्थिवा । तदो असमिक्खकारी एसो दुराआरो त्ति कदुअ उज्झिअ मलअकेदुकडअभूमिं णिअभूमिकुसलदाए भअविलोलसेसतणूकिदपरिवारेसु (ग) सकं सकं विसअं अभिप्पात्थिदेसु पात्थिवेसु भद्दभट-पुरुदत्त-डिंगुरात-बलउत्त-राअसेण-भागुराअण-रोहिदक्ख-विजअवम्मप्पमुहेहिं संजमिदो मलअकेदू । ¶

सुमिद्धा । वअस्स ! भद्दभटप्पमुहा किल देअस्स चंदसिरिणो अवरत्ता मलअकेदुं समास्सिदा त्ति लोए मंतीअदि ; ता किं णिमित्तं एदं कुकविणाड़अस्स विअ अण्णं मुहे अण्णं णिव्वहणे (घ) त्ति ? *

---

चाणक्यनीतिमोहितमतिना मलयकेतुहतकेन निराकृत्य राक्षसं हताश्चित्रवर्मप्रमुखाः प्रधानाः पञ्च पार्थिवाः । ततोऽसमीक्ष्यकारी एष दुराचार इति कृत्वा उज्झित्वा मलयकेतुकटकभूमिं निजभूमिकुशलतया भयविलोलसैन्यतनूकृतपरिवारेषु स्वकं स्वकं विषयमभिप्रस्थितेषु पार्थिवेषु भद्रभट-पुरुदत्त-डिङ्गुरात-बलगुप्त-राजसेन-भागुरायण-रोहिताक्ष-विजयवर्मप्रमुखैः संयमितो मलयकेतुः ।

* वयस्य ! भद्रभटप्रमुखाः किल देवस्य चन्द्रश्रियः अपरक्ता मलयकेतुं समाश्रिता इति लोके मन्त्र्यते ; तत् किं निमित्तमेतत् कुकविनाटकस्येव अन्यत् मुखे अन्यत् निर्वहणे इति ?

---

(ग) मलयकेतुकटकभूमिं—मलयकेतोः सैन्यसन्निवेशप्रदेशम् । निजभूमिकुशलतया—निजराज्यस्य निरापत्तासम्पादनार्थम् । भयविलोलसैन्यतनूकृतपरिवारेषु—भयेन विलोलानि—चञ्चलानि, सैन्यानि भयविलोलसैन्यानि, तैः तनूकृताः,—अल्पीकृताः, परिवाराः येषां तेषु भयप्रद्रुताधिकभागेषु इत्यर्थः ।

(घ) चन्द्रश्रियः,—चन्द्रगुप्तस्य, चन्द्रगुप्ते इत्यर्थः, [ शेषे षष्ठी ] । अपरक्ताः,—विरक्ताः । मुखे—मुखसन्धौ, प्रारम्भे इत्यर्थः । निर्वहणे—उपसंहारे । उपक्रमोपसंहारयोः परस्परमैकरूपता नाटके भाव्या, कुकविकृतनाटके यथा तद्वैपरीत्यं दृश्यते अत्रापि तद्वत् वैपरीत्यं कथमिति प्रश्नार्थः ।

सिद्धा। वअस्स ! सुणु दाव, देवगदीए विअ अस्सुणिदगदीए णमो अज्जचाणक्कणीदीए। (ङ) *

समिद्धा। वअस्स ! तदो तदो ? †

सिद्धा। वअस्स ! तदो प्पहुदि सारसाहणसमुदएण इदो णिक्कमिअ अज्जचाणक्केण पडिवण्णं अराअलोअं असेस-राअबलं। (च) ‡

समिद्धा। वअस्स ! कहिं ? § (छ)

सिद्धा। वअस्स ! जहिं एदे—¶

---

* वयस्य ! शृणु तावत्, दैवगत्यै इव अश्रुतगत्यै नमः आर्यचाणक्यनीत्यै।

† वयस्य ! ततस्ततः ?

‡ वयस्य ! ततः प्रभृति सारसाधनसमुदयेन इतो निष्क्रम्य आर्यचाणक्येन प्रतिपन्नमराजलोकमशेषराजबलम्।

§ वयस्य ! कुत्र ?

¶ वयस्य ! यत्रैते—

---

(ङ) अश्रुतगत्यै इति।—एतत्तु विशेषणकथनमुखेन चाणक्यनीति-दैवगत्योः सामान्यधर्मकथनमिति बोध्यम्। ["दैवगत्या इव अश्रुतगत्या नमः आर्यचाणक्य-नीत्या" इति पाठे—आर्यचाणक्यनीत्या इत्यत्र "नमःस्वस्तिस्वाहा—" (२।३।१६ पा०) इत्यादिना चतुर्थीप्राप्तावपि सम्बन्धविवक्षया षष्ठी। तथा च—"अप्रधाने नमोयोगे चतुर्थी नेष्यते बुधैः" इति नियमः]।

(च) "ततः प्रभृति" इत्यत्र "ततः पश्चात्" इति पाठः समीचीनतया सङ्गच्छते। आर्यचाणक्येन इतः,—अस्मात् नगरात्, निष्क्रम्य सारसाधनसमुदयेन—उत्कृष्टोत्कृष्ट-सङ्ग्रामोपकरणसैन्यादिना सह। अराजलोकं—सहायकराजवृन्दविरहितं, तेषां स्वस्वविषयेषु प्रस्थितत्वादिति भावः, अशेषराजबलं—मलयकेतोः समग्रं सैन्यं, प्रतिपन्नम्—अधिकृतम्।

(छ) कुत्रेति।—आर्यचाणक्येन अशेषराजसैन्यमधिकृतमित्युक्तं, स चाधि-कारः कस्मिन् स्थाने संवृत्तः ? इत्यभिप्रायः।

अदिसअगुरुएण दाणदप्पेण दंती
सजलजलदलीलं उव्वहंतो णदंति।
कसपहरभएण जादकंपा तुरंगा
गहिदजअणसज्जा संपदंते तुलंगा * ॥ २ ॥

---

* अतिशयगुरुकेण दानदर्पेण दन्तिनः
सजलजलदलीलामुद्वहन्तो नदन्ति।
कशाप्रहारभयेन जातकम्पास्त्वरयन्तः
गृहीतजयनसज्जाः सम्पतन्ति तुरङ्गाः॥

---

"ततश्चाणक्येन सनगरराजसैन्यमधिकृतम्" इति सिद्धार्थकवचनमाकर्ण्य "कुत" इति कृतप्रश्नं सुसिद्धार्थकं प्रति उत्तरमाह, अतिशयेति।—दन्तिनः प्रशस्तदन्तवन्तः हस्तिनः, [दन्तशब्दात् प्राशस्त्ये इनिः] अतिशयगुरुकेण अतिप्रवृद्धेन, दानदर्पेण मदजगर्वेण, सजलजलदलीलां सजलानां जलपूर्णानां, वर्षुकाणामित्यर्थः, जलदानां घनानां, लीलां विलासम्, उद्वहन्तः धारयन्तः सन्तः, नदन्ति बृंहन्ति, लीलाः मेघा यथा जलानि वर्षन्ति गर्जन्ति च, तथा नीलवर्णा हस्तिनः मदजलानि वर्षन्ति बृंहन्ति च इत्यर्थः; [अत्र "लीला उव्वहंतो" "जादकंपोत्तरंगा" "गिहिदजअणसद्दा" इति च पाठान्तरं दृश्यते, तत्र "लीला उद्वहन्तः" "जातकम्पोत्तरङ्गाः" "गृहीतजयनशब्दाः" इति च संस्कृतं] तथा कशाप्रहारभयेन कशाघाताशङ्कया, प्रहारभयेण जातकम्पाः अत एव त्वरयन्तः स्वारोहिणः त्वरावतः कुर्वन्तः, तुरङ्गाः अश्वाः, गृहीतजयनसज्जाः युद्धार्थं सज्जिताः, ["गृहीतजयनशब्दाः" इति पाठे—गृहीतः ज्ञातः, जयनशब्दः जयध्वनिः यैः ते तथाभूताः, जयघोषणां श्रुत्वा सर्वतः सम्पतन्तीत्यर्थः] सम्पतन्ति सन्नद्धा भवन्ति। [अत्र पूर्वार्द्धे हस्तिनां सजलजलदलीलाधारणा-सम्भवात् तल्लीलासदृशलीलाधारणप्रतीतेः बिम्बप्रतिबिम्बताप्रत्यायनात् निदर्शना-ऽलङ्कारः, तथा द्वितीयार्द्धे प्रस्तुतेषु तुरङ्गेषु अप्रस्तुतप्रहारभयभीतसज्जितभृत्यानां शीघ्रोद्योगप्रकटनव्यवहारस्य समारोपणादुपजायमानया समासोक्त्या, सा च कशा-प्रहारेण जातकम्पा अतः त्वरयन्त इति पदार्थहेतुककाव्यलिङ्गेनानुप्राणिता]। मालिनी वृत्तम्। तल्लक्षणं यथा—"नयुगमथ मकारो यो गणोऽथो यकारौ वसु-ऋषिविरामा मालिनी चित्रलेखा" इति॥ २॥

सुसिद्धः । वअस्स ! सव्वं दाव चिट्ठदु ; तहा सव्वलोअस्स पच्चक्खं उज्झिआहिआरो भविअ कहं अज्जचाणक्को पुणो वि तं ज्जेव मंतिपदं आरूढो ? * (ज)

सिद्धः । वअस्स ! अदिमुद्धो दाणीं सि तुमं, जो अमच्चरक्खसेण अणवगाहिदपुव्वं अज्जचाणक्कबुद्धिं अवगाहिदुं इच्छसि ? † (झ)

सुसिद्धः । वअस्स ! अध अमच्चरक्खसो दाणीं कहिं ? ‡ (ञ)

सिद्धः । वअस्स ! सो क्खु तस्सिं पलअकोलाहले वड्ढमाणे मलअकेदुकडआदो णिक्कमिअ उंदुरणामहेएण चरेण

---

* वयस्य ! सर्वं तावत् तिष्ठतु ; तथा सर्वलोकस्य प्रत्यक्षमुज्झिताधिकारो भूत्वा कथमार्य्यचाणक्यः पुनरपि तदेव मन्त्रिपदमारूढः ?

† वयस्य ! अतिमुग्ध इदानीमसि त्वं, यः अमात्यराक्षसेन अनवगाहीत-पूर्वामार्य्यचाणक्यबुद्धिमवगाहितुमिच्छसि ? [ "अणवगाहिअपुव्वं" इति पाठे— "अनवगाहितपूर्वाम्" इति संस्कृतम् ]।

‡ वयस्य ! अथ अमात्यराक्षस इदानीं कुत्र ?

§ वयस्य ! स खलु तस्मिन् प्रलयकोलाहले वर्द्धमाने मलयकेतुकटकात्

---

(ज) एवं चाणक्यस्य राजनीतिकौशलं प्रतिभाऽऽतिशय्यञ्च विज्ञायापि स्वामिना तथाऽवमानितस्य चाणक्यस्य पुनस्तथैव स्वेच्छया मन्त्रित्वपदग्रहणमयुक्तमिति मन्यमानः पृच्छति, वयस्येति।—सर्वं—सकलं, नीतिकौशलप्रदर्शन-राजकलाधिकाररूपमित्यर्थः। तिष्ठतु—तथैव आस्तामित्यर्थः। तथा—तादृशरूपेण, सावमानमित्यर्थः। उज्झिताधिकारः,—परित्यक्तपदः। आरूढः,—प्राप्तः, स्वीकृतवानित्यर्थः।

(झ) राजनीतिकुशलानामभिप्रायस्य विधेरिव दुर्विभाव्यतया तदनुसन्धित्सा तव मूढत्वमेव प्रतिपादयतीत्याह, अतिमुग्ध इति।—निरतिशयमोहाच्छन्नधीरित्यर्थः। अमात्यराक्षसेन—तादृशराजनीतिविशारदेनेति भावः। अवगाहितुं—प्रवेष्टुं, विज्ञातुमित्यर्थः ; तादृशराजनीतिप्रगल्भेन राक्षसेनापि निर्णेतुमशक्यस्य चाणक्यनीतिकौशलस्य समन्वेषणसमीहा तव अनभिज्ञताप्रतिपादिकेति भावः।

(ञ) सुहृद्वाक्येन प्रतिबोधितः सम्प्रति प्रश्नान्तरमुत्थापयति—अधेत्यादि।

अणुसरतो इमं ज्जेव कुसुमउरं आअदो त्ति अज्जचाणक्कस्स (ट) णिवेदिदं। §

सुसिद्धः। वअस्स! तहा णाम अमच्चरक्खसो णंदरज्जप्पच्चाणअणे किदव्ववसाओ णिक्कमिअ संपदं अकिदत्थो (ठ) पुणो वि कहं इमं ज्जेव कुसुमउरं आअदो? *

सिद्धः। वअस्स! तक्केमि, चंदणदासस्स सिणेहेण त्ति। † (ड)

निष्क्रम्य चन्द्रगुप्तनामधेयेन चरेणानुस्रियमाण इदमेव कुसुमपुरमागतः इति आर्य्यचाणक्यस्य निवेदितम्।

* वयस्य! तथा नाम अमात्यराक्षसो नन्दराज्यप्रत्यानयने कृतव्यवसायो निष्क्रम्य साम्प्रतमकृतार्थः पुनरपि कथमिदमेव कुसुमपुरमागतः?

† वयस्य! तर्कयामि, चन्दनदासस्य स्नेहेनेति।

(ट) तत्कृत—मलयकेतुकृते इत्यर्थः। प्रलयकोलाहले—प्रलयकालिककोलाहले इव अतिभीषणे जनसङ्घर्षे इत्यर्थः, [अत्र कोलाहले प्रलयकालिकत्वविशेषणेन प्रलयकोलाहलो यथा सर्वेषां विपत्तिसूचकः, तथा अयमपि जनसङ्घर्षः सर्वथा मलयकेतोर्विपत्तिमेव सूचयतीत्यवगम्यते]। अनुस्रियमाणः,—अनुगम्यमानः। आर्य्येति।—चाणक्यस्य—चाणक्याय इत्यर्थः, [सम्बन्धविवक्षया षष्ठी]। यद्वा—चाणक्यस्य—चाणक्येन, ["षष्ठी शेषे" (२।३।५० पा०) इति कर्त्तरि षष्ठी]।

(ठ) अमात्यराक्षसस्य मलयकेतुकटकत्यागेऽपि पुनः कुसुमपुरप्रवेशो न युज्यते इत्याशङ्कते, तथेति।—सर्वजनसमक्षमित्यर्थः। नन्दराज्यप्रत्यानयने—चन्द्रगुप्तहस्तात् नन्दराज्यम् आच्छिद्य नन्दवंशीयस्य कस्यचिदधिकारे पुनरानयने इत्यर्थः। कृतव्यवसायः,—कृतसङ्कल्पः। अकृतार्थः,—अकृतकार्य्यः, चन्द्रगुप्तात् नन्दराज्यम् अप्रत्यानीयेत्यर्थः।

(ड) तर्कयामि—सम्भावयामि, मन्ये इत्यर्थः। चन्दनदासस्य स्नेहेन—प्रियसुहृदं परमोपकारिणं चन्दनदासं प्रति अनुरागेणेत्यर्थः। मलयकेतुना विताडितः सङ्कल्पसाधने व्यर्थप्रयत्नो राक्षसः सम्प्रति यदि अन्यत्र कुत्रापि यायात्, तदा उपकारिणः चन्दनदासस्य मुक्तिः कथमपि न सम्भवेदिति कृतघ्नताभयभीतः समुपेत्य लोकापवादं विसृज्य च सर्वाम् आत्ममर्य्यादाम् अकृतार्थोऽपि पुनरत्रैवागत इति निर्गलितार्थः।

सुसिद्धः। वअस्स! सच्चं चंदणदासस्स सिणेहेण त्ति? अध चंदणदासस्स मोक्खं पेक्खसि? * (ढ)

सिद्धः। वअस्स! कुदो से अधण्णस्स मोक्खो? सो क्खु संपदं अज्जचाणक्कस्स आणत्तीए दुवेहिं पि अम्हेहिं वज्झट्ठाणं पवेसिअ वावादइदव्वो। † (ण)

सुसिद्धः। [सक्रोधम्]। वअस्स! किं अज्जचाणक्कस्स घादअअणो अण्णो णत्थि, जेण अम्हे ईदिसे णिसंसे (त) कम्मे णिजुंजीअदि? ‡

सिद्धः। वअस्स! को जीवलोए णिवसिदुकामो अज्जचाणक्कस्स आणत्तिं पडिऊलेदि? (थ) ता एहि, चंडालवेसधारिणा भविअ चंदणदासं वज्झट्ठाणं णेम्ह। §

[इत्युभौ निष्क्रान्तौ]।

प्रवेशकः।

---

* वयस्य! सत्यं चन्दनदासस्य स्नेहेनेति? अथ चन्दनदासस्य मोक्षं प्रेक्षसे?

† वयस्य! कुतोऽस्य अधन्यस्य मोक्षः? स खलु साम्प्रतमार्यचाणक्यस्य आज्ञया द्वाभ्यामपि आवाभ्यां वध्यस्थानं प्रवेश्य व्यापादयितव्यः।

‡ वयस्य! किमार्यचाणक्यस्य घातकजनोऽन्यो नास्ति, येन आवाम् ईदृशे नृशंसे कर्मणि नियुज्यावहे?

§ वयस्य! को जीवलोके निवस्तुकामः आर्यचाणक्यस्य आज्ञप्तिं प्रतिकूलयति? तदेहि, चण्डालवेशधारिणौ भूत्वा चन्दनदासं वध्यस्थानं नयावः।

---

(ढ) अथ अथशब्दः प्रश्नबोधकः, ("मङ्गलानन्तरारम्भ-प्रश्नकार्त्स्न्येष्वथो अथ" इत्यमरः)। मोक्षं—चाणक्यहस्तात् मुक्तिम्। प्रेक्षसे—सम्भावयसीत्यर्थः।

(ण) अधन्यस्य—हतभाग्यस्येत्यर्थः। आज्ञया—आदेशेन। व्यापादयितव्यः,—हन्तव्यः।

(त) घातकजनः,—जीवनदण्डेन दण्डितस्य हन्ता। अन्यः,—अपरः, आवाभ्यां भिन्न इत्यर्थः। ईदृशे—एवम्प्रकारे नरहत्यारूपे इत्यर्थः। नृशंसे—दारुणे।

(थ) जीवलोके—जीवानाम् अधिष्ठाने, संसारे इत्यर्थः। निवस्तुकामः,—वस्तुमनाः, [निवस्तुं कामो यस्य स तथोक्तः "लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि" इति तुमो लोपः]। प्रतिकूलयति—अन्यथा करोति।

[ततः प्रविशति रज्जुहस्तः पुरुषः]।

पुरु।—

छग्गुणसंजोअदिढा उवाअपरिवाडिघडिदपासमुही।
चाणक्कणीदिरज्जू रिउसंजमणुज्जुआ जअदि ॥ ४ ॥ *

[परिक्रम्यावलोक्य च]। एसो सो अज्जचाणक्कस्स उंदुरएण चरेण कधिदो प्पदेसो, जहिं मए अज्जचाणक्काणत्तीए अमच्चरक्खसो प्पेक्खिदव्वो। [विलोक्य]। कहं!! एसो क्खु अमच्चरक्खसो किदाव-

---

* षड्गुणसंयोगदृढा उपायपरिपाटीघटितपाशमुखी।
चाणक्यनीतिरज्जू रिपुसंयमनर्जुका जयति ॥

एष स आर्यचाणक्यस्य उन्दुरकेण चरेण कथितः प्रदेशः, यत्र मया आर्यचाणक्याज्ञया अमात्यराक्षसः प्रेक्षितव्यः। कथम्!! एष खलु अमात्यराक्षसः कृताव-

---

अथ कथञ्चित् चलितबलतया चन्दनदासमोचनरभसेन समायातो राक्षसः साहसी महावीरः शस्त्रपाणिः वशयितुमशक्यः इति तद्वशात् शस्त्रं त्याजयितुं पुनरपि चाणक्येन नियुक्तः रज्जुधारी पुरुषः स्वहस्तस्थितरज्जुं चाणक्यनीतित्वेन वर्णयन्नाह, षड्गुणसंयोगदृढेति।—षड्भिः षड्गुणितैः गुणैः रज्जुभिः, सन्ध्यादिभिर्गुणैश्च, ("सन्धिर्ना विग्रहो यानमासनं द्वैधमाश्रयः" इत्यमरः) संयोगः सम्यक् योजनं घटनं, सम्बन्धश्च यस्याः तथोक्ता, अत एव दृढा अच्छेद्या, तथा उपायानां कार्यसाधनार्थं चेष्टाविशेषाणां सामादीनाञ्च, ("भेदो दण्डः साम दानमित्युपायचतुष्टयम्" इत्यमरः) परिपाट्या सुष्ठुतया, घटितं योजितं, पाशरूपं मुखं यस्याः तादृशी, अत एव रिपूणां शत्रूणां, संयमने सम्यग्बन्धने, ऋजुका सरला, अनुकूला इत्यर्थः, चाणक्यनीतिरेव रज्जुः बन्धनशक्तिसाम्यादिति भावः, जयति सर्वोत्कर्षेण वर्त्तते। अत्र समागतं राक्षसमभिसन्धातुं चाणक्यादिष्टोपायचिकीर्षया करे गृहीता-मुद्बन्धनरज्जुं चाणक्यनीतित्वेन निरूपितवान्। अन्याऽपि रज्जुः षड्गुणरचिता दृढा उभयतः पाशाकारग्रन्थितो बन्धनेऽनुकूला, इयं तु तदपेक्षयाऽपि उत्कृष्टेत्यर्थः; तथा च, चाणक्योपदिष्टेन मया गले रज्जुदानमिषेण राक्षसः संयमनीय इति भावः। [अत्र समागतं राक्षसमभिसन्धातुं चाणक्यादिष्टोपायचिकीर्षया करे गृहीताया-मुद्बन्धनरज्ज्वां चाणक्यनीति-तादात्म्याध्यारोपात् रूपकमलङ्कारः, तत्र विशेषणानां श्लिष्टतया श्लेषेणानुप्राणितम् इति]। आर्या वृत्तम् ॥ ४ ॥

गुंठणो इदो ज्जेव आअच्छदि !! ता जाव इमेहिं जिण्णुज्जाण-पादवेहिं अववारिदसरीरो प्पेक्खामि, कहिं आसणपरिग्गहं करेदि (द)। * [इति परिक्रम्य तथा स्थितः]।

[ततः प्रविशति यथानिर्दिष्टः सशस्त्रो राक्षसः]।

राक्ष। [सवाष्पम्]। कष्टं भोः कष्टम्!—

उत्सन्नाश्रयकातरेव कुलटा गोत्रान्तरं श्रीर्गता,
तामेवानुगता गतानुगतिकास्त्यक्तानुरागाः प्रजाः।
आप्तैरप्यनवाप्तपौरुषफलैः कार्य्यस्य धूरुज्झिता,
किं कुर्वन्त्वथवोत्तमाङ्गरहितैर्नागैश्चिरं स्थीयते ॥ ५ ॥

---

गुण्ठन इत एवागच्छति !! तत् यावदेभिर्जीर्णोद्यानपादपैः अपवारितशरीरः प्रेक्षे, कुत्रासनपरिग्रहं करोतीति।

---

(द) कृतावगुण्ठनः,—वस्त्रेण आवृता-पादमस्तकः। जीर्णोद्यानपादपैः,—पुरातनोद्यानवृक्षैः। अपवारितशरीरः,—आच्छादितदेहः। प्रेक्षे—पश्यामि। आसनपरिग्रहं करोति—उपविशतीत्यर्थः।

प्राणविनिमयेनापि स्वामिकल्याणं कामयमानः प्रतिकूलदैववशेन व्यर्थीभूतप्रयासो राक्षसः आमूलं पूर्ववृत्तान्तं संस्मरन् अतिनिर्विण्णः शोचति, उत्सन्नेति।—उत्सन्नः विनष्टः, आश्रयः अवलम्बनं यस्याः सा, अत एव कातरा आश्रयनाशाद्दुःखितेत्यर्थः, [उत्सन्नेत्यत्र उच्छिन्न उच्छन्न इत्यपि क्वचित् पाठो दृश्यते] श्रीः राजलक्ष्मीः, तादृशी कुलटा स्वैरिणीव, गोत्रान्तरं वंशान्तरं गता आश्रयत्वेन प्राप्ता। (यद्यपि मौर्य्यस्य नन्दजातत्वेन न गोत्रान्तरत्वं, तथाऽपि तस्य असवर्णाजातत्वेन स्वगोत्रप्रवर्त्तकत्वाभावात् नैकगोत्रता, "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः" इति स्मरणात् असवर्णाजातस्य पुत्रप्रतिनिधित्वाभावादिति बोध्यम्) प्रजाः प्रकृतयश्च, त्यक्तानुरागाः मुक्तपूर्वस्वाम्यनुरागाः, पूर्वस्वामिनं प्रति भक्तिविरहिता इत्यर्थः, गतानुगतिकाः गड्डलिकाप्रवाहवदेकपन्थानुसारिणः इति यावत् (गतं पूर्वप्रस्थितम् अनुगच्छन्तीति गतानुगतिकाः, अथवा,—गतस्य पूर्वैरनुसृतस्य वर्त्मन इत्यर्थः, अनुगतिः अनुगमनं यासां ताः गतानुगतिकाः) ["शेषाद्विभाषा" (५।४।१५४ पा०) इति कप् प्रत्ययः] तां श्रियमेव, अनुगताः अनुसृताः, नन्दानुरागं त्यक्त्वा श्रीरिव ताः मौर्य्यानुरागिण्य आसन्नित्यर्थः, आप्तैः प्रमाथंतो विश्वस्तैरपि जनैः अमात्यैः, अनवाप्तपौरुषफलैः अनवाप्तमनधिगतं, पौरुषस्य

अपि च—

पतिं त्यक्त्वा देवं भुवनपतिमुच्चैरभिजनं
गता छिद्रेण श्रीर्वृषलमविनीतेव वृषली ।
स्थिरीभूता चास्मिन् किमथ करवाम स्थिरमपि,
प्रयातुं नो श्रेषां विफलयति दैवं द्विषदिव ॥ ६ ॥

---

विक्रमस्य, फलं यैः तथाभूतैः अप्राप्तपुरुषकारफलैः अङ्गैः इत्यर्थः, कार्य्यस्य स्वस्वाधिकृतस्य कर्मण इत्यर्थः, धूः भारः, ("धूः स्त्री स्यात् भारचिन्तयोः" इत्यमरः) उज्झिता त्यक्ता। यातु वा श्रीर्गोत्रान्तरं, प्रजानामननुरागो वा भवतु, प्रभुकल्याणकामिनां विश्वासभाजनानान्तु कदाचित् व्यर्थोद्योगानामपि स्वाधिकृतभारत्यागो न युज्यते इत्याह, किमिति।—अथवा, ते आप्ता अपरित्यक्तभारा अपि इति शेषः, किं कुर्वन्तु ? (यद्वा—अथेति छेदः, तत्र अथ अतः परं, वाशब्दो भिन्नक्रमः) यतः उत्तमाङ्गरहितैः मस्तकशून्यैः, शीर्षतुल्यप्रधानपुरुषविरहितैश्च, नागैः हस्तिभिः सर्पैर्वा, पक्षे—तत्तुल्यैरमितशक्तिभिः आप्तैश्च, चिरं स्थीयते एव न किमपि कार्य्यं कर्त्तुं शक्यते इत्यर्थः। ["नागैश्चिरम्" इत्यत्र "अङ्गैरिव" इति पाठे—उत्तमाङ्गरहितैरङ्गैरिव मस्तकशून्यैरङ्गैरिव, मृतैरिव इति तदर्थः। उपमाऽलङ्कारः] यथा हस्ती विषधरो वा सर्वाभिभावकसामर्थ्यशाली अपि शस्त्राघातमस्तकपरिहीनश्चेत् तृणमिव लोकैरुपेक्ष्यते, तथा अमितशक्तयः अपि आप्तपुरुषाः नायकविरहिताः लोकैरुपेक्षिताः किमपि साधयितुं न शक्नुवन्तीति भावः। [अत्र प्रथमपादे "कुलटेव" इत्यत्र उपमाऽलङ्कारः, द्वितीये तृतीये च पादे त्यागक्रियाद्वयस्य "गतानुगतिकाः" इति "अनवाप्तपौरुषफलैः" इति च हेत्वोः वाक्यपदार्थगतत्वात् काव्यलिङ्गम्; चतुर्थपादे तु "नाग" पदम् "उत्तमाङ्ग" पदञ्च श्लिष्टम्; यथा हि मस्तकहीनाः सर्पाः न किमपि कर्त्तुं शक्नुवन्ति, एवं बुद्धिरूप-उत्तमाङ्गहीनाः प्रजाः अपि अकर्मण्या भवन्तीति बिम्बानुबिम्बभावप्रकटनात् निदर्शनाऽलङ्कारः, तदेतेषां संसृष्टिः]। शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

सर्वथा अनुरागभाजनं पतिं विहाय पत्यन्तरग्रहणेन राजश्रियो निन्दाच्छलेन अत्र दैवस्यैव सर्वथा अनर्थहेतुत्वमाह, पतिमिति।—श्रीः राजलक्ष्मीः, अविनीता दुश्चारिणी, वृषली शूद्ररमणी इव, कुलटेवेति यावत्, उच्चैः महान्, अभिजनः वंशो यस्य तं महाकुलीनमित्यर्थः, भुवनपतिमशेषलोकपतिम्, [एतेन विशेषणद्वयेन नन्दस्य परित्यागे किमपि कारणं नास्तीति सूचितम्] देवं नन्दं, पतिं त्यक्त्वा छिद्रेण छलेन, ["कर्तृकरणयोस्तृतीया" (२।३।१८ पा०) इति करणे तृतीया, प्रकृत्यादित्वात्

मया हि—

देवे गते दिवमतद्विधमृत्युयोग्ये,
शैलेश्वरं तमधिकृत्य कृतः प्रयत्नः।
तस्मिन् हते तनयमस्य तथाऽप्यसिद्धिः,
दैवं हि नन्दकुलशत्रुरसौ न विप्रः ॥ ७ ॥

वा ] वृषलं वृषं स्याति नाशयतीति वृषलः तं मौर्यं, गता आश्रिता ; न केवलं तमनुगता, अपि तु अचञ्चला सती अस्मिन् मौर्ये स्थिरीभूता च. "लक्ष्मीः पयोगमार्गमुः कुलटेव कुतूहलात्। अस्मिकेऽपि स्थिता पत्युः कुलीनान्यं निषीयते ॥" इति भावः। अथ अस्य. ["अहह" इति पाठे—अहहेति खेदद्योतकमव्ययम्। "किमिह" इत्यपि पाठः दृश्यते ] किं करवाम ? वयम् इति शेषः, येषां नः अस्माकं, प्रयासं प्रयत्नं कर्तुं, युद्धयात्रां कर्तुमित्यर्थः, स्थिरमपि निश्चितमपि, मन्त्रणाजातमिति शेषः, दैवं द्विषदिव द्वेषं कुर्वदिव, प्रतिवादीव यावत्, विफलयति विफलं करोति, प्रतिकूलत्वात् साफल्यमं न करोतीति भावः। ["प्रयासम्" इत्यत्र "प्रयत्नम्" इति पाठः समीचीनः, प्रबलदैवस्य प्रयत्नघातकत्वात्। अत्र प्रथमपादे "अविनीतेव वृषली" इत्यत्र उपमा, तथा तृतीयपादे अचञ्चलाया लक्ष्म्याः स्थैर्यासम्बन्धेऽपि तत्सम्बन्धोक्तेरसम्बन्धे सम्बन्धरूपाऽतिशयोक्तिः, तथा चतुर्थपादे "द्विषदिव" इत्यत्र उत्प्रेक्षेति एतेषामलङ्काराणां संसृष्टिः ; सा च वृषल्या वृषलानुगमनस्य युक्तत्वेऽपि अविनीतायाः स्थिरीभवनत्वकथनात् हेतुं विना फलोत्पत्तिमतीं विभावनां व्यनक्ति इति अलङ्कारेण अलङ्कारध्वनिः ]। शिखरिणी वृत्तम् ॥ ६ ॥

दुरदृष्टदुर्विपाकपरिणतिरेव अस्मत्कृतानां नन्दकुलविघातप्रतीकाराणां विघातहेतुः इति प्रपञ्चयन् आह, देवे इति।—अतद्विधमृत्युयोग्ये तादृशस्य तादृशस्य, अनार्य्यचाणक्यकृतस्य इत्यर्थः, मृत्योः मरणस्य, योग्यो न भवतीति तादृशे, देवे नन्दे, दिवं स्वर्गं, गते सति तं शैलेश्वरं पर्वतकम्, अधिकृत्य आश्रित्य, प्रयत्नः वैरनिर्य्यातनप्रयासः, सर्वार्थसिद्धिप्रतिष्ठापनार्थमिति भावः, कृतः, मयेति गद्यस्थेनान्वयि। ततः तस्मिन् शैलेश्वरे, हते राज्यार्द्धपरिपणनप्रलोभनेन शत्रो विमेद्य स्वायत्तीकृते पर्वतके कृतया विषकन्यया विनाशिते इत्यर्थः, चाणक्येनेति शेषः, अस्य शैलेश्वरस्य, तनयं मलयकेतुम्, अधिकृत्य प्रयत्नः कृतः इति पूर्ववाक्यमत्रानुषज्यते ; तथाऽपि असिद्धिः कार्य्यासिद्धिः, वैरनिर्य्यातनसिद्धिः न जाता इत्यर्थः, एतत्समर्थनायाह, दैवमिति।—हि यतः, दैवम् एव नन्दकुलशत्रुः प्रतिकूलत्वात् घातक इव, असौ विप्रः चाणक्यः, न,

अहो ! विवेकशून्यता म्लेच्छस्य मलयकेतोः । कुतः ?—

यो नष्टानपि जीवनाशमधुना शुश्रूषते स्वामिनः,
तेषां वैरिभिरच्युतः कथमसौ सन्धास्यते राक्षसः ? ।
इत्थं वस्तुविवेकमूढमतिना म्लेच्छेन नालोचितं,
दैवेनोपहतस्य बुद्धिरथवा पूर्वं विपर्य्येस्यति ॥ ८ ॥

तत् इदानीमपि तावत् अरातिहस्तगतो विनश्येत् राक्षसः, न तु चन्द्रगुप्तेन सह सन्धिं कुर्य्यादिति ; अथवा मम कामम् असत्यसन्ध इति वरम् अयशः, न पुनः शत्रुवचनपरिभूतिः । (ध)

---

शत्रुरित्यनुषङ्गः । दैवमेव प्रबलं, किमनेन ब्राह्मणमात्रेण कर्त्तुं शक्यम् इत्यनादरेण विप्रः इत्युक्तम् । [अत्र पादत्रये चतुर्थपादवाक्यं हेतुरिति काव्यलिङ्गं, तथा अप्रश्नपूर्वक-व्यावर्त्यव्यवच्छेदेन दैवावस्थापनात् परिसङ्ख्याऽलङ्कारः इत्यनयोः संसृष्टिः ] । वसन्ततिलकं वृत्तम् ॥ ७ ॥

प्रभोर्विनाशे सति तदनुगतभृत्यस्य न युक्तम् अक्षतशरीरेण जीवितुं न वा शत्रुभिः सङ्गन्तुम् इति आह, य इति ।—यो राक्षस, नष्टान् मृतान् अपि, स्वामिनः अधुनाऽपि जीवनाशं प्राणान्तपर्य्यन्तं, [ "गोदोहमास्ते" इत्यादिवत् भावस्य कर्मता ; यद्वा—अन्तर्भावितण्यर्थोऽयं प्रयोगः, समूलं नष्टान् इत्यर्थः ] शुश्रूषते तत्कर्त्तव्यवैरनिर्य्यातनस्य सम्पादनाय प्रवर्त्तमानत्वात् तदाराधनमिव करोतीति भावः, [ "ज्ञाश्रुस्मृदृशां सनः" (१।३।५७ पा० ) इति तङ् ] अच्युतः अनाहतः, सम्पूर्णसुहृदः इत्यर्थः, असौ राक्षसः, तेषां स्वामिनां, वैरिभिः शत्रुभिः सह, कथं सन्धास्यते ? सङ्गंस्यते ? न कथमपीत्यर्थः । वस्तुविवेकमूढमतिना सदसद्विवेकरहितेन, म्लेच्छेन मलयकेतुना, इत्थं पूर्वोक्तरूपं, न आलोचितं न विचारितम् ; अथवा दैवेन भाग्येन, उपहतस्य विडम्बितस्य, हतभाग्यस्य जनस्य इत्यर्थः, बुद्धिः पूर्वमेव विपर्य्येस्यति विपरीता भवति ; "प्रायः समासन्नविपत्तिकाले धियोऽपि पुंसां मलिनीभवन्ति" इति भावः । [ अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ] । शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

(ध) असत्यसन्धः,—मिथ्याप्रतिज्ञः, पूर्वोक्तार्थपरित्यागेन असत्यसन्धो जातः इति अयशः मम कामं वरम् इत्यङ्गीकारे । शत्रुवचनपरिभूतिः,—शत्रूणां वचनेन परिभूतिः,—परिभवः, तिरस्कार इत्यर्थः । अथवा शत्रुः चन्द्रगुप्तेन सह सख्यकरणात् निःसहायस्य मम तद्वशगतत्वेन प्राणत्यागावश्यम्भावित्वात् "शत्रुः

[ समन्तात् अवलोक्य सास्रम् ] । एतास्ता देवस्य पादचङ्क्रमणपरिचय-पवित्रीकृतरथ्याः कुसुमपुरोपकण्ठभूमयः ।

इह हि—

शार्ङ्गज्याकृष्टिमुक्तप्रशिथिलकविकाप्रग्रहेणात्र देशे
देवेनाकारि चित्रं प्रजवितुरगं बाणमोक्षश्चलेषु ।
अस्यामुद्यानराजौ स्थितमिह कथितं राजभिस्तैर्विनेत्थं
सम्प्रत्यालोक्यमानाः कुसुमपुरभुवो भूयसा दुःखयन्ति ॥९॥

तत् क्व खलु गच्छामि मन्दभाग्यः ? [ विलोक्य ] । भवतु, दृष्टमेतज्जीर्णोद्यानम्, अत्र प्रविश्य कुतश्चिच्चन्दनदासस्य वृत्तान्तम् उपलप्स्ये । [ परिक्रम्य स्वगतम् ] । अहो !! अलक्षितोपनिपाताः

---

प्रतिज्ञातोऽयं राक्षसः" इति लोके प्रसृतमयशोऽपि मम प्रियं, न तु शत्रुभिः सह सन्धिकरणात् तेषां सोल्लुण्ठनतोच्चारितवाक्येन तिरस्कारसहनं वरमिति बोधयति ।

महाराजनन्दस्य मृगयानैपुण्यं प्रख्यापयन्नाह, शार्ङ्गेति ।—अत्र देशे देवेन नन्देन, शार्ङ्गस्य धनुषः, ज्यया मौर्व्याः, या आकृष्टिः आकर्षणं, तया हेतुना मुक्ताः त्यक्ताः, अत एव प्रशिथिलः श्लथः, कविकाप्रग्रहः वल्गाग्रहणं येन तथाभूतेन सता, चलेषु चञ्चलेषु, प्राणभयेन द्रुतपलायनादिति भावः, मृगेषु इति शेषः, प्रजवितुरगं प्रजवितः प्रकृष्टवेगः, मृगानुसरणार्थमिति भावः, तुरगः यत्र तत, अत एव चित्रं यथा तथा बाणमोक्षः शरनिक्षेपः अकारि कृतः । [ वल्गाग्रहणमन्तरेण वेगवदश्वपृष्ठस्थितेन चञ्चललक्ष्ये शरनिक्षेपकरणम् आश्चर्यजनकम् इत्यभिप्रायेण चित्रमिति उपन्यस्तम् ] । अस्याम् उद्यानराजौ उपवनप्रदेशेषु, राजभिः सह स्थितम्, इह अस्मिन् प्रदेशे, कथितम् आलपितम् ; [ उभयत्र भावे निष्ठा ] सम्प्रति इदानीं, तैः नन्देन तत्पार्श्वचरैश्च राजभिः, विना इत्थम् एवंप्रकारेण, आलोक्यमानाः दृश्यमानाः, कुसुमपुरभुवः भूयसा आधिक्येन, दुःखयन्ति दुःखवतः कुर्वन्ति, अस्मानिति शेषः । [ दुःखयन्ति दुःखशब्दात् तत्करोतीत्यर्थे णिच्, णौ इष्ठवद्भावात् मतुपो लुक् । अत्र यथावद्वस्तुवर्णनात् स्वभावोक्तिरलङ्कारः, "स्वभावोक्तिरसौ चारु यथावद्वस्तुवर्णनम्" इति काव्यप्रकाशोक्तेः ; बह्वीनां क्रियाणामेककर्तृत्वेन दीपकं, तथा कुसुमपुरभुवां राजभिर्विना अशोभनतया विनोक्तिः इत्येतेषामलङ्काराणां संसृष्टिः ] । स्रग्धरा वृत्तम् ॥ ९ ॥

पुरुषाणां सम-विषमदशाविभागपरिणतयो (न) भवन्ति।
कुतः?—

पौरैरङ्गुलिभिर्नवेन्दुवदहं निर्दिश्यमानः शनैः
यो राजेव पुरा पुरान्निरगमं राज्ञां सहस्रैर्वृतः।
भूयः सम्प्रति सोऽहमेव नगरे तत्रैव बन्ध्यश्रमो
जीर्णोद्यानकमेव तस्कर इव त्रासात् विशामि द्रुतम्॥१०॥

अथवा, येषां प्रसादादिदम् आसीत् ते एव न सन्ति।

---

(न) अलक्षितोपनिपाताः,—अलक्षिताः,—अतर्किताः, उपनिपाताः,—आगमाः यासां तादृश्यः। सम-विषमदशाविभागपरिणतयः,—समाः,—समभावेन स्थिताः, विषमाः,—तद्विपरीताश्च, या दशाः,—अवस्थाः, तासां विभागाः तेषां परिणतयः,—परिपाकाः; "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इत्युक्तेः, पुरुषाणाम् अवस्थाः कदा कीदृश्यः सम्पद्यन्ते इति केनापि न तर्कयितुं शक्यते इत्याशयः। "स्त्रियाश्चरित्रं पुरुषस्य भाग्यं देवा न जानन्ति कुतो मनुष्याः?" इत्युक्तेः इति भावः।

चक्रनेमिक्रमेण परिपतितदशान्तरमुपागतस्य स्वस्य कीदृशी अवस्था जाता इति प्रकटयन्नाह, पौरैरिति।—योऽहं पुरा राज्ञां सहस्रैः वृतः अत एव पौरैः पुरवासिभिः, नवेन्दुवत् नवेन्दुना तुल्यं, ["तेन तुल्यं क्रिया चेद्वतिः" (५।१।११५ पा०) इति वति-प्रत्ययः] नवोदितः चन्द्र इव इत्यर्थः; अङ्गुलिभिः शनैः निःशब्दं यथा तथा, निर्दिश्यमानः सन् राजेव नृपतिरिव, पुरात् नगरात्, निरगमं निर्गतवान्, स एव अहं सम्प्रति इदानीं, बन्ध्यश्रमः विफलप्रयासः सन्, तस्करः चौर इव, [तत् करोति इति तस्करः "तद्बृहतोः कर-पत्योश्चौर-देवतयोः सुट् तलोपश्च" (वा०) इति सुट् तलोपश्च] भूयः पुनः, तत्रैव नगरे जीर्णोद्यानकमेव, न तु राजभवनं, त्रासात् भयात्, द्रुतं कश्चित् पश्येदिति भिया शीघ्रं, विशामि। [अत्र एकस्मिन् मयि दशायाः विभागपरिपाकस्य विभिन्नत्वेन दृष्टत्वात् प्राक् च तस्यानवगतेः अलक्षितोपनिपात इति विशेषेण सामान्य-समर्थनरूपोऽर्थान्तरन्यासः; स च "नवेन्दुवत्" "राजेव" "तस्कर इव" एषु च जाय-मानेन उपमात्रयेण, एकस्मिन् राजनि पर्यायेण सम-विषमदशयोर्वृत्तेः पर्यायालङ्कारेण च संसृज्यते]। शार्दूलविक्रीडितं वृत्तम्॥१०॥

[ नाट्येन प्रविश्य विलोक्य च ]। अहो ! जीर्णोद्यानस्य न अभिरमणीयता । (प) अत्र हि—

विपर्यस्तं सौधं कुलमिव महारम्भरचनं
सरः शुष्कं साधोर्हृदयमिव नाशेन सुहृदः ।
फलैर्हीना वृक्षा विगुणविधियोगादिव नयाः
तृणैश्छन्ना भूमिर्मतिरिव कुनीत्या ह्यविदुषः ॥ ११ ॥

अपि च अत्र—

क्षताङ्गानां तीक्ष्णैः परशुभिरुदग्रैः क्षितिरुहां
रुजा कूजन्तीनामविरतकपोतोपरुदितैः ।
स्वनिर्मोकच्छेदैः परिचितपरिक्लेशकृपया
श्वसन्तः शाखानां व्रणमिव निबध्नन्ति फणिनः ॥ १२ ॥

---

(प) अभिरमणीयता—मनोहारित्वम् ।

प्रतिकूलतामुपगते हि विधौ सकलानामेव भवति विपर्यासः इति प्रदर्शयन्नाह, विपर्यस्तमिति ।—महारम्भरचनं महता आरम्भेण उद्योगेन, रचना यस्य, यद्वा—महान् आरम्भो यस्याः तादृशी रचना यस्य तादृशं, सौधं सुधासंस्कृतं राजभवनादि, कुलमिव मन्दवंश इव विपर्यस्तं पतितं विनष्टञ्च ; सरः सरसी, सुहृदः नाशेन बन्धुवियोगेन, साधोः हृदयमिव शुष्कं निर्जलम् उपतापयुक्तञ्च ; ["शुषः कः" (८।२।५१ पा०) इति निष्ठायाः कः] ; वृक्षाः विगुणविधियोगात् विगुणस्य प्रतिकूलस्य, विधेर्भाग्यस्य, योगात्, दुर्दैववशात् इत्यर्थः, नयाः नीतिप्रयोगा इव, फलैः शस्यैः लाभैश्च, हीनाः ; भूमिः उद्यानभूः, कुनीत्या दुष्टनयेन, अविदुषः अज्ञस्य जनस्य, मतिः बुद्धिः इव, हि निश्चये, तृणैः घासादिभिः, छन्ना आच्छादिता । [ "वा दान्तशान्त—"(७।२।२७ पा०) इति छादयतेः निष्ठायां निपातः ] मूर्खस्य मलयकेतोः बुद्धिः भागुरायणादीनाम् असदुपदेशैरत्यन्तं विभ्रान्तं जाता इति निष्कर्षः । [ अत्र उपमाचतुष्टयं श्लेषश्च, तथा जीर्णोद्यानवर्णनव्याजेन सौधकुलादीनामुपमया नन्दकुलविनाशः, तेन स्वहृदय-परिशोषः, मलयकेतुयोगात् स्वनयवैफल्यं, मलयकेतुमतिविमोहश्च भागुरायणकुनीतिश्च इत्येतानि व्यज्यन्ते इत्यलङ्कारेण वस्तुध्वनिः ]। शिखरिणी वृत्तम् ॥ ११ ॥

ये पुनः पूर्वमुद्यानपालकैः सततं यत्नमुपसेविताः, इदानीं तदभावात् तेषामपि कीदृक् दशाविपर्यासः सञ्जात तमेव द्वाभ्यां प्रकटयति, क्षताङ्गानामिति ।—फणिनः

एते च तपस्विनः,—

अन्तःशरीरपरिशोषमुपाश्रयन्तः
कीटक्षतिस्रुतिभिरस्रमिवोद्वमन्तः ।
छायावियोगमलिना व्यसने निमग्ना
वृक्षाः श्मशानमुपगन्तुमिव प्रवृत्ताः ॥ १३ ॥

---

सर्पाः, उदग्रैः उच्छ्रितायैः, तीक्ष्णैः निशितैः, परशुभिः कुठारैः, क्षताङ्गानां छिन्नावयवानां, रुजा व्यथया पीडया, [ हेतौ तृतीया ] अविरतकपोतोपरुदितैः अविरतानि कपोतानां पारावतानाम्, उपरुदितानि तैः, तच्छब्देन इत्यर्थः, [ अपह्नुतिरलङ्कारः ] कूजन्तीनाम् अव्यक्तशब्दं कुर्वतीनाम् इव, [ प्रतीयमानोत्प्रेक्षा ] चिरनिबद्धां वृक्षाणां, शाखानां परिचितपरिक्लेशकृपया परिचितानां सततसङ्गतया जातपरिचयानां, शाखानामिति भावः, परिक्लेशेन क्लेशदर्शनेन, या कृपा दया तया हेतुना, श्वसन्तः दीर्घनिश्वासमिव त्यजन्तः सन्तः, [ फणिनां स्वाभाविकं श्वसनं कृपाहेतुत्वेन उत्प्रेक्ष्यते ] स्वनिर्मोकपट्टैः निजकञ्चुकखण्डैः, निजकञ्चुकरूपवस्त्रखण्डैरिति भावः, व्रणं क्षतमिव, निबध्नन्ति वस्त्राकारकञ्चुकेन वेष्टयन्ति । [ यथा क्षतस्थाने वस्त्रबन्धनं स्वजनाः कुर्वन्ति, यथा वा साधारणः कश्चित् स्वाश्रयदातुः क्षतजन्यक्लेशदर्शनदुःखातुरः सततोष्णश्वासान् भृशं मुञ्चन् वस्त्रखण्डैः तद्व्रणं निबध्नाति, तथा सर्पाः चिरपरिचित-शाखानां कृपया कुर्वन्तीव इत्युत्प्रेक्षा, तथा कपोतरुदितैः इत्यपह्नुतिः, ते च प्रकृतेषु कूजितकपोतसङ्घेषु वृक्षशाखारूपोपमेयेषु छेदनकालिकमहात्रासक्रन्दनाबलाधर्माणाम् उपमानसम्पदां समारोपात् समासोक्त्युद्दीपिते इत्यवगन्तव्यं, ताभ्याञ्च शोकाकुलः राक्षसः स्वदुःखसुखस्य कस्यापि मित्रस्य समवेदनामवैयते इति वस्तुध्वनिः ] । शिखरिणी वृत्तम् ॥ १२ ॥

अन्तःशरीरेति ।—[तपस्विनः इति गद्यस्थपदमत्रानुषञ्जनीयम्] तपस्विनः दीनाः, वृक्षाः अन्तःशरीरस्य शरीराभ्यन्तरस्य, परिशोषं सलिलसेकाभावात् शोषणम्, उपाश्रयन्तः प्राप्नुवन्तः, तथा कीटक्षतिस्रुतिभिः कीटदंशनजरन्ध्रनिर्गतनिर्यासैः, अस्रम् अश्रु, उद्वमन्त इव, [ तपस्विनो हि आहारादिसंयमात् शरीरं शोषयन्ति, आत्मदेवतासमीपे स्वदुःखं निवेदयितुं अश्रूण्यपि पातयन्ति इति प्रसिद्धिः । "कीटक्षतिं शुचमिवातिगुरुं वहन्तः" इति पाठे तु—अतिगुरुम् अतिमहतीं शुचं शोकमिव, कीटक्षतिं कीटैरुपघातं, वहन्तः] छायावियोगेन निष्पत्रतया छायाराहित्येन, मलिनाः शुष्काः अप्रसन्ना वा, अत एव

तत् यावत् अस्मिन् विषमदशापरिणामसुलभे भग्नाग्रशिला-तले (फ) मुहूर्त्तम् उपविशामि। [उपविश्य आकर्ण्य च]। अये! किमयम् आकस्मिकः शङ्खपटहविमिश्रो नान्दीनादः श्रूयते!! य एषः,—

प्रकुर्वन् श्रोतॄणां श्रुतिपथमसारं गुरुतया
बहुत्वात् प्रासादैः सपदि परिपीतोज्झित इव।
असौ नान्दीनादः पटुपटहशङ्खध्वनिमहान्
दिशां दैर्घ्यं द्रष्टुं प्रसरति सकौतूहल इव॥ १४॥

---

व्यसने विपदि, वैराग्यरूपे इत्यर्थः, निमग्नाः कृतवैराग्यावलम्बनाः सन्तः, यद्वा—छायावियोगमलिना आतपक्लिष्टाः, व्यसने निमग्नाः नन्दयन्त्य इव, श्मशानं नन्दानां पितृवनम्, उपगन्तुं मरणार्थमिति भावः, प्रवृत्ता उद्युक्ताः इव। [ सततसुमन-सौष्ठवरहितानाम् उद्यानतरूणां, नन्दानां शोकेनेव तान् अनुगन्तुं कृतव्यव-सायता उत्प्रेक्ष्यते इति उत्प्रेक्षाऽलङ्कारः; स च आसन्नविच्छेदकातराणां लोकानां मरणव्यवसायावलम्बरूपं व्यवहारम् उत्थापयतीति समासोक्तिं ध्वनयति]। वसन्त-तिलकं वृत्तम्॥ १३॥

(फ) विषमदशापरिणामसुलभे—विषमा या दशा—अवस्था, तस्याः परिणामः,—परिणतिः, शेषभागः इति यावत्, तत्र इव सुलभे; मम ईदृशदशायां यादृशमासनं सुलभं भवितुमर्हति, तादृशेऽस्मिन् शिलातले इत्यर्थः। भग्नाग्रशिलातले—भग्नम् अग्रं यस्य तादृशं यत् शिलातलं—प्रस्तरखण्डः तस्मिन्।

शिलातलमुपविष्टो राघवः सहसा समुत्थितं दिक्षु प्रसरन्तं नान्दीनादमाकर्ण्य तमेव विवृण्वन्नाह, प्रकुर्वन्निति।—गुरुतया महत्तया, श्रोतॄणां श्रुतिपथं श्रवणविवरम्, असारं नास्ति सारः बलम्, अन्यशब्दश्रवणशक्तिर्यस्य तम् अतिदुर्बलं, पूर्णतया अपरशब्दे अक्षममित्यर्थः, यद्वा—नास्ति सारः प्रसारः, विस्तार इति यावत् यस्य तमसारं सङ्कुचित-मित्यर्थः, प्रकुर्वन्, [ "प्रकुर्वन्" इत्यत्र "प्रमृद्नन्" इति पाठे—प्रमृद्नन् पीडयन्; यथा सङ्कुचिते रन्ध्रे गुरु मुद्गरादिः प्रविशन् तदुपमृद्नाति तद्वत् इत्यर्थः] बहुत्वात् बाहुल्यात्, प्रासादैः राजभवनैः, सपदि झटिति, परिपीतोज्झितः आदौ परिपीतः पश्चात् उज्झितः परित्यक्तः, उद्गीर्ण इवेति यावत्, बहुलपीतं जलादिकं यथा लोका उद्गिरन्ति तथा अतः असन्तं नान्दीनादं प्रतिध्वनिव्याजेन सौधा उद्गिरन्ति इव इति भावः,

[विचिन्त्य]। आं, ज्ञातम्, एष (क) हि मलयकेतुसंयमनजातं राजकुलस्य--[इत्यर्द्धोक्ते सासूयम्]। (भ) मौर्य्यकुलस्य अधिकपरितोषं पिशुनयति (म)। [सवाष्पम्]। कष्टं भोः! कष्टम्!!—

आवितोऽस्मि श्रियं शत्रोरभिनीय च दर्शितः।

अनुभावयितुं मन्ये यत्नः सम्प्रति मां विधेः॥ १५॥

पुरु। आसीणो अअं। ता जाव अज्जचाणक्कस्स आणत्तिं संपादेमि। * [राक्षसमपश्यन्निव तस्याग्रतो रज्जुपाशेन कण्ठम् उद्बध्नाति]।

राक्ष। [विलोक्य स्वगतम्]। अये! कथम्!! अयमात्मानम् उद्बध्नाति!! नूनमयम् अहमिव दुःखितः तपस्वी। भवतु, पृच्छामि एनम्। [उपसृत्य प्रकाशम्]। भद्र! भद्र! किम् इदम् अनुष्ठीयते?

पुरु। [सवाष्पम्]। अज्ज! जं पिअवअस्सविणासदुक्खिदो अम्हारिसो मंदभाओ जणो अणुचिट्ठदि। † (य)

---

* आसीनोऽयम्। तत् यावदार्य्यचाणक्यस्य आज्ञाम् सम्पादयामि।

† आर्य्य! यत् प्रियवयस्यविनाशदुःखितः अस्मादृशो मन्दभाग्यो जनोऽनुतिष्ठति।

---

पटुपटहशङ्खध्वनिमहान् पटूनां दृढानां, तीव्रनादानामित्यर्थः, पटहानां वाद्यभेदानां, शङ्खानाञ्च ध्वनिभिः महान् अतिप्रवृद्धः, असौ नान्दीनादः अभ्युदयार्थाशीर्वचनशब्दः, मङ्गलतूर्य्यध्वनिः वा, दिशां दैर्घ्यं द्रष्टुं सकौतूहलः कौतुकवान् इव, प्रसरति समन्तात् विस्तारं गच्छति। [अत्र दिशाम् आयामदर्शनार्थं कौतुकौत्सुक्येन प्रेरित इव अतिप्रवृद्धः नान्दीनादः दिङ्मण्डलमापूरयतीत्युत्प्रेक्ष्यते इत्युत्प्रेक्षाऽलङ्कारः]। शिखरिणी वृत्तम्॥ १४॥

(क) एषः,—नान्दीनादः।

(भ) सासूयं—मौर्य्ये राजशब्दं प्रयोक्तुम् असूया—द्वेषः, तेन सह वर्त्तमानम्।

(म) पिशुनयति—सूचयति।

आवित इति।—शत्रोः श्रियं आवितोऽस्मि; सम्प्रति अभिनीय व्यक्तकर्त्तृरूप-त्वया, माम् अनुभावयितुं चन्दनदासविपद्विमोचनानुरोधेन हृदमिव विचित्रवागुराबद्ध-मृगे पतितम् इति बोधयितुं, विधेः यत्नो दर्शित इति मन्ये। [अत्रोत्प्रेक्षाऽलङ्कारः]। पथ्यावक्त्रं वृत्तम्॥ १५॥

(य) तदेवानुष्ठीयते इत्युत्तराशयः।

राक्ष। [स्वगतम्]। प्रथममेव तावत् मया ज्ञातं, नूनम् अहमिव अयमार्त्तः तपस्वीति। भवतु, पृच्छामि एनम्। [प्रकाशम्]। भद्र! व्यसनसब्रह्मचारिन्! यदि न गुह्यं, न अतिभारिकं (र) वा, ततः श्रोतुम् इच्छामि, किं ते प्राणपरित्यागकारणम्?

पुरु। [निश्वस्य]। अज्ज! ण रहस्सं, ण वा अतिगुरुअं, किंतु ण सक्कणोमि पिअवअस्स-विणासदुक्खिदहिअओ एत्तिअ-मेत्तंपि मरणस्स कालहरणं कादुं। *

राक्ष। [निश्वस्य आत्मगतम्]। कष्टम्!! एतेषु सुहृद्व्यसनेषु परवत् उदासीनाः प्रत्यादिश्यामहे (ल) वयमनेन। [प्रकाशम्]। भद्र! यदि न रहस्यं, न अतिगुरुकं वा, तत् पुनः श्रोतुम् इच्छामि, कथ्यतां, का गतिः दुःखस्येति? (व)

---

* आर्य! न रहस्यं, न वा अतिगुरुकं, किन्तु न शक्नोमि प्रियवयस्य-विनाश-दुःखितहृदय एतावन्मात्रमपि मरणस्य कालहरणं कर्त्तुम्।

---

(र) व्यसनसब्रह्मचारिन्!—व्यसनेन—विपदा, सब्रह्मचारिन्!—सहाध्यायिन्! समानव्यसन इत्यर्थः। अतिभारिकम्—अतिमहत्, [अतिभाराय हितम् अतिभारिकम्—अतिगुरुकमित्यर्थे, यद्वा—अतिभारः अस्य अस्ति इति अतिभारिकम् "अतः इनि-ठनौ" (५।२।११५, पा०) इति मत्वर्थीयः ठन्]।

(ल) परवत्—परेण तुल्यम्। ("परम्" इति पाठः साधुतरः) उदासीनाः,—अकृतप्रतीकारा इत्यर्थः। प्रत्यादिश्यामहे—निराक्रियामहे, तिरस्क्रियामहे इति यावत्; यद्वा—एतेषु—एवंविधेषु, सुहृद्व्यसनेषु परवत्—परेण तुल्यम्, उदासीनाः तत्प्रतीकाराय अकृतोद्योगत्वात्, अनेन—पाशहस्तपुरुषेण, वयं प्रत्यादिश्यामहे—मदनुष्ठितपथेन त्वया गन्तव्यम् इत्युपदिश्यामहे, परवदुदासीनतया न स्थेयम् इति निराक्रियामहे वा इत्यर्थः।

(व) का गतिः?—किं कारणम्? गम्यतेऽनया इति गतिः,—प्राप्त्युपायः, दुःखस्य प्राप्तिकारणमित्यर्थः। यद्वा—आगतिः,—आगमनं, का—कीदृशी? कथं ते दुःखमागतम्? इत्यर्थः।

पुरु। अज्ज !! णिब्बन्धो (अ) अज्जस्स: का गदी, एसो णिवेदेमि, अत्थि एत्थ णअरे मणिआरसेट्ठी जिस्णुदासो णाम। *

राज। [ स्वगतम् ]। अस्ति जिष्णुदासः चन्दनदासस्य परं मित्रम्। [ प्रकाशम् ]। किं तस्य ?

पुरु। सो मम प्पिअवअस्सो। †

राज। [ सहर्षम् आत्मगतम् ]। अये ! प्रियवयस्य इत्याह; अत्यन्तसन्निकृष्टसम्बन्धः। हन्त !! ज्ञास्यति चन्दनदासस्य वृत्तान्तम्। [ प्रकाशम् ]। भद्र ! किं तस्य ?

पुरु। [ सवाष्पम् ]। संपदं सो दीणअणदिण्णविहवो जलणं प्पविसिदुकामो णअरादो णिक्कन्तो। ता अहंपि जाव तस्स प्पिअवअस्सस्स असुणिदव्वं ण सुणेमि, ताव अत्ताणं उब्बंधिअ वावादेमि त्ति इमं जिस्णुज्जाणं आअदो। ‡

राज। भद्र ! अथ अग्निप्रवेशे तव सुहृदः को हेतुः ?—

किमौषधपथातिगैरुपहतो महाव्याधिभिः ?

---

* अहो !! निर्बन्धः आर्य्यस्य ; का गतिः, एष निवेदयामि, अस्ति अत्र नगरे मणिकारश्रेष्ठी जिष्णुदासो नाम।

† स मम प्रियवयस्यः।

‡ साम्प्रतं स दीनजनदत्तविभवो ज्वलनं प्रवेष्टुकामो नगरात् निष्क्रान्तः। तत् अहमपि यावत् तस्य प्रियवयस्यस्य अश्रोतव्यं न शृणोमि, तावदात्मानमुद्बध्य व्यापादयामीति इमं जीर्णोद्यानमागतः।

---

(अ) निर्बन्धः,—आग्रहः।

अचिकित्स्यो महाव्याधिः, राजकोपः, अगम्यगुरुदारादिषु आसक्तिः, अप्रतिकार्य्यसुहृद्विनाशश्च इत्येतानि आत्मघातनिमित्तानि, तेषु किं सञ्जातम् इति ज्ञातुकाम आह, किमौषधपथातिगैरिति।—औषधपथातिगैः औषधपथम् औषधप्रतीकार्य्यतारूपम् उपायम्, अतिगच्छन्ति इति तादृशैः औषधाप्रतिविधेयैः, महाव्याधिभिः अत्युत्कटरोगैः, उपहतः आक्रान्तः, किम् ? अप्रतीकार्य्यरोगस्य असह्यतया

पुरु । अज्ज ! ण हि ण हि । * (क)

राज । किमग्निविषकल्पया नरपतेर्निरस्तः क्रुधा ? ।

पुरु । अज्ज ! संतं पावं, संतं पावं । चंदउत्तस्स जणवदेसु अणिसंसा पडिवत्ती । † (ख)

राज । अलभ्यमनुरक्तवान् किमयमन्यनारीजनम् ?

पुरु । [ कर्णौ पिधाय ] । अज्ज ! संतं पावं, संतं पावं । अभूमी क्खु एसो विणअणिधाणस्स सेट्ठिजणस्स, विसेसदो जिण्हुदासस्स । ‡ (ग)

राज । किमस्य भवतो यथा सुहृद एव नाशो विषम् ? ॥१६॥

* आर्य ! न हि न हि ।

† आर्य ! शान्तं पापं, शान्तं पापम् । चन्द्रगुप्तस्य जनपदेषु अनृशंसा प्रतिपत्तिः ।

‡ आर्य ! शान्तं पापं, शान्तं पापम् । अभूमिः खलु एष विनयनिधानस्य वणिग्जनस्य, विशेषतो जिष्णुदासस्य ।

तदाक्रान्तस्य मरणव्यवसायसम्भवादिति भावः । इति प्रथमचरणेनैकः प्रश्नः, एवमुत्तरचरणत्रयेणापि प्रश्नत्रयम् ।—

( क ) न हीति ।—रोगाक्रान्ततया तस्य न मरणव्यवसाय इत्यर्थः ।

किमिति ।—अग्निविषकल्पया अग्नितुल्यया विषतुल्यया च, नरपतेः राज्ञः, क्रुधा कोपेन, निरस्तः प्रताडितः, किम् ? गुरुतरराजदण्डभयादपि लोकस्य मरणप्रवृत्तिदर्शनादिति भावः ।—

( ख ) चन्द्रगुप्तस्येति ।—जनपदेषु चन्द्रगुप्तस्य प्रतिपत्तिः,—व्यवहारः, अनृशंसा—अघातुका, लोकहिंसाजनकत्वाभावात् तद्व्यवहारस्य ।

अलभ्यमिति ।—अयं तव बन्धुः, अलभ्य दुर्लभम्, अन्यनारीजनं परकीयां कान्ताम्, अनुरक्तवान् किम् ? यदासक्तजनवस्तुदप्राप्तौ मनोदुःखेनापि मरणप्रवृत्तिसम्भवादिति भावः ।—

( ग ) विनयनिधानस्य वणिग्जनस्य एषः,—परनारीजनानुरागः, अभूमिः,—अविषयः खलु ।

किमिति ।—अस्य भवतः तव, सुहृदो मित्रस्य जिष्णुदासस्य, नाश एव

पुरु। अज्ज! अध इं। * (क)

राक्ष। [सावेगम् आत्मगतम्]। चन्दनदासोऽस्य सुहृदः प्रियसुहृत्तमः, तस्य प्रियसुहृद्विनाश एव अग्निप्रवेशहेतुरिति यत् समाकुलित एव अस्य सुहृत्स्नेहपक्षपातिना हृदयेन। [प्रकाशम्]। भद्र! तस्यापि तव सुहृदः सुचरितं विस्तरेण श्रोतुम् इच्छामि।

पुरु। अज्ज! अदो अवरं ण सक्कणोमि मंदभाओ मरणस्स विग्घमुप्पादेदुं। †

राक्ष। अवश्या कथां कथयतु भद्रमुखः।

पुरु। का गदी ; एसो क्खु णिवेदेमि, णिसामेदु अज्जो। ‡

राक्ष। भद्र! दत्तावधानोऽस्मि।

पुरु। अत्थि, जाणादि अज्जो, एत्थ णअरे मणिआरसेट्ठी चंदणदासो णाम ? §

राक्ष। [सविषादम् आत्मगतम्]। एतत् तदपावृतमस्मद्विनाशदीक्षाप्रकाशद्वारं दैवेन। (ख) हृदय! स्थिरीभव, किमपि ते कष्टतरम् आकर्णनीयम्। [प्रकाशम्]। भद्र! श्रूयते मित्रवत्सलः स साधुः। किं तस्य ?

---

* आर्य्य! अथ किम् ?

† आर्य्य! अतोऽपरं न शक्नोमि मन्दभाग्यो मरणस्य विघ्नमुत्पादयितुम्।

‡ का गतिः ; एष खलु निवेदयामि, निशामयतु आर्य्यः।

§ अस्ति, जानाति आर्य्यः, अत्र नगरे मणिकारश्रेष्ठी चन्दनदासो नाम ?

---

विषं मरणहेतुः, तथा ममापि जिष्णुदासस्य, सुहृदन्तरस्य नाशः विषमेव किम् ? ["नाशोऽवशः" इति पाठे—अप्रतीकार्य्य इति तदर्थः। उपमाऽनुप्राणितं रूपकम्। "अवशः" इति पाठे—उपमैव] ॥ १६ ॥

(क) अधेति।—सुहृन्नाश एव मरणहेतुः इत्यर्थः।

(ख) अस्मदिति।—अस्मद्विनाशस्य दीक्षायाः,—उपदेशस्य, प्रकाशद्वारं—बहिर्द्वारम्, प्रायणमार्ग इति यावत्, दैवेन—भाग्येन, एतदपावृतम्—उद्घाटितम्।

पुरु। सो एदस्स जिसुदासस्स पिअवअस्सो होदि। *

राक्ष। [स्वगतम्]। अयमभ्यर्णः (ग) शोकवज्रपातो हृदयस्य। [प्रकाशम्]। ततस्ततः?

पुरु। तदो जिसुदासेण पिअवअस्सस्स सिणेहसरिसं अज्ज विसत्तो चंदउत्तो। †

राक्ष। कथय किमिति?

पुरु। देव! अत्थि मे गेहे कुडुम्बभरणपज्जत्तो अत्थो, तस्स विणिमएण मुंचिज्जदु मे पिअवअस्सो चंदणदासो त्ति। ‡ (घ)

राक्ष। [स्वगतम्]। साधु जिष्णुदास! साधु। अहो दर्शितो मित्रस्नेहः। कुतः?—

पितॄन् पुत्राः पुत्रान् परवदभिहिंसन्ति पितरो
यदर्थं सौहार्दं सुहृदि च समुज्झन्ति सुहृदः।

---

* स एतस्य जिष्णुदासस्य प्रियवयस्यो भवति।

† ततो जिष्णुदासेन प्रियवयस्यस्य स्नेहसदृशमद्य विज्ञप्तश्चन्द्रगुप्तः।

‡ देव! अस्ति मे गेहे कुटुम्बभरणपर्य्याप्तोऽर्थः, तस्य विनिमयेन मुच्यतां मे प्रियवयस्यश्चन्दनदास इति।

---

(ग) अभ्यर्णः,—आसन्नः, शीघ्रभावीत्यर्थः। [अभिपूर्वात् अर्दतेः क्त-प्रत्यये कृते "अभेश्चाविदूर्य्ये" (७।२।२५ पा०) इति इडभावे "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" (८।२।४२ पा०) इति दकार-तकारयोः नत्वे "रषाभ्यां नो णः समानपदे" (८।४।१ पा०) इति पूर्वस्य "ष्टुना ष्टुः" (८।४।४१ पा०) इति परस्य च णत्वे "झलो यमां यमि लोपः" (८।४।६४ पा०) इत्यनेन पाक्षिक'ण'लोपे अभ्यर्ण इति पदं सिद्धम्]।

(घ) कुटुम्बभरणपर्य्याप्तो न अधिकः, तेन तस्य अत्यान्यल्पेऽपि सुहृन्मोचनाय दातव्यताकथनात् अतीवात्मनः सुहृद्विपदुद्धारैकप्रवणता सूचिता।

स्वार्थपरवशेऽस्मिन् जगति वणिजोऽपि जिष्णुदासस्य कष्टोपार्जितसर्ववित्तविनिमयेन मित्रत्राणचिकीर्षां विज्ञायातिविस्मितो राक्षसः अर्थस्य माहात्म्यप्रदर्शनं स्वविषयं

प्रियं सद्यस्त्यक्तुं व्यसनिनि वयस्ये व्यवसित:
कृतार्थोऽयं सोऽर्थस्तव सति वणिक्त्वेऽपि वणिज: ॥१७॥

[प्रकाशम्]। भद्र ! ततस्तथाऽभिहितेन सता किं प्रतिपन्नं मौर्य्येण ?

पुरु। अज्ज ! तदो एवं भणिदेण चंदउत्तेण पडिभणिदो सेट्ठी जिस्णुदासो, "जिस्णुदास ! ण मए अत्थस्स कालणेण सेट्ठी चंदणदासो संजमिदो, किंदु पच्छादिदो जणेण अमच्च-लक्खसस्स घरअणो, बहुसो जाचिदेणावि ण समप्पिदो त्ति। ता जइ अमच्चलक्खसस्स घरअणं समप्पेदि, तदो अत्थि से मोक्खो ; अणधा पाणहरो से दंडो अम्हकोपं पडिमाणेदु

* आर्य्य ! तत एवं भणितेन चन्द्रगुप्तेन प्रतिभणित: श्रेष्ठी जिष्णुदास:, "जिष्णुदास ! न मया अर्थस्य कारणेन श्रेष्ठी चन्दनदास: संयमित:, किन्तु प्रच्छादितो-ऽनेन अमात्यराक्षसस्य गृहजन:, बहुशो याचितेनापि न समर्पित इति। तत् यदि अमात्यराक्षसस्य गृहजनं समर्पयति, ततोऽस्ति अस्य मोक्ष: ; अन्यथा प्राणहरोऽस्य

समर्थयमान आह, पितॄनिति।—यदर्थं यस्मै अर्थाय धनाय इदं यदर्थं यद्धननिमित्त-मित्यर्थ:, [क्रियाविशेषणमिदं] पुत्रा: पितॄन्, पितर: पुत्रान्, परवत परेण तुल्यम्, अभिहिंसन्ति अन्योऽन्यं घ्नन्तीत्यर्थ:, ["अभिसन्धाय" इति पाठे—प्रतार्य्य] सुहृदो मित्राणि च, यदर्थं सुहृदि मित्रे, सौहार्दं स्नेहं, [सुहृदो भाव: सौहार्दं "हृद्भगसिन्ध्वन्ते पूर्वपदस्य च" (७।३।१९ पा०) इत्युभयपदवृद्धि:] समुज्झन्ति त्यजन्ति, वयस्ये प्रियसुहृदि, व्यसनिनि विपन्ने सति, प्रियम्, अपि तम् अर्थम् इत्यध्याहृत्य अन्वय: आर्य्य:, सद्य: सहसा, त्यक्तुं व्यवसित उद्यत:, त्वमिति शेष: ; अत: वणिज: तव वणिक्त्वे सत्यपि, वणिग्जनस्य अर्थममताया दुष्परिहार्य्यत्वादिति भाव:, स: अयम् अर्थ: कृतार्थ: सफल इत्यर्थ:। [अत्र प्रथमपादे "परवत" इति वत्प्रत्ययात् उपमा, चतुर्थपादे अर्थस्य कृतार्थतां प्रति तृतीयपादगतवाक्यार्थस्य हेतुतया काव्यलिङ्गं, तथा "वणिक्त्वेऽपि" इत्यपि-कारेण अर्थव्ययविरोधिवणिक्त्वप्रदर्शनेन विरोधद्योतनात् विरोधश्च इत्येतेषाम् अलङ्काराणां परस्परनिरपेक्षतया संसृष्टि: ]। शिखरिणी वृत्तम् ॥ १७ ॥

त्ति, अण्णो वि जणो जधा एव्वं ण करिस्सदि" त्ति भणिअ वज्झट्ठाणं आणीदो चंदणदासो। तदो "जाव पिअवअस्सस्स चंदणदासस्स असुणिदव्वं ण सुणोमि, दाव ज्जेव अत्ताणअं वावादेमि" त्ति जलणे पविसिदुकामो सेट्ठी जिस्णुदासो णअरादो णिग्गदो। अहं वि जाव पिअवअस्सस्स जिस्णुदासस्स असुणिदव्वं ण सुणोमि, दाव उव्वंधिअ अत्ताणं वावादेमि त्ति इदं जिस्णुज्जाणं आअदो म्हि। *

राक्ष। न खलु व्यापादितः चन्दनदासः ?

पुरु। अज्ज ! ण दाव वावादीअदि। सो क्खु संपदं पुणो पुणो अमच्चरक्खसस्स घरजणं जाचीअदि। ण सो मित्तवच्छल-दाए जाचीअंतोवि तं समप्पेदि। ता एदिणा कालणेण होदि से मरणस्स कालहलणं। †

राक्ष। [सहर्षम् आत्मगतम्]। साधु वयस्य! चन्दनदास! साधु साधु।—

शिवेरिव समुद्भूतं शरणागतरक्षया।
विचीयते त्वया साधो! यशोऽपि सुहृदा विना॥ १८॥

---

दण्डोऽस्मत्कोपं प्रतिमानयतु इति, अन्योऽपि जनो यथा एवं न करिष्यति" इति भणित्वा बध्यस्थानमानीतः चन्दनदासः। ततो "यावत् प्रियवयस्यस्य चन्दनदासस्य अश्रोतव्यं न शृणोमि, तावदेवात्मानं व्यापादयामि" इति ज्वलने प्रवेष्टुकामः श्रेष्ठी जिष्णुदासो नगरान्निर्गतः। अहमपि यावत् प्रियवयस्यस्य जिष्णुदासस्य अश्रोतव्यं न शृणोमि, तावदुद्बध्य आत्मानं व्यापादयामि इति इदं जीर्णोद्यानमागतोऽस्मि।

† आर्य्य! न तावत् व्यापाद्यते। स खलु साम्प्रतं पुनः पुनः अमात्य-राक्षसस्य गृहजनं याच्यते। न स मित्रवत्सलतया याच्यमानोऽपि तं समर्पयति। तदेतेन कारणेन भवति अस्य मरणस्य कालहरणम्।

---

चन्दनदासस्य सुहृदं प्रति कर्णव्यसनमाकर्ण्य प्राणविनिमयेनापि सुहृदुपकारमनु-तिष्ठता तेन लोके चिरस्थायि यशः समुपार्जितमित्याह, शिवेरिवेति।—अत्र इव शब्दो

[प्रकाशम्]। भद्र! भद्र! गच्छ शीघ्रमिदानीं, जिष्णुदासं ज्वलनप्रवेशात् निवारय। अहमपि चन्दनदासं मरणात् (ङ) मोचयामि।

पुरु। अथ केण उण उवाएण अज्जो चंदणदासं मरणादो मोचेदि? *

राक्ष। [खड्गम् आकृष्य]। ननु अनेन व्यवसायमहासुहृदा निस्त्रिंशेन। (च) ननु पश्य—

निस्त्रिंशोऽयं विगतजलदव्योमसङ्काशमूर्त्तिः
युद्धश्रद्धापुलकित इव प्राप्तसख्यः करेण।

---

* अथ केन पुनरुपायेन आर्य्यः चन्दनदासं मरणान्मोचयति?

---

भिन्नक्रमः यशसा सम्बध्यते, एवम् अपि-कारोऽपि भिन्नक्रमः विना-शब्देन अन्वीयते। साधो! हे सत्स्वभाव! त्वया सुहृदा विनाऽपि मित्रस्य मम अनुपस्थितावपीत्यर्थः, शरणागतरक्षया शरणागतस्य मत्परिजनस्य, रक्षया रक्षणेन हेतुना, आत्मविनाशेनापीति भावः, शिवेः शिविराजस्य, ("शिविनेव" इति तृतीयान्तः पाठः सुगमः) समुद्भूतम् उत्पन्नं, यशः इव यशः विचीयते उपार्ज्यते। [अत्र शिवेरिवेत्युपमा, तथा सुहृदा विना इति कथनेन—"शिविना शरणागतस्य सन्निधौ स्वविनाशोऽभ्युपगतः, त्वया तु मम असन्निधानेऽपि इत्यहो! त्वं शिवेरपि अधिकगुणः श्लाघ्यतरश्चासि" इति व्यतिरेकालङ्कारस्य इत्यनयोः संसृष्टिः]। पथ्यावक्त्रं वृत्तम् ॥ १८ ॥

(ङ) ज्वलनप्रवेशादिति।—["वारणार्थानामीप्सितः" (१।४।२७ पा०) इत्यपादानत्वात् पञ्चमी, तथा मरणात् इत्यत्र "भीत्रार्थानां भयहेतुः" (१।४।२५ पा०) इत्यपादानत्वात् पञ्चमी बोध्या]।

(च) व्यवसायमहासुहृदेति।—व्यवसायः,—उत्साहः, पौरुषमिति यावत्, महान् सुहृत् यस्य तादृशेन, तदेकसहायेनेत्यर्थः, निस्त्रिंशेन—खड्गेन, एवं मौर्य्यकुलम् उत्साद्य सुहृदं मोचयामि इति भावः। [अत्र "व्यसनमहासुहृदा" इत्यपि पाठः सङ्गच्छते]।

पुरुषेण चन्दनदासरक्षणोपायं पृष्टः राक्षसः स्वकरधृतं निशितं निस्त्रिंशमेव उपायं निर्द्धारयन् तमेव वर्णयति, निस्त्रिंश इति।—विगतजलदव्योमसङ्काशमूर्त्तिः विगतः

सत्त्वोत्कर्षात् समरनिकषे दृष्टसारः परैर्मे
मित्रस्नेहात् विवशमधुना साहसे मां नियुङ्क्ते ॥ १९ ॥

पुरु । अज्ज ! एवं सेट्ठिचंदणदासजीविदं होदि त्ति सुणिदं, विसमदसाविआअपरिणामपडिदो ण सक्कणोमि णिच्छिदपदं पडिवत्तुं । [ विलोक्य पादयोर्निपत्य ]। अध सुगिहीदणामधेआ अमच्चरक्खसपादा तुम्हे त्ति ? ता करेहि मे प्पसादं संदेहणिसएण । *

---

* आर्य्य ! एवं श्रेष्ठिचन्दनदासजीवितं भवतीति श्रुतं, विषमदशाविभागपरिणामपतितो न शक्नोमि निश्चितपदं प्रतिपत्तुम । अथ सुगृहीतनामधेया अमात्यराक्षसपादा यूयमिति ? तत कुरु मे प्रसादं सन्देहनिर्णयेन ।

---

अपगतः, जलदः यस्मात तादृश मेघावरणशून्यमित्यर्थः, यत् व्योम आकाशं, शरतकालिकम इत्यर्थः, ततसङ्काशा तत्तुल्या, मूर्त्तिः यस्य तथोक्तः, नीलवर्ण इत्यर्थः, [ निभादिवत् सङ्काशशब्दस्यापि अस्वपदविग्रहः । "मलगगलदव्योम" इति पाठो न मनोरमः ] युद्धश्रद्धापुलकित इव युद्धश्रद्धया सङ्ग्रामादरेण, पुलकितः जातरोमाञ्च इव, उन्मुक्तस्वच्छनिस्त्रिंशोपरि पतितसूर्य्यकरप्रतिफलनात जातस्य चाकचक्यस्य पुलकसाम्यसम्भवादिति भावः, मे मम, करेण हस्तेन, प्राप्तसख्यः सञ्जातस्नेहः, मम करस्यापि युद्धस्पृहया सञ्जातपुलकत्वेन उभयोः साम्यात चिरपरिचितत्वाच्च इति भावः, तथा सत्त्वोत्कर्षात् सत्त्वस्य द्रव्यस्य, उपादानद्रव्यस्य इत्यर्थः, उत्कर्षात् उत्कृष्टत्वात, उपादानलौहस्य उत्कृष्टत्वेन दृढतायाः तीक्ष्णतायाश्च आधिक्यादित्यर्थः, परैः शत्रुभिः, समरनिकषे समरः एव निकषः परीक्षाप्रस्तरविशेषः, परीक्षाहेतुत्वात्, तस्मिन् दृष्टः सारः बलं यस्य तादृशः, बहुशः कुण्ठशक्तित्वेन अनुभूत इत्यर्थः, अयं निस्त्रिंशः खड्गः, [ निर्गतः त्रिंशतोऽङ्गुलिभ्यः इति निस्त्रिंशः "सङ्ख्यायास्तत्पुरुषस्य वाच्यः" (वा०) इति समासान्तः डच् ] अधुना मित्रस्नेहात् चन्दनदासं प्रति स्नेहाधिक्यात, विवशं व्याकुलं, मित्रस्नेहाधीनतया कार्य्याकार्य्यविचारविमुखमित्यर्थः, मां साहसे बलसाध्यकार्य्ये, युद्धव्यापारे इत्यर्थः, "हिताहितानपेक्ष यत कर्म तत् साहसं विदुः" इत्युक्तेः, नियुङ्क्ते प्रेरयति । [ "स्वराद्यन्तोपसर्गादिति वक्तव्यम" (वा० ) इति तङ् अत्र "युद्धश्रद्धापुलकित इव" इति उत्प्रेक्षाऽलङ्कारः प्रथमपादगतया

राच। भद्र! सोऽहम् अनुभूतभर्त्तृवंशविनाशः सुहृद्विनाश-हेतुः अनार्य्यो दुर्गृहीतनामा यथार्थो राक्षसः।

पुरु। [सहर्षं पुनः पादयोर्निपत्य]। पसीदध पसीदध। हीमाणहे! दिट्ठिआ कदत्थोम्हि। *

राच। भद्र! उत्तिष्ठ उत्तिष्ठ, कृतमिदानीं कालहरणेन। निवेद्यतां जिष्णुदासाय यथा "एष राक्षसः चन्दनदासं मरणात् मोचयति। [इति "निस्त्रिंशोऽयम" इत्यादि पठन् आकृष्टखड्गः परिक्रामति]।

पुरु। [पादयोर्निपत्य]। पसीदंतु पसीदंतु अमच्चरक्खस-पादा:। अत्थि दाव एत्थ णअरे पढ़मं चंदउत्तहदएण अज्ज-सअड़दासस्स (क) बधो आणत्तो। सो अ केणावि बज्झट्ठाणादो अवहरिअ देसंतरं अवबाहिदो। तदो चंदउत्तहदएण "कीस पमादो किदो"त्ति अज्जसअड़दासबधवंचणाए समुज्जलिदो रोसग्गी घादअजणबधजलेण णिव्वाविदो। तदो पहुदि घादआ जं कं-पि गहीदसत्थं अपुव्वं पुरुषं अग्गदो पच्चादो वा पेक्खंति, तदो अक्कबधे ज्जेव अत्तणो जीविदं परिरक्खंतो

* प्रसीदत प्रसीदत। आश्चर्य्यम्! दिष्ट्या कृतार्थोऽस्मि।

† प्रसीदन्तु प्रसीदन्तु अमात्यराक्षसपादाः। अस्ति तावदत्र नगरे प्रथमं चन्द्र-गुप्तहतकेन आर्य्यशकटदासस्य वध आज्ञप्तः। स च केनापि वध्यस्थानादपहृत्य देशान्तरमपवाहितः। ततश्चन्द्रगुप्तहतकेन "कस्मात् प्रमादः कृतः" इति आर्य्यशकट-दासवधवञ्चनया समुज्ज्वलितो रोषाग्निर्घातकजनवधजलेन निर्व्वापितः। ततः प्रभृति घातका यं कमपि गृहीतशस्त्रम् अपूर्वं पुरुषमग्रतः पश्चाद्वा प्रेक्षन्ते, तदा वधपथे

व्योमसञ्चारित्युपमया, समरनिकषे इति समरे शारपरीक्षात्वसाधर्म्येण निकष-त्वादात्म्यारोपाद्रूपकेण च संसृज्यते]। मन्दाक्रान्ता वृत्तं—"मन्दाक्रान्ताऽम्बुधिरस-नगैर्मो भनौ तौ गयुग्मम्" इति लक्षणात्॥ १९॥

(क) "चन्द्रगुप्तहतकेन" इति "आर्य्यशकटदासस्य" इति च वचनं [illegible] चन्द्रगुप्तपक्षपातित्वद्योतनार्थम्।

अप्पमत्ता एदे अप्पाणवज्झट्ठाणं वज्झं वावादेंति । ता एव्वं गहीदसत्थेहिं पमत्तपादेहिं तहिं गच्छंतेहिं सेट्ठिचंदणदासस्स वहो तुवराइदो होदि । *

[ इति निष्क्रान्तः ] ।

राक्ष । [ स्वगतम् ] । अहो ! दुर्बोधश्चाणक्यवटोर्नीतिमार्गः । कुतः ?—

यदि स शकटो नीतः शत्रोर्मतेन ममान्तिकं
किमिति निहतस्तेन क्रोधात् वधाधिकृतो जनः ? ।
अथ न कृतकं तादृग्लेखं कथं नु विभावये-
दिति मम मतिस्तर्कारूढ़ा न पश्यति निश्चयम् ॥ २० ॥

एवात्मनो जीवितं परिरक्षन्तोऽप्रमत्ता एते अप्रामवध्यस्थानं वध्यं व्यापादयन्ति । तस्मादेवं गृहीतशस्त्रैः प्रमात्यपादैः तत्र गच्छद्भिः श्रेष्ठिचन्दनदासस्य वधः त्वरायितो भवति ।

पुरुषमुखात् श्रुतसर्ववृत्तान्तः चाणक्यनीतिरतिदुरवगाहत्वं विभावयन् किंकर्त्तव्य-विमूढ़स्तर्कयति, यदीति ।—यदि शत्रोः मौर्य्यस्य चाणक्यस्य वा, मतेन अभिप्रायेण, स शकटः मम अन्तिकं समीपं, नीतः, गूढ़चारेण सिद्धार्थकेन वध्यस्थानात् अपवाह्य इति शेषः, तदा क्रोधात् तदपसारणप्रमादजनितादिति भावः, तेन चाणक्येन तत्प्रहितेन चन्द्रगुप्तेन वा, वधाधिकृतः जनः घातकः, किमिति कथं, निहतः ? स्वाभिप्राय-सम्पादनेन घातकस्य अपराधाभावात् घातकवधपर्य्यवसायी क्रोधावेशो न घटत इति भावः, तथा च, सिद्धार्थकः न तस्य गूढ़चरः इति प्रथमसंशयः । अथ पक्षान्तरे, घातकवधस्य अन्यथाऽनुपपत्त्या, तादृक् लेखं मम मुद्राङ्कितं शकटदासस्य स्वहस्तलिखितं पत्रं, कृतकं कृत्रिमं, न, शकटदास एव तस्य लेखकः, एतत् कथं नु केन वा प्रकारेण, विभावयेत् ? चिन्तयेत ? मम मतिरिति शेषः, नन्दवंशानुरागी मम सुहृत शकटदास ईदृशं गर्हितं कार्य्यं कुर्य्यादिति चिन्तयितुमपि न पारयेदित्यर्थः ; यद्वा—कृतकं नेति तदीयं पलाय्यागमनं कृत्रकपं न भवति, यदि परमार्थत एव शकटदासः सिद्धार्थकस्य साहाय्येन पलाय्य गतः स्यात्, तदा तादृक् लेखं स्वहस्तलेखमुद्राङ्कनादिरूपं, कथं नु विभावयेत् ? कर्त्तव्यत्वेन चिन्तयेत् ? आचरेत ? इत्यर्थः ; चिन्तनमपि तस्य अनुचितं, किमुत आचरणम् ? इति भावः ; नु वितर्के, तथा च, तस्य तत्परत्वे एव तथाऽऽचरणं, नान्यथा इत्यर्थः ; मम मतिः इति इत्थं, तर्कारूढ़ा संशयापनोदनार्थं तर्कमनुसरन्ती

[विचिन्त्य]। तस्मात्—

नायं निस्त्रिंशकालः प्रथममिह कृते घातकानां विघाते
नीतिः कालान्तरेण प्रकटयति फलं किं तया कार्य्यमत्र ?।
औदासीन्यं न युक्तं प्रियसुहृदि गते मत्कृते चातिघोरां
व्यापत्तिं ज्ञातमस्य स्वतनुमहमिमां निष्क्रयं कल्पयामि ॥२१॥

[इति निष्क्रान्ताः सर्वे]।

इति षष्ठोऽङ्कः ॥ ६ ॥

---

सती, निश्चयं न पश्यति अधुनाऽपि सन्देहदोलामारोहतीत्यर्थः। [अत्र हि निश्चयाभावरूपवस्तुनस्तर्कारूढमतित्वरूपस्य हेतोः वाक्यगतत्वात् काव्यलिङ्गमलङ्कारः]। हरिणीवृत्तम् ॥ २० ॥

एवं बहुधा वितर्कयन् पक्षान्तरेषु दोषप्रदर्शनपुरःसरम् आत्मानमेव परमोपकारिणः चन्दनदासस्य मोक्षमूल्यं निश्चिन्वन्नाह, नायमिति।—इह चन्दनदासमोचनविषये, प्रथमं पूर्वं, घातकानां, [कर्मणि षष्ठी] शकटदासस्येति शेषः, विघाते कृते सति, छलतः परमार्थतो वा इति भावः, अयं निस्त्रिंशकालः निस्त्रिंशस्य तद्व्यापारस्य, कालः समयः, न, चन्दनदासघातनप्रसक्तिभयात् इति भावः; यद्वा—इह एतस्मिन् विषये, अयं निस्त्रिंशस्य तद्व्यापारस्य, कालः न; प्रथमं मत्खड्गव्यापारात् पूर्वं, घातकानां घातकैः, [कर्त्तरि षष्ठी] विघाते घातने, कृते सति, चन्दनदासस्येति शेषः, तेन किं कार्य्यमित्यपकर्षः। अथ नीतिरेव अवलम्बनीया इत्याशङ्क्य आह, नीतिः नीतिशास्त्रोक्तसामाद्युपायप्रयोग इत्यर्थः, कालान्तरेण अन्यः कालः कालान्तरं तेन, न सद्यः इति भावः, [“अपवर्गे तृतीया” (२।३।२६ पा०) इति तृतीया] फलं प्रकटयति, अत्र अस्मिन् चन्दनदासमोक्षविषये, तया नीत्या, किं कार्य्यम् ? फलम् ? न किमपीत्यर्थः। एवञ्चेत् तदा औदासीन्यमेव अवलम्ब्यताम् इत्याशङ्क्य नेत्याह, मत्कृते मम निमित्तं, प्रियसुहृदि अतिघोरां व्यापत्तिं विपदं, गते प्राप्ते सति, औदासीन्यञ्च तटस्थतया अवस्थानञ्च, न युक्तं नोचितम्। एवं समस्य कर्त्तव्यनिश्चयमभिनयति, ज्ञातमिति।—ज्ञातं कर्त्तव्यव्यापारो निश्चित इत्यर्थः, किं तदित्याह—अतः अहम् इमां स्वतनुं निजशरीरम्, अस्य चन्दनदासस्य, निष्क्रयं मोचनमूल्यं, कल्पयामि स्थिरीकरोमि, ददामीत्यर्थः। निष्कृष्टभावार्थस्तु—प्रथमं छलतः परमार्थतो वा घातकानां विघाते कृते त्वरिततरं चन्दनदासघातनप्रसक्तिभयात् निस्त्रिंशधारणम् अनुचितम्; नीत्याचरणन्तु "शिरसि

भयं दूरं तत्प्रतीकारः" इति न्यायेन अनुपपन्नम् ; सुहृद्वञ्चनमपि चाचरन्तु कृतघ्नतादि-महादोषमापादयेत्; अतः चन्दनदासस्य निष्क्रयत्वेन चन्द्रगुप्ताय वध्यभावेन आत्मानं समर्प्य तद्विमोचनं न्याय्यत्वेन मनसि पतितम् इति ज्ञातमिति। [ अत्र अमरौरमुख्येन प्रियसुहृदो मोचनात् परिवृत्तिनामालङ्कारः। तल्लक्षणं यथा—"परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत्" इति ; स च प्रथमतः पादद्वये क्रमशः वर्त्तमानकाले निस्त्रिंशव्यवहारायोग्यता प्रति घातकविनाशस्य, नीतेरकार्य्यकारित्वे कालान्तरफलदायित्वस्य, तथा औदासीन्यस्य अयुक्तत्वे सुहृदापदः हेतुविषयता कथनात् काव्यलिङ्गद्वयेन अनुप्राणितः ]। स्रग्धरा वृत्तम् ॥ २१ ॥

इत्यशेषशास्त्राटवीसञ्चरपञ्चानन-कुलपतिकल्प-"वि.ए" इत्युपनामक-
श्रीमज्जीवानन्दविद्यासागर-भट्टाचार्य्यविरचितायां, तदात्मजाभ्यां
श्रीमदाशुबोधविद्याभूषण-श्रीमन्नित्यबोधविद्यारत्नाभ्यां
परिवर्त्तित-परिवर्द्धितायां सुखबोधिनी-
समाख्यायां मुद्राराक्षसव्याख्यायां
षष्ठोऽङ्कः ॥ ६ ॥

---

# सप्तमोऽङ्कः।

[ ततः प्रविशति चण्डालः ]।

चण्डा। ओसलध अज्जा! ओसलध, अवेध माणहे! अवेध—

जइ लक्खिदुं महह प्पाणे विहवे कुले कलत्ते अ।
पलिहलध ता विसं विअ लाआपत्थं पअत्तेण * ॥ १ ॥

---

* अपसरत आर्याः! अपसरत, अपेत मान्याः! अपेत—
यदि रक्षितुं मन्यध्वं प्राणान् विभवान् कुलानि कलत्राणि च।
परिहरत तस्मात् विषमिव राजापथ्यं प्रयत्नेन ॥ १ ॥

---

इत्थं षष्ठेनाङ्केन राक्षसवशीकरणरूपं प्रधानकार्य्यं बीजवाक्यैः यथायथं विप्रकीर्णैः एकार्थीभावम् उपनीतैः मुखसन्ध्याद्यर्थैः निर्व्यूढम्। अथ राक्षसेन चन्द्रगुप्तसाचिव्यग्रहणद्वारा तस्याभिस्थिरीकरणरूपं नाटकस्य प्रधानतमं फलमुपगमयितुं सप्तमोऽङ्क आरभ्यते। पूर्वाङ्के रज्जुहस्तेन पुरुषेण निवेदितं चन्दनदासस्य वध्यस्थानगमनं श्रुत्वा राक्षसः ससम्भ्रमं शस्त्रमुत्सृज्य वध्यस्थानं प्रति निष्क्रान्त इत्युक्तम्; सम्प्रति स एव चन्दनदासवृत्तान्तोऽस्मिन् अङ्के प्रपञ्च्यते इति। इदमङ्कावतरणं—"यत्र स्यादुत्तराङ्कार्थः पूर्वाङ्कार्थानुसङ्गतः" इति लक्षणात्।

अथ राक्षसवशीकरणबीजं राक्षसमित्रस्य सपुत्रकलत्रस्य चन्दनदासस्य निकारं राजाहितकारिणो दुर्दशावर्णनमुखेन प्रकटयन् आह, यदीति।—यदि प्राणान् जीवनानि, विभवान् ऐश्वर्य्याणि, कुलानि गोत्राणि, तथा कलत्राणि आत्मपत्नीश्च, रक्षितुं यथायथं स्थापयितुं, मन्यध्वम् इच्छत, यूयमिति शेषः, तस्मात् तदा इत्यर्थः, प्रयत्नेन प्रकृष्टचेष्टया, विषमिव राजापथ्यं राजाहितं, परिहरत परित्यजत। [ रक्षितुम् इत्यत्र इच्छार्थकेन मनधातुना समानकर्तृकत्वात् "समानकर्तृकेषु तुमुन्" ( ३।३।१५८ पा० ) इति तुमुन्। "मन्यध्वं" "परिहरत" इत्युभयत्र विधौ लोट् ]। "त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्। ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥" इत्युक्तनयात् सर्वपरित्यागेन आत्मरक्षाया अवश्यकर्तव्यत्वप्रतीतेः कुल विभव-कलत्रादिसहितस्वजीवननाशकं राज्ञोऽहितम् एकान्ततः

अवि अ—

होदि पुलिसस्स व्वाही मलणं वा सेविदे अपत्थेवि।
लाआपत्थे उण सेविदे हि सअलं वि कुलं मलदि॥ २ ॥ *

ता जइ ण प्पात्तिआअध, तदा पेक्खध एदं लाआपत्थकालिणं सेट्ठिचंदणदासं वज्झट्ठाणं णीअमाणं सपुत्तकलत्तं। [आकाशे]। अज्जा! किं भणाध? अत्थि किं चंदणदासस्स

* अपि च—भवति पुरुषस्य व्याधिर्मरणं वा सेविते अपथ्येऽपि।
राजापथ्ये पुनः सेविते हि सकलमपि कुलं म्रियते॥ २॥

† तत यदि न प्रत्ययध्वं, तदा प्रेक्षध्वम् एतं राजापथ्यकारिणं श्रेष्ठिचन्दनदासं वध्यस्थानमानीयमानं सपुत्रकलत्रम्। आर्याः! किं भणथ? अस्ति किं

परिहरणीयम् इति भावः। [अत्र हि विषसेविनो जनस्य कादाचित्कत्वार्थेन मरणं भवति न भवति वा, मरणे च तस्यैकस्य एव, न तु तत्कुलविभवकलत्रादेः, परं राजापथ्यसेविनः कुलादिसहितस्य विनाशकथनात् उपमानभूतात् विषात् उपमेयस्य राजापथ्यस्य आधिक्यप्रकटनात् व्यतिरेकालङ्कारः, स च हेतोर्नोक्तत्वात् तृतीयः, तल्लक्षणं यथा दर्पणे—"आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा। व्यतिरेक एक उक्ते हेतौ नोक्ते स च त्रिधा॥" इति]। आर्या वृत्तम्॥ १॥

पुनस्तदेव द्रढयति, भवतीति।—पथः अनुकूलव्यापारवतो वस्तुन इत्यर्थः, अनपेतं पथ्यं ["धर्मपथ्यर्थन्यायादनपेते" (४।४।९२ पा०) इति यत्] न पथ्यम् अपथ्यम् अहितकरं तस्मिन् अपथ्ये, देहस्य इति शेषः, सेविते भुक्ते आचरिते वा सति, अपि निश्चये, पुरुषस्य जनस्य, व्याधिः विशिष्टः आधिः मनःपीडा यस्मात् इति व्युत्पत्तिमान् पदार्थः, रोग इत्यर्थः, मरणं विनाशः वा, भवति, अपथ्यसेविनः एकस्य एव व्याधिः मरणं वा भवति इत्यर्थः, राजापथ्ये राज्ञोऽहितकरे पदार्थे, सेविते राजविद्रोहादौ कृते सति, पुनः वाक्यालङ्कारे, हि निश्चये, सकलमपि कुलं म्रियते राजरोषात् सर्वेषामेव विनाशो भवति। [अत्रापि उपमानीभूतात् साधारणापथ्यात् राजापथ्यस्य आधिक्यकारित्वकथनात् व्यतिरेकालङ्कारः, तेन च दण्डविप्रकारिणः अपथ्यसेवनस्य उत्कर्षमुक्त्वा तस्यैव उपमानत्वकल्पनात् द्वितीयप्रतीपालङ्कारः ध्वन्यते इत्यलङ्कारेणालङ्कारध्वनिः। द्वितीयप्रतीपलक्षणं यथा दर्पणे—"उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः। कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे॥" इति। आर्या वृत्तम्॥ २॥

मोक्खोवाओ त्ति ? कुदो से अधण्णस्स (क) मोक्खोवाओ ? एदं उण अत्थि, सो जइ अमच्चलक्खसस्स घरअणं समप्पेदि। [पुनराकाशे]। किं भणाध ? एसे सलणाअदवच्छले अत्तणो जीविदस्स कालणेण ईदिसं अकज्जं ण कलिस्सदि त्ति ? (ख) अज्जा ! जइ एव्वं, तेण हि अवधालेध से सुभगदिं। (ग) किं दाणीं तुम्हाणं पडीआलविआलेण ? †

[ततः प्रविशति द्वितीयचण्डालानुगतो वध्यवेशधारी शूलं स्कन्धेन आदाय कुटुम्बिन्या (घ) पुत्रेण च अनुगम्यमानः चन्दनदासः]।

चन्दन। हद्धी !! हद्धी !! अम्हारिसाणं वि कधं णिच्चचालित्त-भंगभीरूणं चोरजणाणं विअ मलणं प्पात्तं त्ति। णमो णमो

---

चन्दनदासस्य मोक्षोपाय इति ? कुतोऽस्य अधन्यस्य मोक्षोपायः ? एतत् पुनरस्ति, स यदि अमात्यराक्षसस्य गृहजनं समर्पयति। किं भणथ ? एष शरणागतवत्सलः आत्मनो जीवितस्य कारणेन ईदृशमकार्य्यं न करिष्यतीति ? आर्य्याः ! यद्येवं, तेन हि अवधत्त अस्य शुभगतिम्। किम् इदानीं युष्माकं प्रतीकारविचारेण ?

* हा धिक् !! हा धिक् !! अस्मादृशानामपि कथं नित्यचारित्रभङ्गभीरूणां

---

(क) अधन्यस्य—धनं—पुण्यादिरूपं वस्तु प्रयोजनमस्य इति यत्, धन्यः,—पुण्यवान्, न धन्यः अधन्यः,—दुर्भाग्य इत्यर्थः तस्य, ("सुकृती पुण्यवान् धन्यः" इत्यमरः)।

(ख) शरणागतेत्यादि।—एतत्पौरवचनेन अस्य शरणागतरक्षणविषये क्षिति-प्रथितत्वेन सकललोकप्रसिद्धमित्युक्तं भवति।

(ग) शुभगतिमिति।—शुभगतिं—शरणागतरक्षणपुण्येन उत्तमलोकप्राप्तिम् इति बहिरर्थः, राक्षसप्राप्त्या बन्धनमोचनात् सुखप्राप्तिमिति गूढम्। कौलुष्ठगोक्तिर्वा, भवयन्त्रणामोचनरूपां परमां गतिमित्यर्थः।

(घ) कुटुम्बिनी—पुत्रादिमती गृहस्थिता रमणी तया। ("—स्यात् तु कुटुम्बिनी। पुरन्ध्री—" इत्यमरः)।

किदंतस्स । अधवा ण णिसंसाणं उदासीणेसुं इदरेसुं वा विसेसो अत्थि ? (ङ) तधा हि—

मोत्तूण आमिसाइं मलणभएण तिणेहिं जीवंतो ।
वाहाणं मुद्धहरिणे हंतुं को णाम णिब्बंधो ? * ॥ ३ ॥

चौरजनानामिव मरणं प्राप्नोमि । नमो नमः कृतान्तस्य । अथवा न नृशंसानाम् उदासीनेषु इतरेषु वा विशेषोऽस्ति । तथा हि—

* मुक्त्वा आमिषाणि मरणभयेन तृणैर्जीवतः ।
व्याधानां मुग्धहरिणान् हन्तुं को नाम निर्बन्धः ? ॥

(ङ) नृशंसानां—दुर्जनानाम् । उदासीनेषु—तटस्थेषु, निःसम्पर्कतया अवस्थितेषु इत्यर्थः, निरीहेषु इति यावत् । इतरेषु—सदोषेषु इत्यर्थः । [अत्र खल-दुर्जनस्य चाणक्यस्य नास्ति हिंसाविधौ सदोषनिर्दोषविचार इति विशेषे प्रस्तुते वक्तव्ये नृशंसानामित्यादि सामान्येनाप्रस्तुतेनाभिधानादप्रस्तुतप्रशंसाऽलङ्कारः ] ।

नृशंसानाम् उपकारकापकारकाणामविशेषेणैव अनिष्टकारकत्वमुक्तम्, इदानीं तदेवोदाहरणप्रदर्शनपुरःसरं समर्थयमान आह, मुक्त्वेति ।—मरणभयेन आमिषाणि मांसादीनि, मुक्त्वा तृणैर्जीवतः जीविकां कुर्वतः, (आमिषभक्षणनिषेधो यथा मनुसंहितायां पञ्चमेऽध्याये ४८ श्लोके—"नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् । न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥" इति । भागवते पञ्चमस्कन्धे—"ये त्विह वै पुरुषाः पुरुषमेधेन यजन्ते, याश्च स्त्रियो नृपशून् खादन्ति, तांश्च ताश्च ते पशव इव निहता यमसदने यातयन्तः रक्षोगणाः सौनिका इव स्वधितिनाऽवदाय असृक् पिबन्ति" इति । आमिषाणाम् उष्णवीर्यत्वात् राजसाहारमध्ये गणना, तेन तद्भक्षणे रोगस्य सम्भावित्वात् अवश्यमेव मारकत्वं, तथा च गीता—"कट्वम्ललवणात्युष्ण-तीक्ष्णरूक्ष-विदाहिनः । आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥" इति ) मुग्धाः सुन्दराः, ये हरिणाः तान् मुग्धहरिणान् हन्तुं विनाशयितुं, व्याधानां को नाम निर्बन्धः ? आग्रहविशेषः ? अतीव निर्बन्धो दृश्यते इत्यर्थः; तेषां मारात्मकत्वात् इति भावः । [अत्र व्याधा यथा मुग्धहरिणान् घ्नन्ति, तथा चाणक्योऽपि निर्दोषानिति बिम्ब-प्रतिबिम्ब-प्रत्यायनाद्व्यङ्ग्याक्षेपजायमानाप्रस्तुतप्रशंसाऽलङ्कारमूलो दृष्टान्तालङ्कारः; तथा हरिणानां मरणभयेनामिषत्यागस्य कारणेऽपि तत्त्यागरूपकार्याभावादिति विशेषोक्तिस्तयोरङ्गाङ्गिभावेन सङ्करः] । आर्या वृत्तम्; सा च परार्द्धे मात्राधिक्यदोषेण दुष्टा ॥ ३ ॥

[समन्तात् अवलोक्य]। भाव! पिअवअस्स! जिस्णुदास! कधं!! पडिवअणं वि मे ण पडिवज्जसि त्ति!! अधवा, दुल्लहा क्खु ते पुरिसा, जे एअस्सिं काले दिट्ठिपधे वि चिट्ठंति। (च) [सवाष्पम्]। एदे अम्हप्पिअवअस्सा अस्सुवादमेत्तकेण किदप्पदीआरा स्वसरीरेहिं णिवत्तमाणा परिवड्ढमाणसोअदीणवदणा, वाप्फगुरुआए दिट्ठीए मं अणुगच्छंति। * [इति परिक्रामति]।

चण्डालौ। [परिक्रम्य अवलोक्य च]। अज्ज चंदणदास! आअदोसि वज्झट्ठाणं, ता विसज्जेहि घरजणं। †

चन्द। अज्जे! कुटुंबिणि! णिवत्तस्स तुमं सपुत्ता। वज्झट्ठाणं क्खु एदं, अदो अवरं अभूमि (छ) क्खु अणुगच्छिदुं। ‡

कुटु। [सवाष्पम्]। परलोअं पत्थिदो अज्जो, ण उण देसंतरं, ता अजोग्गो दाणीं कुलजणस्स णिवत्तिदुं। § (ज)

---

* भाव! प्रियवयस्य! जिष्णुदास! कथम्!! प्रतिवचनमपि मे न प्रतिपद्यसे इति!! अथवा, दुर्लभाः खलु ते पुरुषाः, ये अस्मिन् काले दृष्टिपथेऽपि तिष्ठन्ति। एतेऽस्मत्प्रियवयस्याः अश्रुपातमात्रेण कृतप्रतीकाराः स्वशरीरैर्निवर्त्तमानाः परिवर्द्धमानशोकदीनवदनाः बाष्पगुर्व्या दृष्ट्या माम् अनुगच्छन्ति।

† आर्य्य चन्दनदास! आगतोऽसि वध्यस्थानं, तत् विसर्जय गृहजनम्।

‡ आर्य्ये! कुटुम्बिनि! निवर्त्तस्व त्वं सपुत्रा। वध्यस्थानं खलु एतत्, अतोऽपरम् अभूमिः खलु अनुगन्तुम्।

§ परलोकं प्रस्थितः आर्य्यः, न पुनर्देशान्तरं, तदयोग्यमिदानीं कुलजनस्य निवर्त्तितुम्।

---

(च) अथवेत्यादौ आक्षेपालङ्कारः।

(छ) अभूमिः,—अस्थानम्, अयोग्यस्थानमित्यर्थः।

(ज) देशान्तरं प्रस्थितं बन्धुं नानुगच्छेदिति शास्त्रम्; परलोकं प्रस्थितस्य तु अनुगमनमुपपन्नमेवेति भावः।

चन्द। अज्जे! सच्चं, मित्तकज्जेण मम विणासो, ण पुरिसदोसेण; ता किं हरिसट्ठाणे वि रोदसि त्ति? *

कुटु। अज्ज! जइ एव्वं, ता अणुचिदं दाणीं कुलजणेण णिवत्तिदुं। †

चन्द। अध इं व्ववसिदं (झ) अज्जाए? ‡

कुटु [सबाष्पम्]। भत्तुणो चलणमणुगच्छंतीए अज्जाणुग्गहो होदु। §

चन्द। अज्जे! दुव्ववसिदं एदं दे, ता दाणीं अज्जाए अअं असुणिदलोअव्ववहारो कुमालो अणुगेण्हिदव्वो त्ति। ¶

कुटु। अणुगेण्हंतु णं प्पसण्णाओ भअवदीओ कुलदेवदाओ। जाद! पुत्तअ! प्पणम अपच्छिमस्स (ञ) पिदुणो पाएसुं। **

पुत्र। [पादयोर्निपत्य]। ताद! मए तादविरहिदेण किं अणुचिट्ठिदव्वं? ††

---

* आर्य्ये! सत्यं, मित्रकार्य्येण मम विनाशः, न पुरुषदोषेण; तत् किं हर्षस्थानेऽपि रोदिषि इति?

† आर्य्य! यद्येवं, तदनुचितम् इदानीं कुलजनेन निवर्त्तितुम्।

‡ अथ किं व्यवसितम् आर्य्यया?

§ भर्त्तुश्चरणमनुगच्छन्त्याः आर्य्यानुग्रहो भवतु।

¶ आर्य्ये! दुर्व्यवसितमिदं ते, तदिदानीम् आर्य्यया अयम् अश्रुतलोकव्यवहारः कुमारोऽनुग्रहीतव्य इति।

** अनुगृह्णन्तु एनं प्रसन्ना भगवत्यः कुलदेवताः। जात! पुत्रक! प्रणम अपश्चिमस्य पितुः पादयोः।

†† तात! मया तातविरहितेन किमनुष्ठातव्यम्?

---

(झ) किं व्यवसितम्?—किं कर्त्तुम् इष्टम्? इत्यर्थः।

(ञ) अपश्चिमस्य—अतःपरमप्राप्तस्य, पुनरागमनशून्यस्येति भावः।

चन्द। पुत्त ! चाणक्कविरहिदे (ट) देसे वसिदव्वं। *

चण्डालो। अज्ज ! चंदणदास ! णिखादे शूले, ता दाणीं सज्जो होहि। †

कुटु। अज्जा ! पलित्ताअध पलित्ताअध। ‡

चन्द। भद्दमुह ! मुहुत्तअं चिट्ठ। अइ जीविदवच्छले ! किं एत्थ आक्कंदसि ? (ठ) सग्गं गदा क्खु ते देवा णंदा, जे दुक्खिदं इत्थीजणं पइदिणं अणुकंपंति। §

प्रथमश्चण्डालः। अले वेणुवेत्तआ ! गेण्ह इमं चंदणदासं। घलजणो सअं ज्जेव गमिस्सदि। ¶

द्वितीयश्चण्डालः। अले वज्जलोमआ ! एसे गेण्हामि। **

---

* पुत्र ! चाणक्यविरहिते देशे वस्तव्यम्।

† आर्य्य ! चन्दनदास ! निखातं शूलं, तत् इदानीं सज्जो भव।

‡ आर्य्याः ! परित्रायध्वं परित्रायध्वम्।

§ भद्रमुख ! मुहूर्त्तं तिष्ठ। अयि जीवितवत्सले ! किमत्र आक्रन्दसि ? स्वर्गं गताः खलु ते देवा: नन्दाः, ये दुःखितं स्त्रीजनं प्रतिदिनम् अनुकम्पन्ते।

¶ अरे वेणुवेत्रक ! गृहाण इमं चन्दनदासम्। गृहजनः स्वयमेव गमिष्यति।

** अरे वज्रलोमक ! एष गृह्णामि।

---

(ट) चाणक्येति।—अनेन चाणक्यस्य अत्यन्तं क्रौर्य्यमुक्तम्।

(ठ) आक्रन्दसि ?—परित्राणाय कमपि रक्षितारमाह्वयसि ? ("आक्रन्दः क्रन्दने ह्वाने" इति मेदिनी) उच्चैः रोदिषि ? इति वा; ("दारावे क्रन्दिते वातर्य्याक्रन्दः" इत्यमरः) शोकावेगेन जीवज्जनसन्निधौ एव आक्रन्दनं ते अनुचित-मिति भावः, ["सग्ग गदाणं दाव देवा दुक्खिअं पलिअणं अणुकंपंदि। अण्णं च, मित्तकज्जेण मे विणासो, ण अजुत्तकज्जेण, ता किं हरिसट्ठाणे वि रोदीअदि ?" इति पाठे—"स्वर्गं गतानां तावद्देवा दुःखितं परिजनमनुकम्पन्ते। अन्यच्च, मित्रकार्य्येण मे विनाशः, नायुक्तकार्य्येण, तत् किं हर्षस्थानेऽपि रुद्यते ?" इति संस्कृतम्। अत्र मित्रकार्य्येण मरणात् स्वर्गो निश्चित इति भावः]।

चन्द। भद्दमुह! चिट्ठ मुहुत्तअं, जाव पुत्तअं पलिस्सआमि। [इति पुत्रं परिष्वज्य मूर्द्धि समाघ्राय]। जाद! पुत्तअ! अवस्संभविदव्वे वि विणासे मित्तकज्जं समुव्वहमाणो विणासमणुभवामि। * (ड)

पुत्रः। ताद! एदं क्खु भणिदव्वं, किं कुलक्कमो क्खु एसो अम्हाणं? † [इति पादयोः पतति]।

चण्डा। अले गेण्ह वज्जलोमआ! ‡

[चण्डालो गृहीतः चन्दनदासम् आरोपयितुं शूले]।

कुटु। [सोरस्ताडम्]। अज्जा! पलित्ताअध पलित्ताअध। §

[प्रविश्य अपटीक्षेपेण राक्षसः]। भवति! न भेतव्यं न भेतव्यम्। भोः भोः शूलायतनाः! (ढ) न खलु व्यापादनीयः चन्दनदासः। कुतः?—

येन स्वामिकुलं रिपोरिव कुलं दृष्टं विनश्यत् पुरा
मित्राणां व्यसने महोत्सव इव स्वस्थेन येन स्थितम्।

---

* भद्रमुख! तिष्ठ मुहूर्त्तं, यावत् पुत्रकं परिष्वजे। जात! पुत्रक! अवश्यम्भवितव्येऽपि विनाशे मित्रकार्य्यं समुद्वहमानो विनाशमनुभवामि।

† तात! इदं खलु भणितव्यं, किं कुलक्रमः खलु एषोऽस्माकम्?

‡ अरे गृहाण वज्रलोमक!

§ आर्य्याः! परित्रायध्वं परित्रायध्वम्।

---

(ड) अनुभवामीति।—अतस्त्वया न शोचितव्यम् इति भावः। [अत्र करुणः स्थायी, शोक दीनवचनादिभिः विभावैरनुभावैश्च पुष्टः]।

(ढ) शूलायतना इति।—शूलमायतनं—जीवनाश्रयो येषां ते तथोक्ताः।

प्रियसुहृदं चन्दनदासं वध्यस्थानगतं घातकैः चासन्नवध्यक्षणमालोक्य ससम्भ्रमो राक्षसः जीवनविनिमयेन तं त्रातुकाम आह, येनेति।—येन मया, रिपोः शत्रोः, कुलमिव विनश्यत् विनाशं गच्छत्, स्वामिकुलं स्वामिनः नन्दस्य कुलं, पुरा दृष्टं, न तत्र प्रतिकृतमित्यर्थः, येन च मया, मित्राणां बन्धूनां, व्यसने विपदि, महोत्सवे इव स्वस्थेन

आत्मा यस्य वधाय वः परिभवक्षेत्रीकृतोऽपि प्रियः
तस्येयं मम मृत्युलोकपदवी वध्यस्रगाबध्यताम् ॥ ४ ॥

चन्द०। [विलोक्य सबाष्पम्] अमच्च ! किं एदं दे ब्बवसिदं ?*

राक्ष०। त्वदीयस्य सुचरितैकदेशस्य अनुकरणं किल ।

चन्द०। अमच्च ! सव्वं वि मे णिप्फलं ; एदं प्पआसं करंतेण मे प्पिअं अणुचिट्ठिदं अमच्चेण । †

राक्ष०। सखे चन्दनदास ! कृतमुपालम्भेन, स्वार्थप्रधानो हि जीवलोकः । (ख) भद्रमुख ! अयमर्थो निवेद्यतां तावत् दुरात्मने चाणक्याय ।

चण्डालौ। अध इं त्ति ? ‡

---

* अमात्य ! किमिदं ते व्यवसितम् ?

† अमात्य ! सर्वमपि मे निष्फलम् ; इमं प्रयासं कुर्वता न मे प्रियमनुष्ठितम् अमात्येन ।

‡ अथ किमिति ?

---

प्रकृतिस्थेन, अकातरेण इति यावत्, स्थितं न साङ्गाय्यं कृतमित्यर्थः, यस्य मम, आत्मा वः युष्माकं, परिभवक्षेत्रीकृतः तिरस्कारपात्रीकृतोऽपि, एतादृशं परिभवमनुभवन्नपि इति यावत्, प्रियः, जात इति शेषः, न वियुज्यत इत्यर्थः, यदर्थं चाणक्येन कौलूतादयः युष्मादृशा घातकाश्च कुलेन वृथा व्यापादिताः दुःखपापनिदानभूतोऽपि आत्मा येन न त्यक्त इति स्वोपालम्भः ; तस्य मम, कण्ठ इति शेषः, वधाय हन्तुं, [ "तुमर्थाच्च भाववचनात्"( २।३।१५ पा०) इति चतुर्थी ] मृत्युलोकपदवी यमलोकगमनमार्गरूपा, इयं वध्यस्रक् वध्यस्य चिह्नभूता माला, आबध्यताम् आमुच्यतां, [ प्रार्थनायां लोट् ] चन्दनदासं विहाय मां गृहाणेति भावः । [ अत्र "रिपोरिव" "महोत्सव इव" इत्युपमा "परिभवक्षेत्रीकृतोऽपि प्रियः" इत्यत्र विरुद्धवदवभासनाद्विरोधः, तथा "मृत्युपदवी" इत्यत्र रूपकम् ; तदेतेषां संसृष्टिः ] । शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

(ख) स्वविनाशेनापि मित्ररक्षणात् कीर्त्तिलाभो यथा तव स्वार्थः, तथा त्वत्संरक्षणं मम चात्मरक्षणादपि प्रियतरमिति तदेव कर्त्तुमुपागतोऽस्मि, स्वार्थान्धा आत्माहितार्थमेवानुतिष्ठन्ति, न परहितार्थम् इति भावः ।

राक्ष।—

दुष्कालेऽपि कलावसज्जनरुचौ प्राणैः परं रक्षता
नीतं येन यशस्विना प्रलघुतामौशीनरीयं यशः।
बुद्धानामपि चेष्टितं सुचरितैः क्लिष्टं विशुद्धात्मना
पूजार्होऽपि स यत्कृते तव गतो वध्यत्वमेषोऽस्मि सः॥५॥

प्रथमः। अले वेणुवेत्तआ! तुमं दाव सेट्ठिचंदणदासं गेण्हिअ इमस्स मसाणपादवस्स छाआए मुहुत्तअं चिट्ठ, जाव अहं अज्जचाणक्कस्स णिवेदेमि, जधा गहीदो अमच्चलक्खसो त्ति। *

* अरे वेणुवेत्रक! त्वं तावत् श्रेष्ठिचन्दनदासं गृहीत्वा अस्य श्मशानपादपस्य छायायां मुहूर्त्तं तिष्ठ, यावदहम् आर्य्यचाणक्यस्य निवेदयामि, यथा गृहीतोऽमात्यराक्षस इति।

चण्डालाभ्यां चाणक्याय निवेदनार्थं पृष्टः राक्षसः स्वकार्य्यमर्पण प्रियसुहृदं चन्दनदासं लोकोत्तरभावेन प्रशंसन्नाह, दुष्कालेऽपीति।—असज्जनरुचौ असज्जनानां दुर्ज्जनानां, रुचिः अनुरागः यत्र तादृशे, असज्जने दुर्जने, रुचिः प्रीतिर्यस्मिन् तादृशे इति वा, अत एव दुष्काले दुष्टकाले, कलौ कलियुगेऽपि, प्राणैः निजप्राणदानेन, परम् अन्यं जनं, रक्षता येन यशस्विना कीर्त्तिमता चन्दनदासेन, औशीनरीयं शिविराजस्य, ["गहादिभ्यश्च" (४।२।१३८ पा०) इति छ-प्रत्ययः] यशः प्रलघुताम् अत्यल्पहीनतां, क्षुद्रताम् इत्यर्थः, नीतं प्रापितम्; शिबिना सत्ययुगे तथाऽऽचरितेऽपि कलियुगे तथाऽऽचरणं दुष्करमतोऽस्य शिबितोऽप्याधिक्यम् [इति व्यतिरेकालङ्कारः]; तथा विशुद्धात्मना निर्दोषस्वभावेन, येन यशस्विनेत्यनुषङ्गः, सुचरितैः अहिंसादिभिः, बुद्धानां बुद्धप्रोक्तमधीयानानामपि, [बुद्धप्रोक्ताध्ययनकर्त्तरि लक्षणा बुद्धशब्दस्यावगन्तव्या] चेष्टितं व्यवहारः, क्लिष्टं तिरस्कृतं, बुद्धा अतिदयालव इति प्रसिद्धं, तेषामपि दयालुत्वं क्षीणीकृतमित्यर्थः; पूजार्हः सम्मानार्हः अपि, सः चन्दनदासः, यत्कृते यस्य राक्षसस्य, कृते निमित्तं, यत्कुटुम्बरक्षणार्थमित्यर्थः, तव वध्यत्वं गतः प्राप्तः, एषः अहं, सः राक्षसः, अस्मि, वध्यस्थाने उपस्थित इति शेषः। ["एषः" इत्यत्र "एतः" इति पाठे—एतः आगत इत्यर्थः। अत्र चतुर्थपादवाक्यार्थवस्तुना परिवृत्त्यलङ्कारो ध्वन्यते]। शार्दूलविक्रीडितं वृत्तम्॥५॥

द्वितीयः। अले वज्जलोमआ ! एव्वं होदु। *

[ इति सपुत्रदारेण चन्दनदासेन सह निष्क्रान्तः ]।

प्रथमः। [ राक्षसेन सह परिक्रम्य ]। के के एत्थ दुआलिआणं ? णिवेदेध दाव णंदकुलसेससंचअचुस्सणकुलिसस्स मोलिअकुलप्पदिट्ठाविदधम्मसंचअस्स अज्जचाणक्कस्स। †

राक्ष। [ स्वगतम् ]। एतदपि नाम राक्षसेन श्रोतव्यम् !!

चण्डा। एसो क्खु अज्जणीदिणिअमसंजमिदबुद्धिपुलिसआले गहीदे अमच्चलक्खसे त्ति। ‡

[ ततः प्रविशति जवनिकाऽऽवृतशरीरो मुखमात्रदृश्यः सहर्षः चाणक्यः ]।

चाण। भद्र ! कथय कथय—

केनोत्तुङ्गशिखाकलापकपिलो बद्धः पटान्ते शिखी ?
पाशैः केन सदागतेरगतिता सद्यः समासादिता ?।
केनानेकप-दानवासितसटः सिंहोऽर्पितः पञ्जरे ?
भीमः केन चलैकनक्रमकरो दोर्भ्यां प्रतीर्णोऽर्णवः ? ॥६॥

---

* अरे वज्रलोमक ! एवं भवतु।

† कः कोऽत्र दौवारिकाणाम ? निवेदयत तावत् नन्दकुलसैन्यसञ्चयचूर्णन-कुलिशस्य मौर्य्यकुलप्रतिष्ठापितधर्मसञ्चयस्य आर्य्यचाणक्यस्य। [ "णंदकुलणग-कुलिसस्स मोलिअकुलपडिट्ठावकस्स" इति पाठे—"नन्दकुलनगकुलिशस्य मौर्य्यकुल-प्रतिष्ठापकस्य" इति संस्कृतम ]।

‡ एष खलु आर्य्यनीतिनियमसंयमितबुद्धिपुरुषकारो गृहीतोऽमात्यराक्षस इति।

---

राक्षसवशीकरणस्य कष्टसाध्यत्वं भङ्ग्या प्रतिपादयन्नाह, केनेति।—उत्तुङ्गशिखा-कलापकपिलः उत्तुङ्गानाम् उन्नतानाम, ऊर्द्ध्वोत्थितानामित्यर्थः, शिखानां ज्वालानां, कलापेन संहत्या, कपिलः पिङ्गलः, समुद्दीपित इत्यर्थः, शिखी वह्निः, पटान्ते वसन-प्रान्ते, केन जनेन, बद्धः ? संयमितः ? केन पाशैः बन्धनरज्जुभेदैः, सूक्ष्मजालविशेषैरिति यावत, सदागतेः सततगमनशीलस्य पवनस्य, अगतिता गतिशून्यता, गतिनिरोध इति यावत्, सद्यः सहसा, समासादिता ? सम्पादिता ? कृता ? इत्यर्थः ; अनेकप-दानवासितसटः अनेकपानां द्विरदानां, दानेन मदसलिलेन, वासिता सुरभीकृता,

चन्दा। णं णीदिणिउणबुद्धिणा अज्जेण ज्जेव। *

चाण। भद्र! मा मैवम्। नन्दकुलद्वेषिणा दैवेन इति ब्रूहि। (त)

राक्ष। [विलोक्य स्वगतम्]। अये!! अयं स दुरात्मा!! अथवा अयं स महात्मा कौटिल्यः!! यतः,—(थ)

आकरः सर्वशास्त्राणां रत्नानामिव सागरः।
गुणैर्न परितुष्यामो यस्य मत्सरिणो वयम्॥ ७॥

---

* ननु नीतिनिपुणबुद्धिना आर्य्येणैव।

---

सटा जटा यस्य तादृशः, ("सटा जटाकेसरयोः" इत्यमरः) मत्तकरीन्द्रघातीत्यर्थः, सिंहः केन जनेन, पञ्जरे अर्पितः? स्थापितः? आबद्धः? इत्यर्थः; चलेकनक्रमकरः चलाः सञ्चरणशीलाः, एके मुख्याः, बृहदाकारा इत्यर्थः, एके केवला वा, ("एके मुख्यान्यकेवलाः" इत्यमरः) नक्राः मकराश्च यत्र तथाभूतः, अत एव भीमः भयङ्करः, अर्णवः समुद्रः, केन जनेन, दोर्भ्यां भुजाभ्यां, (न वाहनादिना) प्रतीर्णः? चाणक्यस्य राक्षसस्य संयमनं पटाञ्चलेन वह्निबन्धनमिव, रज्ज्वा वायुगतिरोधनमिव, पञ्जरे मत्तदन्तिघातिसिंहावरोधीकरणमिव, तथा बाहुभ्यां दुष्पारसमुद्रोत्तरणमिव दुष्करमिति समुदायार्थः; राक्षसस्य दुर्दमत्वकथनेन आत्मना च तस्य दमनात् आत्मनोऽतीव दुष्करकार्य्यकारित्वेन गर्वः सूचित इति भावः। [अत्र हि पटाञ्चलेन वह्निबन्धनवत् राक्षससंयमनमत्यसम्भवमिति बिम्ब-प्रतिबिम्बबोधनात् तथैवापरपादत्रयवाक्यार्थानाम् असम्भवत्वरूपधर्मेण सादृश्यप्रतिबिम्बनात् मालया निदर्शनाऽलङ्कारः]। शार्दूलविक्रीडितं वृत्तम्॥ ६॥

(त) नन्दकुलेति।—नन्दवंशस्य प्रतिकूलदैववशादेव वयमिमं संयन्तुं समर्थाः, नाहमिति भावः; प्रतिकूलदैवमेव एनमत्र आनीतवान्, नास्माकं नीतिर्न वा अहमिति निष्कर्षः।

(थ) स्वयं चाणक्यस्य दुरात्मत्वमभिधाय अथवेत्यनेन तदपोह्य यत् तस्य माहात्म्यमुक्तं, तत् समर्थयन् हेतुमुपन्यस्यति, यत इति।

महात्मत्वे हेतुं दर्शयितुमाह, आकर इति।—अयं स इति गद्यस्थवाक्यमत्रानीय अन्वयः कार्य्यः; अयं सः, चाणक्य इति शेषः, रत्नानां सागर इव सर्वशास्त्राणां तत्त्वज्ञानानाम्, आकरः खनिः, पारदृश्वेत्यर्थः; मत्सरिणः शुभद्वेषिणः, वयं यस्य चाणक्यस्य, गुणैः षाड्गुण्यप्रयोगपाटवादिभिः, न परितुष्यामः परितोषं न लभामहे; मत्सरिणामयं स्वभावो यत् गुणिष्वपि दोषमारोपयन्तीति भावः। [एतेन गुणिनो राक्षसस्य

चाण । [विलोक्य सहर्षम्] । अये !! अयम् अमात्यराक्षसः !! येन महात्मना—

गुरुभिः कल्पनाक्लेशैर्दीर्घजागरहेतुभिः ।
चिरमायासिता सेना वृषलस्य मतिश्च मे ॥ ८ ॥

[ यवनिकाम् अपनीय उपसृत्य च ] । भो भो अमात्यराक्षस ! विष्णुगुप्तोऽभिवादयते । (द)

राक्ष । [ स्वगतम् ] । अमात्य इति लज्जाकरमिदानीं विशेषणपदम् । [ प्रकाशम् ] । भो भो विष्णुगुप्त ! न मां श्वपाक-स्पर्शदूषितं (ध) स्प्रष्टुम् अर्हसि ।

---

युक्तिगुणग्रस्ता व्यज्यते, "गुणा गुणज्ञेषु गुणा भवन्ति" इति न्यायात् । [ अत्र सागरो यथा रत्नानामाकरः, तथा चाणक्यः सकलशास्त्राणामित्युपमा, तथा अयं शास्त्राणामाकर इति चाकराभिन्नत्वेन तादात्म्यारोपाद्रूपकं, तदनयोः संसृष्टिः ] । पथ्यावक्त्रं वृत्तम् ॥७॥

चन्द्रगुप्तानानतचाणक्यः अमोतिनिगृहीतमपि राक्षसमलौकिकबुद्धिविभवदर्शनेन प्रशंसन्नाह, गुरुभिरिति ।—दीर्घजागरहेतुभिः दीर्घजागरं सततप्रतीकारचिन्ता-हेतुत्वात् सावधानत्वे, अनालस्ये इति यावत्, अथवा—दीर्घजागरः महान् निद्राविरामः, तस्य हेतुभिः कारणैः, गुरुभिः महद्भिः, कल्पनाक्लेशैः एवमिदं करणीयम्, एतच्च अकर्त्तव्यमित्येवम्प्रकारैः मानसिकचिन्ताजनितदुःखैः, वृषलस्य चन्द्र-गुप्तस्य, सेना मे मम, मतिश्च चिरं दीर्घकालं व्याप्य, आयासिता क्लेशिता, येनेति गद्यस्थं कर्तृपदमत्रान्वेति । सेनापक्षे कल्पनाक्लेशाः सदावस्कन्दादिरूपाः, मतौ कल्पनाक्लेशा ऊहापोहादयः । तथा च, यन्मतेरौत्कर्ष्यदर्शनात् कौटिल्येनेव मया च अहर्निशं महानायासोऽन्वभावि इति भावः । [ इदं दुःखप्रशमनं समयः । अत्र सेना-मत्योर्द्वयोरपि प्रकृतयोरायासितत्वरूपैकधर्मसम्बन्धात् तुल्ययोगिताऽलङ्कारः ] । पथ्यावक्त्रं वृत्तम् ॥ ८ ॥

(द) अभिवादनस्य स्वनामोल्लेखपूर्वं कर्त्तव्यत्वात 'विष्णुगुप्तः' इति नामोल्लेखः ; तथा च मनुः,—"अभिवादात् परो विप्रो ज्यायांसमभिवादयन् । असौ नामाऽहमस्मीति स्वं नाम परिकीर्त्तयेत् ।" [ २ अध्या० १२२ श्लोकः ] इति । एव-मुत्तरत्रापि द्रष्टव्यम् ।

(ध) श्वपाकस्पर्शदूषितं—श्वपाकः,—चण्डालः, तस्य स्पर्शेन दूषितः तम् ।

चाण। "अमात्यराक्षस! नायं श्वपाकः। अयं खलु दृष्टपूर्व एव भवता सिद्धार्थकनामा राजपुरुषः। योऽपि असौ द्वितीयः, सोऽपि सुसिद्धार्थकनामा राजपुरुष एव। एताभ्यामेव सह सौहार्दम् उत्पाद्य शकटदासोऽपि तपस्वी तं तादृशम् अजानन् एव कपटलेखं मया एव लेखितः। (न)

राक्ष। [आत्मगतम्]। दिष्ट्या शकटदासं प्रति अपनीतो विकल्पः। (प)

चाण। किं बहुना, सङ्क्षेपतः कथयामि—

ये ते भद्रभटादयः स च तथा लेखः स सिद्धार्थकः<br>
तच्चालङ्करणत्रयं स भवतो मित्रं भदन्तः किल।<br>
जीर्णोद्यानगतः स चार्त्तपुरुषः क्लेशः स च श्रेष्ठिनः<br>
सर्वोऽसौ मम—"………[ इत्यर्द्धोक्ते लज्जां नाटयति ]<br>
सर्वोऽसौ वृषलस्य वीर! भवता संयोगमिच्छोर्नयः॥ ८॥

---

(न) तपस्वी—अनपराधी, प्रागुक्तकूटलेखस्याजानता तेन लेखनेन दोषशून्यत्वात्। मया—हेतुकर्त्रा, लेखितः,—लिखितुं कारितः [ "हेतुमति च" (३।१।२६ पा०) इति हेतौ णिच् ]।

(प) विकल्पः,—संशयः, शकटदासेन तथा कृतं न वा? इत्येवम्प्रकारः। अपनीतः,—निरस्तः, अनेन वाक्येन इति शेषः।

राक्षसं वशीकर्तुं स्वयं विस्तारितं नीतिजालं कथयितुं स्वसहायानां गूढचराणां स्वरूपपरिचयमाह, ये ते इति। —ये ते चन्द्रगुप्तादपरागहेतुमुक्ता मलयकेतुमाश्रिताः, भद्रभटादयः भद्रभट आदिर्येषां ते, आदिशब्दात् भागुरायण-डिङ्गरातादयः बोद्धव्याः, तथा स च कृत्रिम इत्यर्थः, लेखः, स सिद्धार्थकः, तच्च अलङ्करणत्रयं त्रयः अलङ्काराः, स च भवतः मित्र सुहृत, भदन्तः बौद्धसन्न्यासी जीवसिद्धिः, किल अलीके, अलीकमित्रमित्यर्थः, जीर्णोद्यानगतः स च आर्त्तपुरुषः बन्धुवियोगदर्शनभयेन उद्बन्धनार्थं व्यवसित इत्यर्थः, श्रेष्ठिनः चन्दनदासस्य, स च क्लेशः वधार्थं वध्यस्थाननयनजनित इत्यर्थः, इत्युक्तसर्वव्यापाराणाम् आत्मकर्तृकत्वसूचनाय आह—"सर्वोऽसौ मम" इति, ततः स्वमुखेन स्वीदृगाचरितवर्णनमनुचितं संचिन्त्य "सर्वोऽसौ मम" इत्यर्द्ध-

तदेष वृषलस्त्वां द्रष्टुम् आगच्छति। पश्य एनम्। (फ)

राक्ष। [स्वगतम्]। का गतिः? [प्रकाशम्]। एष पश्यामि।

[ततः प्रविशति सेवकैः अनुगम्यमानो राजा]।

राजा। [स्वगतम्]। विनैव युद्धात् आर्य्येण पराजितं दुर्जयं रिपुकुलमिति, यत् सत्यं (ब) लज्जित इव अस्मि। मम हि—

फलयोगमवाप्य सायकानाम्
अनियोगेन विलक्षतां गतानाम्।
न शुचेव भवन्त्यधोमुखानां
निजतूणीशयनव्रतं प्रतुष्ट्यै ॥ १० ॥

---

मुक्त्वा तदपकृत्य च आह—"सर्व्वोऽसौ वृषलस्य" इत्यादि. हे वीर! [ अतिशूरः शाक्तो भवान् विक्रमादिना मलयकेतुवत् निपद्यीतुं न शक्य इति ध्वनयितुं वीरेति सम्बोधनम् ] असौ उक्तरूपः, सर्व्वः व्यापार इत्यर्थः, भवता सह संयोगं सम्मेलनम्, इच्छोः वृषलस्य चन्द्रगुप्तस्यैव, नयः नीतिः कौशलमिति यावत्, भवत्प्राप्त्याशयेन सर्व्वमेतत् चन्द्रगुप्तेनैव कृतं, न मयेति भावार्थः। [ "सर्व्वोऽसौ मम" इति स्वाभीष्टसिद्धान्तानुकूलोक्ति-पदविन्यासपक्षे—"मन्त्रिवीर!" इति योजनया पादपूर्त्तिः। इदं बीजवतां मुखाद्यर्थानां यथायथं विप्रकीर्णानाम् ऐकार्थ्योपनयनात् निर्वहणं नाम अङ्गं—"बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्। ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ॥" इति तल्लक्षणात् ]। शार्द्दूलविक्रीडितं वृत्तम् ॥ ९ ॥

(फ) एनं—चन्द्रगुप्तम्। [ "किञ्चित्कार्य्यं विधातुमुपात्तस्य कार्य्यान्तरं विधातुं पुनरुपादानमन्वादेशः" (४० ) इति अन्वादेशे "द्वितीयाटौःस्वेनः" ( २।४।३४ पा० ) इत्येतदः एनादेशः ]।

(ब) "असन्दिग्धे तु यत सत्यम्" इत्युक्तेः यत् सत्यमसन्दिग्धमित्यर्थः।

सायकानां रिपुवधादिकार्य्यानियोगावस्थां वर्णयन्नाह, फलयोगमिति।—फलयोगं फलेन लौहमयाग्रकीलेन, योगं सम्बन्धं, शल्ययोगम्, अन्यत्र—कार्य्यसिद्धिम्, अवाप्य प्राप्य अपि, अनियोगेन स्वकार्य्ये रिपुवधादौ नियोगाभावेन, विलक्षतां अलक्ष्यशून्यताम्, अन्यत्र—अयोग्योऽयमिति धिया कार्य्ये नियोगाभावेन सलज्जत्व, गतानां प्राप्तानाम्, अत एव शुचा कार्य्ये अनियोगजनितशोकेनेव, अधोमुखानां तूणीस्थतया ऊर्द्ध्वनयन-अवलोकनाभावेन स्थितानाम्, अन्यत्र—लज्जाजनितमनःक्षोभेण नतमुखानां, ("मम"

अथवा—

विगुणीकृतकार्मुकोऽपि जेतुं
भुवि जेतव्यमसौ समर्थ एव ।
स्वपतोऽपि ममेव यस्य तन्त्रे
गुरवो जाग्रति कार्य्यजागरूकाः ॥ ११ ॥

इति गद्यस्थं पदमत्रान्वितं ) सायकानां बाणानां, लक्षणया सहायानाञ्च, निजतूणी-श्रयनमेव निजतूणाः स्वशरधौ, यत् शयनं निश्चेष्टभावेनावस्थानमित्यर्थः, तदेव व्रतं नियमः, अन्यत्र—निजतूणौ लक्षणया स्वगृहमध्ये, यत् शयनं कार्य्याभावात् तूष्णीम्भाव-मावस्थानं, ( दृश्यते च लोके शोकार्त्ता लज्जिताश्च सदैवाधोमुखाः शेरते ). प्रतुष्ट्यै सन्तोषाय, न भवति । [ "विधियोगेन विपक्षतां गतानाम्" इति पाठे—विधियोगेन दैवयुक्त्या, विपक्षतां विरोधितां, गतानामिति विरोधः, विधियोगेन विधानवशेन, वीनां कङ्कपक्षिणां, पक्षा येषु तेषां भावः तत्तामिति विरोधपरिहारः, अन्यत्र—विधियोगेन अनिच्छतामपि दैववशेन, विपक्षतां गतानां कार्य्यकालेऽपि कार्य्याकरणात् शत्रु-वदाचरितवताम् ; अत एव शुचेव विपक्षवदाचरणजनितलज्जयैवेति हेतूत्प्रेक्षा । "शुचेव भवत्यधोमुखानां निजतूणीशयनव्रतप्रतिष्ठा" इति पाठे—अनियोगेन विपक्षतां गतानाम् अत एव शुचा इव अधोमुखानां मम सायकानां फलेन लौह-मयाग्रभागेन, व्रतसमाप्तिजनितपुण्यादिना च, योगं सम्बन्धम्, प्राप्यापि निज-तूणीशयनरूपस्य व्रतस्य प्रतिष्ठा समाप्तिः, भवति । व्रतसमाप्तौ हि फलप्राप्तिः शास्त्रसिद्धा, बाणानाञ्च तूणीशयनरूपे व्रते फलस्य रिपुजयस्य योगात् प्रतिष्ठा सिद्धैव । अत्र शुचेव इति उत्कटकोटिकसम्भावनाप्रतीतेरुत्प्रेक्षाऽलङ्कारः श्लिष्टविशेषणमहिम्ना उपमाऽलङ्कारश्च ध्वनितः ] । मालभारिणी वृत्तं—"विषमे ससजा यदा गुरू चेत् सभरा येन तु मालभारिणीयम्" इति लक्षणात् ॥ १० ॥

मदमात्यसहायक नृपतेः विनैव लोकक्षयं सर्वत्र विजय इति न मया लज्जितव्य-मिति पक्षान्तरमाह, विगुणीति ।—स्वपतः निद्रां गच्छतोऽपि, राज्यचिन्तापराङ्मुख-स्यापि इत्यर्थः, यस्य राज्ञः, मम इव तन्त्रे राष्ट्रचिन्तायां, ( "तन्त्रः स्वराष्ट्रचिन्तायाम्" इति कोषः) गुरवः गुरुजनाः, कार्य्यजागरूकाः कार्य्येषु जागरूकाः अवहिताः, अप्रमत्ताः सन्तः इति यावत्, जाग्रति यतन्ते, प्रतिविधानपराः तिष्ठन्ति इत्यर्थः, असौ नृपः, विगुणी-कृतकार्मुकोऽपि मौर्वीशून्यधनुष्कोऽपि, युद्धार्थं धनुषि ज्याऽऽरोपणमकुर्वन्नपीत्यर्थः, भुवि पृथिव्यां, जेतव्यम् अरिं, जेतुं समर्थ एव, अहमिव इति शेषः । [ अत्र प्रथमार्द्धवाक्यं

[ चाणक्यम् उपसृत्य ] । आर्य्य ! चन्द्रगुप्तः प्रणमति ।

चाण । वृषल ! सम्पन्नाः ते सर्व्वाशिषः । तत् अभिवादयस्व तत्रभवन्तम् अमात्यराक्षसम्; पैतृकस्तव अयम् अमात्य-मुख्यः । (भ)

राक्ष । [ स्वगतम् ] । योजितोऽनेन सम्बन्धः ।

राजा । [ राक्षसम् उपसृत्य ] । आर्य्य ! चन्द्रगुप्तोऽहम् अभिवादये ।

राक्ष । [ विलोक्य स्वगतम् ] । अये ! अयं चन्द्रगुप्तः !! य एषः,—

बाल एव हि लोकेन सम्भावितमहोदयः ।
क्रमेणारूढ़वान् राज्यं यूथैश्वर्य्यमिव द्विपः ॥ १२ ॥

[ प्रकाशम् ] । राजन् ! विजयस्व । (म)

राजा । आर्य्य !—

---

प्रति द्वितीयार्द्धस्य हेतुत्वात् वाक्यगतकाव्यलिङ्गं, मन्येवेत्युत्प्रेक्षा च, ताभ्याम् अनुप्राणिता विजयश्रीता: युद्धादिव्यापारात् विनाऽपि युद्धजयलाभप्रकटनात् विभावना-ऽलङ्कारः । इयं वाञ्छितार्थप्राप्तिरानन्दः ] । वृत्तं पूर्व्ववत्; अस्य औपच्छन्दसिकमिति नामान्तरम् ॥ ११ ॥

( भ ) पितुः आगतः पैतृकः, चन्द्रगुप्तस्य नन्देन मुरायामुत्पादितत्वात् तस्य नन्दात्मजत्वेन तत्सम्बन्धात् पैतृकत्वम् । अमात्येषु मुख्यः अयं राक्षसस्तेनैनम् अभि-वादयस्व इति निष्कर्षः ।

दीर्घकालानन्तरं विजयिनमधिकृतराज्यं चन्द्रगुप्तं दृष्ट्वा तस्य शैशवकालिकलक्षणा-दिकं स्मरन् प्रशंसयाह, बाल एवेति ।—बाल एव शिशुरेव, लोकैः सम्भावितमहोदयः सम्भावितः तर्कितः, महान् उदयः उन्नतिः यस्य तथाभूतः, बाल्यादारभ्य राजलक्षण-लक्षिततया महोन्नतो भविष्यतीति लोकैरनुमित इत्यर्थः, स्तुत एव यूथैश्वर्य्यं यूथपतित्वं, द्विपः हस्तिशावक इव, क्रमेण राज्यम् आरूढ़वान् प्राप । [ उपमाऽलङ्कारः ] । पथ्यावक्त्रं वृत्तम् ॥ १२ ॥

( म ) विजयस्व [ "विपराभ्यां जेः" ( १।३।१९ पा० ) इत्यात्मनेपदम् ] ।

जगतः किं न विजितं मयेति प्रविचिन्त्यताम्।
गुरौ षाड्गुण्यचिन्तायामार्य्ये चार्य्ये च जाग्रति ॥ १३ ॥

राजा। [ स्वगतम् ]। स्पृशति मां कौटिल्यशिष्यो भृत्यभावेन ; (य) अथवा विनय एवैषः (र) चन्द्रगुप्तस्य, मत्सरस्तु मे विपरीतं कल्पयति। (ल) सर्वथा स्थाने यशस्वी चाणक्यः। कुतः?—

द्रव्यं जिगीषुमधिगम्य जड़ात्मनोऽपि
नेतुर्यशस्विनि पदे नियता प्रतिष्ठा।

---

राजसमुत्थान विजयाशीर्वादमाकर्ण्य त्वद्विजयेन मे जगद्विजयो जात इति भङ्ग्या सविनयम् आह, जगत इति।—आर्य्ये गुरौ चाणक्ये, च तथा, चार्य्ये पैतृकामात्यत्वादतीव मान्ये त्वयि च, षाड्गुण्यचिन्तायां षड्गुणा एव षाड्गुण्यं सन्धिविग्रहादिव्यापारः, [ "चतुर्वर्णादीनां स्वार्थे उपसङ्ख्यानम्" ( वा० ) इति चतुर्वर्णादित्वात् स्वार्थे ष्यञ् ] तस्य चिन्तायां कर्त्तव्याकर्त्तव्यत्वभावनायां, जाग्रति सततमाने सति, मया जगतः [ "षष्ठी शेषे" ( २।३।५० पा० ) इति षष्ठी ] किं न जितम्? अपि तु सर्वमेव जितम् इति प्रविचिन्त्यताम् अवधार्य्यताम्। [ "आर्य्ये चार्य्ये च" इति प्रस्तुतयोः द्वयोरेव समधर्मत्वकथनात् तुल्ययोगिता, एकस्मिन्नार्य्ये कार्य्यसाधके सत्यपि अपरस्यापि तत्कारत्वात् समुच्चयः तथा उभयोः षाड्गुण्यचिन्ता एव मम त्रिभुवनविजयहेतुः इति पदार्थगतं काव्यलिङ्गम् इत्येतेषां संसृष्टिः ] पथ्यावक्त्रं वृत्तम् ॥१३॥

( य ) कौटिल्यस्य शिष्यः,—अनुशिष्ट इत्यर्थः, [ कार्त्तिकेयो विजेय इत्यादिवत् भूते कृत्यप्रत्ययः ] तेनायं न स्वतो विनीतः, किन्तु परप्रेरित इत्याशयः। भृत्यभावेन—विनेयतया, मां स्पृशति—तवाहं विनेय इत्युक्त्वा अवलम्बते।

( र ) चापलतः चन्द्रगुप्तस्य स्वतो विनयाभावमुक्त्वा तदपोह्य विनयेनैव तथाकथनमित्याह, विनय एवैष इति।—न चाणक्योपदर्शनेनैव कारव्यतस्कोऽयम्।

( ल ) मत्सर इति।—मे—मम, मत्सरः,—चन्द्रगुप्ते यो शुभद्वेषः, स एव तदुक्तं विपरीतम्—अन्यथाभिप्रेतमन्यरूपेण, कल्पयति—अवगमयति।

गुणवन्तं स्वामिनमाश्रितस्य अकुशलस्यापि सिद्धिम्, एतद्वैपरीत्ये च असिद्धिं फलतो विज्ञाय मूर्खस्य नन्दमलयकेतोरनभिज्ञता एव निपुणस्यापि स्वस्य असिद्धिनिदानमिति भङ्ग्या आह, द्रव्यमिति।—द्रव्यं सत्पात्रं, जिगीषुम् अधिगम्य प्राप्य, जड़ात्मनोऽपि अकुशल-

अद्रव्यमेत्य तु विविक्तनयोऽपि मन्त्री
शीर्णाश्रयः पतति कूलजवृक्षवृत्त्या ॥ १४ ॥

चाण। अमात्यराक्षस! अपि इष्यते चन्दनदासस्य जीवितम्? (ब)

राक्ष। भो विष्णुगुप्त! कुतः सन्देहः?

चाण। अमात्यराक्षस! अगृहीतशस्त्रेण भवता अनुगृह्यते वृषल इत्यतः सन्देहः; (भ) तत् यदि सत्यमेव चन्दनदासस्य जीवितमिष्यते, ततो गृह्यताम् इदं शस्त्रम्।

राक्ष। भो विष्णुगुप्त! मा मैवम्; अयोग्या वयम् एतस्य ग्रहणे, विशेषतः त्वया गृहीतस्य शस्त्रस्य।

---

स्यापि, किमुत कुशलस्येति भावः, नेतुः नायकस्य, उपदेष्टुरित्यर्थः, यशस्विनि यशः-प्रदायके, पदे स्थाने, प्राप्ता नियता निश्चिता, नियतमेव यशोलाभो भवेदित्यर्थः। तु किन्तु, मन्त्री विविक्तनयोऽपि विशुद्धनीतिप्रयोगचतुरोऽपि, अद्रव्यम् अयोग्यपात्रं, नीत्यनभिज्ञं प्रभुमित्यर्थः, एत्य प्राप्य, शीर्णाश्रयः सन् कूलजवृक्षवृत्त्या कूलजस्य तीर-जातस्य, वृक्षस्य या वृत्तिः वर्त्तनं, नियम इत्यर्थः तया, पतति भ्रश्यति, चाणक्यामः खेदातिशयं लभते इति भावः। तथा च, सत्पात्रत्वेन चन्द्रगुप्तस्य तदाश्रयेण चाणक्यस्य कार्य्यसिद्धा यशोलाभः, मलयकेतोः असत्पात्रत्वेन सुतरां तदाश्रयेण न कार्य्यसिद्धिः, प्रत्युत आत्मपतनमेव मम जातमित्याशयः। [अत्र चन्द्रगुप्ता-श्रितचाणक्यस्य विजयः मलयकेत्वाश्रयिणो राक्षसस्य पराजय इति विशेषे वक्तव्ये सामान्येनाभिहितत्वादप्रस्तुतप्रशंसा, तन्मूलेन सामान्येन विशेषस्य चाणक्यविजयादेः समर्थनात् "विषमप्यमृतं क्वचिद्भवेत" इत्यादिवदप्रस्तुतप्रशंसामूलोऽर्थान्तरन्यासः, जडात्मनोऽपि इत्यत्र अर्थान्तरापत्तनादर्थापत्तिश्च, तथा कूलजवृक्षवृत्त्या इत्यत्र वृक्ष इव इति बिम्ब-प्रतिबिम्बभावेनानिदर्शना, तदेतेषां सङ्करः]। वसन्ततिलकं वृत्तम् ॥ १४ ॥

(ब) एवं मनसि विचारयन्तं राक्षसं चन्द्रगुप्तसाचिव्याभ्युपगमाय प्रवर्त्तयति, अमात्येत्यादि।—साचिव्यमनभ्युपगम्य ताटस्थ्येन वृषलानुवर्त्तः अप्रयोजक इति भावः।

(भ) अनुगृह्यते—अनुकूलीक्रियते, कृतसन्धानस्य तत्कार्य्यकरणाय शस्त्र-ग्रहणस्य आवश्यकत्वात्। गृहीते च अमात्यपदवीस्वीकारसूचके शस्त्रे सन्धानं निश्चितं स्यात्, अगृहीते सन्देह इति भावः।

चाण। अमात्यराक्षस! योग्योऽहम् अयोग्यो भवान्!! इति कथमेतत्? पश्य—

अश्वैः सार्द्धमजस्रदत्तकविकाक्षामैरशून्यासनान्
स्नानाहारविहारपानशयनस्वेच्छासुखैर्वर्जितान्।
माहात्म्यादतिपौरुषस्य भवतो दृप्तारिदर्पच्छिदः
पश्यैतान् परिकल्पनाव्यतिकरप्रोच्छूनवंशान् गजान् ॥१५॥

अथवा किमनेन? न खलु भवतः शस्त्रग्रहणम् अन्तरेण चन्दनदासस्य जीवितमस्ति। (ख)

---

राक्षसोक्तां तदयोग्यतां स्वयोग्यताञ्च आकर्ण्य चाणक्यः तत्सङ्कटे सैन्यायास-वर्णनमुखेन तन्नीतिचातुर्यं प्रदर्श्य तद्योग्यतां समर्थयमान आह, अश्वैरिति।—दृप्तारिदर्पच्छिदः दृप्तानां गर्वितानाम्, अरीणां दर्पं छिनत्तीति तस्य दर्पोद्धतशत्रु-गर्वापहारिणः, अतिपौरुषस्य अतिविक्रान्तस्य, भवतः माहात्म्यात् प्रभावात्, अजस्र-दत्तकविकाक्षामैः अजस्रम् अनवरतं, दत्ताभिः मुखे योजिताभिः, कविकाभिः खलीनैः, 'कडियाली' इति ख्यातैः वल्गासंलग्नलौहमयद्रव्यविशेषैरित्यर्थः, ("कविका तु खलीनोऽस्त्री" इत्यमरः) क्षामैः क्षीणैः, क्लिष्टैरित्यर्थः, अश्वैः वाजिभिः, सार्द्धम् अशून्यासनान् अशून्यानि आसनानि, निषादिभिरिति भावः येषां तान्, युद्धार्थं सततसज्जितानित्यर्थः, स्नानादिभिः स्वेच्छासुखैः यथेच्छव्यापारैः, वर्जितान् विरहितान्, परिकल्पनाव्यतिकर-प्रोच्छूनवंशान् परिकल्पनायाः रणसज्जाविशेषस्य, व्यतिकरः सम्पर्कों येषां ते, प्रोच्छूनः महान्, वंशो येषां ते, अतिकृशकाय इत्यर्थः, ततः कर्मधारयः तथाभूतान्, यद्वा—परिकल्पनायाः रणसज्जाविशेषस्य, व्यतिकरेण सम्पर्केण, प्रोच्छूनाः महान्तः, स्फीता इत्यर्थः, वंशाः पृष्ठास्थिभागा येषां तथाभूतान् एतान् गजान् पश्य अवलोकय, भवद्विक्रमप्रभावात् क्षणमपि सेनाकटकस्याश्वादेर्न विश्रान्तिः इति तव नायोग्यता इति भावः। ["दत्तकविकैः क्षामैरशून्यासनैः" इत्यपि पाठो दृश्यते। अत्र अश्वानां गजानाञ्च प्रकृतत्वेन एकधर्माभिसम्बन्धात् तुल्ययोगिताऽलङ्कारः, तेन च राक्षसस्य वीर्योत्कर्षो व्यज्यते]। शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

(ख) किमिति।—भवत्परिक्लेशकथनेन किं प्रयोजनम्? साचिव्यपदं भवता अवश्यमङ्गीकर्त्तव्यमित्याह—न खल्विति।

राक्ष। [स्वगतम्]।—

नन्दस्नेहकणाः स्पृशन्ति हृदये भृत्योऽस्मि तद्विद्विषां
ये सिक्ताः स्वयमेव पाणिपयसा च्छेद्यास्त एव द्रुमाः।
शस्त्रं मित्रशरीररक्षणकृते व्यापारणीयं मया
कार्य्याणां गतयो विधेरपि न यान्त्यालोचनागोचरम्॥ १६॥

[प्रकाशम्]। भो विष्णुगुप्त! उपानय खड्गम्। नमः सर्व-

मित्रप्राणरक्षणार्थं शस्त्रग्रहणेऽनुरुद्धः स्वयं पोषितस्य मलयकेतोर्भाव्यनिष्टमाशंसमानः चित्तनिर्विण्णः किंकर्त्तव्यविमूढः कर्त्तव्यं चिन्तयन्नाह, नन्दस्नेहकणा इति।—नन्दस्नेहकणाः नन्दानां नन्देषु वा स्नेहस्य कणाः लेशाः, (तेषां मृतत्वात् तदन्वयस्य चात्यन्तोच्छिन्नप्रायत्वाच्च स्नेहकणा इत्युक्तम्) हृदये स्पृशन्ति इदानीमपि तेषां मृतत्वेऽपि तद्गुणस्मरणेन भक्तवत्सलत्वेन च मर्माणि मथ्नन्ति, तथाऽपि तेषां नन्दानां, विद्विषां भृत्यः भरणीयः, अस्मि दासतामाप्तः स्वामित्यर्थः, ये द्रुमाः मलयकेतुप्रभृतिरूपाः, स्वयमेव पाणिपयसा हस्तरूपजलेन, सिक्ताः आसिच्य वर्द्धिताः इत्यर्थः, नन्दराज्योद्धरणेच्छया सहायत्वेन चाणक्यकूटनीतिभयात् सर्वदा स्वयं रक्षिताः इति भावः, ते एव छेद्याः विनाश्याः [ "ये सिक्ताः स्वयमेव वृद्धिमगमंस्त्वत्राप्त एव द्रुमाः" इति पाठे—ये नन्दाः गर्भनिष्क्रमणात् प्रभृति तैलद्रोण्यां निधानादिना महता यत्नेन मया पालिताः अवर्द्धन्त ते सम्प्रति नष्टा इति तदर्थः ]; मित्रशरीररक्षणकृते चन्दनदासदेहरक्षार्थं, शस्त्रम्, अमात्यग्राह्यमिति शेषः, मया व्यापारणीयं धार्य्यम्, अन्यथा तस्य मुक्तिर्नास्तीति भावः। ["शस्त्रं मित्रशरीरकेषु सततं व्यापारणीयं मया" इति पाठे—मित्राणां नन्दकुलबान्धवानां, शरीरकेषु देहेषु, शस्त्रं सततं सन्ताडेन मया, सदा सर्वस्मिन् समये, व्यापारणीयं मुद्रादौ पालनीयं, चन्द्रगुप्तरक्षाग्रहणं च नन्दमित्रवधार्थमुद्योगः कार्य्यः, स च सर्वथाऽपि स्वयं संवर्द्धितस्वच्छन्दनिवानुचितमिति भावः] तथा हि, विधेः दैवस्य, कार्य्याणां गतयः आलोचनागोचरं विचारविषयतामपि, न यान्ति, तथा च, दैवगतिरेवात्र नियामिका, मया किं विचारणीयम्? इति भावः। [अत्र नन्दराज्योद्धारप्रतिकूलतया अनादरणीयमपि चन्द्रगुप्तसाचिव्यं करणीयमेव इति विशेषस्य विधिवशात् दुर्ज्ञेयविधेरिति सामान्येन समर्थनादर्थान्तरन्यासोऽलङ्कारः, तथा मलयकेत्वादौ द्रुमत्वस्य तादात्म्येनाभेदारोपः पाणिजलस्याभेदारोपे निमित्तमिति परम्परितरूपकमित्यनयोः संसृष्टिः]। शार्दूलविक्रीडितं वृत्तम्॥ १६॥

कार्य्यप्रतिपत्तिहेतवे सुहृत्स्नेहाय। (स) का गतिः? एष सज्जोऽस्मि। (ह)

चाण। [खड्गं राक्षसम् अर्पयित्वा]। वृषल! वृषल! अमात्यराक्षसेन इदानीं गृहीतशस्त्रेण अनुगृहीतः दिष्ट्या वर्द्धते भवान्।

राजा। आर्य्यप्रसाद एष चन्द्रगुप्तेन अनुभूयते। (क)

[प्रविश्य पुरुषः]। जेदु जेदु अज्जो। अज्ज! एसो क्खु भद्दभट-भाउरामणप्पमुहेहिं संजमिअकलचलणो मलअकेदू पडिहारभूमिए अवत्थापिदो, ता एव्वं सुणिअ एत्थ अज्जो पमाणं त्ति। *

चाण। श्रुतम्। भद्र! निवेद्यताम् (ख) अमात्यराक्षसाय, अयम् इदानीं राजकार्य्यं करिष्यति।

राक्ष। [स्वगतम्]। कथम्!! दासीकृत्य इदानीं विज्ञापनाय मां मुखरीकरोति कौटिल्यः!! का गतिः? [प्रकाशम्]। राजन्! चन्द्रगुप्त! विदितमेव यथा वयं मलयकेतौ किञ्चित् कालान्तरम् उषिताः, तत् परिरक्ष्यन्ताम् अस्य प्राणाः।

राजा। [चाणक्यमुखम् अवलोकयति]।

---

* जयति जयति आर्य्यः। आर्य्य! एष खलु भद्रभट भागुरायणप्रमुखैः संयमितकरचरणो मलयकेतुः प्रतिहारभूमौ अवस्थापितः, तदिदं श्रुत्वा अत्र आर्य्यः प्रमाणमिति।

---

(स) सुहृत्स्नेहेन अकर्त्तव्यमपि कर्त्तव्यं भवेत् इति भावः।

(ह) सज्जोऽस्मीति।—[इदं प्राप्तकार्य्यानुमोदनम् आभाषणमङ्गम्]।

(क) आर्य्येति।—भवदनुग्रहेणैव एतत् सर्वं मया लब्धमिति भावः। [इदं लब्धस्थिरीकरणं कृतिर्नामाङ्गम्]।

(ख) भद्र निवेद्यतामिति।—[इदम् इष्टकार्य्यदर्शनं पूर्वभावो नामाङ्गम्]।

चाण। वृषल! प्रतिमानयितव्योऽयम् (ग) अमात्यराक्षसस्य प्रथमः प्रणयः। [पुरुषम् अवलोक्य]। भद्र! अस्मद्वचनात् (घ) उच्यन्तां भद्रभटप्रभृतयः, "अमात्यराक्षसविज्ञापितो (ङ) देवः चन्द्रगुप्तः प्रयच्छति मलयकेतवे पित्र्यमेव विषयम्; अतो गच्छन्तु भवन्तः सह अनेन, प्रतिष्ठिते च अस्मिन् पुनः आगन्तव्यम्"।

पुरु। जं अज्जो आणवेदि त्ति। *

चाण। तिष्ठ तावत् भद्र!, भद्र! एवम् अपरम् उच्यतां विजयपालो दुर्गपालश्च, "अमात्यराक्षसस्य गृहीतशस्त्रस्य प्रीत्या देवश्चन्द्रगुप्तः समाज्ञापयति, एष तावत् श्रेष्ठी चन्दनदासः पृथिव्यां सर्वेषु नगरेषु श्रेष्ठिपदम् आरोप्यताम्" इति।

पुरु। जं अज्जो आणवेदि। †

[इति निष्क्रान्तः]।

चाण। भो राजन्! चन्द्रगुप्त! किं ते भूयः प्रियं करोमि? (च)

राजा। किमतः परं प्रियमस्ति?—

---

* यदार्य्य आज्ञापयति इति।

† यदार्य्य आज्ञापयति।

---

(ग) प्रतिमानयितव्य इति।—यद्यपि "अवशेषं न शेषयेत्" इति शास्त्रात् मलयकेतुर्न मोचनीय इति, तथाऽपि राक्षसस्य साचिव्यग्रहणप्रथमप्रार्थनाऽवश्यं मानयितव्येत्यर्थः।

(घ) भद्रभटादयः राक्षसस्य साचिव्ये संशयानास्तद्वचनं न करिष्यन्ति इत्यस्मद्वचनादित्युक्तम्।

(ङ) एतद्विशेषणं स्वयं तथाऽप्रकृतेनापि राक्षसेन स्वस्मिन्नेवमुपक्रान्तमिति राक्षसतोषाय मलयकेतुना परिज्ञातव्यम् इत्यभिप्रेत्य चाणक्येन प्रयुक्तमिति बोद्धव्यम्।

(च) इदानीं चन्द्रगुप्तस्य राज्यलक्ष्मीः स्थिरीभूतेत्यध्यवसायात् 'वृषल' शब्दमपहाय "राजन्!" इति सम्बोधनम्। मलयकेतुनन्दराक्षससङ्ग्रहरूपं प्रियं कृतम्, अतोऽधिकं पुनः किं ते प्रियं करोमि? इत्याह—किं ते इति।

राक्षसेन समं मैत्री राज्ये चारोपिता वयम्।
नन्दाश्चोन्मूलिताः सर्वे किं कर्त्तव्यमतः परम्? ॥ १७ ॥

चाण। विजये! उच्यतां दुर्गपालो विजयपालश्च, "अमात्य-राक्षसपरिग्रहेण प्रीतो देवश्चन्द्रगुप्तः समाज्ञापयति, विना हस्त्यश्वं क्रियतां सर्वबन्धमोक्षः" इति। अथवा, अमात्यराक्षसे नेतरि किं हस्त्यश्वेन प्रयोजनम्? तदिदानीं—

सह वाहनहस्तिभ्यां मुच्यतां सर्वबन्धनम्।
मया पूर्णप्रतिज्ञेन केवलं बध्यते शिखा ॥ १८ ॥

[ इति शिखां बध्नाति ]।

प्रती। जं अज्जो आणवेदि। *

[ इति निष्क्रान्ता ]।

* यदार्य्य आज्ञापयति।

---

चाणक्येन कर्त्तव्यावशेषं पृष्टश्चन्द्रगुप्तः त्वयैव सम्पादिताशेषकर्त्तव्यतया नापरं किञ्चिदस्तीत्याह, राक्षसेनेति।—स्पष्टार्थः श्लोकः। [ अत्र योग्यकर्मप्रख्यातिवादैः योग्यस्य समुपयुक्तपदार्थनिमित्तकः समनामाऽलङ्कारः; तदुक्तं विश्वनाथेन—"समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः" इति ]। पथ्यावक्त्रं वृत्तम् ॥ १७ ॥

राक्षसे मन्त्रिणि सति अन्यत् सर्वं निष्प्रयोजनमिति सर्वबन्धनमोचनाज्ञाप्रदानमुखेन प्रतिज्ञातार्थसिद्धेरिदानीं मे शिखाबन्धनकालः समायातः इत्याह, सह वाहन-हस्तिभ्यामिति।—वाहनश्च हस्ती च वाहनहस्तिनौ ताभ्याम् अश्वगजाभ्यामित्यर्थः, [ अत्र "फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानां बहुप्रकृतिरेव द्वन्द्व एकवदिति वाच्यम्" (वा०) इति बहुप्रकृतित्वाभावात् नैकवद्भावः इति बोध्यम् ] सह सर्वबन्धनं सर्वेषां बन्धनं निगडनियमनं, मुच्यतां निर्ग्रन्थीक्रियतां, किन्तु पूर्णप्रतिज्ञेन नन्दान्वयो-न्मूलनात् तीर्णप्रतिज्ञार्णवेन, मया केवलं शिखा बध्यते। तस्या नन्दोन्मूलनात् प्राक् उन्मुक्तत्वात् इदानीञ्च तदुन्मूलनात् बन्धनमुचितं, नान्यस्य हस्त्यश्वादेर्बन्धनमपेक्षितं, कृतकृत्यत्वादिति भावः। [ अत्र परस्परविरुद्धयोः बन्धनमोचनयोः सङ्घटनात् विषमालङ्कारः, "विरूपयोः सङ्घटना या च तद्विषमं मतम्" इति दर्पणकारोक्तेः ] पथ्यावक्त्रं वृत्तम् ॥ १८ ॥

चाण। अमात्यराक्षस! तदुच्यतां, किं ते भूयः प्रियम् उपकरोमि? (छ)

राक्ष। किमतः परमपि प्रियमस्ति? यदि न परितोषः, तदिदमस्तु—

भरतवाक्यम्। (ज)

वाराहीमात्मयोनेस्तनुमतनुबलामास्थितस्यानुरूपां
यस्य प्राग्दन्तकोटिं प्रलयपरिगता शिश्रिये भूतधात्री।
म्लेच्छैरुद्वेज्यमाना भुजयुगमधुना पीवरं राजमूर्त्तेः
स श्रीमद्बन्धुभृत्यश्चिरमवतु महीं पार्थिवश्चन्द्रगुप्तः॥ १९॥

[इति निष्क्रान्ताः सर्वे]।

इति सप्तमोऽङ्कः॥ ७॥

---

(छ) मलयकेतुजीवनदान स्वराज्यप्रतिष्ठापनरूपं चन्दनदासबन्धनमोचन सकल-नगरश्रेष्ठिपदलाभरूपञ्च तव महत् प्रियमनुष्ठितम्, एतस्मादधिकं किं ते भूयः प्रियमनुतिष्ठामि? इत्याह—अमात्यराक्षस इति। [अनेन काव्यसंहाररूपं निर्वहणाङ्गं प्रदर्शितम्; तथा च दर्पणे—"वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते" इति]।

(ज) भरतवाक्य—भरतस्थानीयेन नटेन अभिधीयमानवाक्यम्; अभिनयावसाने नटश्रेणेः अन्वाय्यत्वात् नाट्यशास्त्रोपदेशकस्य भगवतो महर्षेः भरतस्य शुभशंसन-सूचनार्थञ्च नटपदमपहाय भरतपदं नीतम्; तथा च, वक्ष्यमाणः श्लोकः नटेनैव पठनीयः।

नाटकीयरीतिमनुसृत्य चाणक्यकर्त्तव्यावशिष्टकथनमिषेण चन्द्रगुप्तस्य शुभमाशंसमान आह, वाराहीमिति।—प्रलयपरिगता प्रलयनिमग्ना, भूतधात्री भूतानां प्राणिनां धात्री पृथिवी, अनुरूपां योग्याम्, अतनुबलां महाबलां, वाराहीं वराहस्य इयं वाराही तां शौकरीं, तनुम् आस्थितस्य आश्रितस्य, यस्य आत्मयोनेः स्वयम्भुवः आदिवराहमूर्त्तेर्भगवतः श्रीविष्णोः, दन्तकोटिं दंष्ट्राग्रं, प्राक् पुरा, शिश्रिये श्रिता, अधुना म्लेच्छैः म्लेच्छजातीयैः राजभिः, उद्वेज्यमाना उत्पीड्यमाना सती, सा एव इति शेषः, राजमूर्त्तेः राजा चन्द्रगुप्त एव, मूर्त्तिः शरीरं यस्य "ना विष्णुः पृथिवीपतिः" इति स्मरणादिति भावः, तथाभूतस्य चन्द्रगुप्तरूपमूर्त्तिधारिणः, तस्यैव भगवतः इति शेषः, पीवरं स्थूलं, भुजयुगं शिश्रिये इत्यनुषङ्गः; स विष्णुमूर्त्तिः असौ, पार्थिवः चन्द्रगुप्तः श्रीमद्बन्धुभृत्यः श्रीमन्तः बन्धवः भृत्याश्च यस्य तादृशः सन्, चिरं महीं पृथिवीम्, अवतु रक्षतु। (पुरा किल विष्णुः प्रलयपयोधौ निमग्नां वसुधां

वराहमूर्त्तिं धृत्वा दंष्ट्राऽग्रभागेन उज्जहार इति पौराणिकी वार्त्ता। "आदिमध्यान्त-मङ्गलानि शास्त्राणि झटिति प्रसिद्धये वीरपुरुषाण्यायुष्मत्पुरुषाणि च भवन्ति" इत्यादि श्रीमन्महाभाष्यकारभगवत्पतञ्जलिपादानुशासनात् कविर्विशाखदत्तोऽस्य नाटके आदौ "धन्या केयं स्थिता ते शिरसि ?" इत्यादिनाऽऽद्युक्तश्लोकद्वयेन श्रीमद्भगवतो महेश्वरस्य गुणानुवादरूपमङ्गलमाचरितवान्। मध्येऽपि शरद्वर्णनाऽवसरे "आकाशं काशपुष्प-च्छविम" इति श्लोकेन भगवच्छङ्करस्य, "प्रत्यग्रोन्मेषजिह्मा" इति श्लोकेन च भगवतो नारायणस्य गुणानुकीर्त्तनरूपमङ्गलमनुष्ठितवान्। अन्ते च अनेन श्लोकेन आदिवराह-रूपिणो भगवतो जगत्कारणस्य प्रलयपयोधिमग्नायाः भुवः उद्धरणरूपगुणकीर्त्तनात्मकं मङ्गलं कृतवान्। अनेन मङ्गलाचरणेन उपास्योपासकभेदज्ञानदशायामपि "अभेदः शिव-रामयोः" इत्याद्युक्त्या उपास्ययोर्हरि-हरयोरभेदज्ञानम् अखिलश्रेयोनिमित्तत्वेन श्रुति स्मृति-पुराणादिप्रसिद्धमित्युक्तं भवति। हरि हरयोरभेदोपासनपराणि वचनानि महाभारतादिषु द्रष्टव्यानि ; तद्यथा—"नामानि तव गोविन्द ! यानि लोके महान्ति च। तान्येव मम नामानि नात्र कार्य्या विचारणा॥ त्वदुपासा जगन्नाथ ! सैवास्तु मम गोपते !। आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते !। यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु॥" इति। अत्र "अयं हि धूर्जटिः साक्षात् येन दग्धाः पुरः क्षणात्" इतिवत् श्रीविष्णोश्चन्द्रगुप्तस्य च तादात्म्याभेदकथनाद्रूपकालङ्कारः। अनेन प्रशस्तिर्नाम निर्वहणाङ्गं प्रदर्शितम् ; तथा च दर्पणे—"नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते" इति ]। स्रग्धरा वृत्तम्॥ १९॥

इत्यशेषशास्त्राटवीसञ्चरणपञ्चानन-कुलपतिकल्प "बि, ए" इत्युपनामक-
श्रीमज्जीवानन्दविद्यासागर भट्टाचार्य्यविरचितायां, तदात्मजाभ्यां
श्रीमदाशुबोधविद्याभूषण श्रीमन्नित्यबोधविद्यारत्नाभ्यां
परिवर्त्तित परिवर्द्धितायां सुखबोधिनी-
समाख्यायां मुद्राराक्षसव्याख्यायां
सप्तमोऽङ्कः॥ ७॥

